न कालस्य न शक्रस्य न विष्णोर्वित्तपस्य च ।
कर्माणि तानि श्रूयन्ते यानि युद्धे हनूमतः ॥ ८
एतस्य बाहुवीर्येण लङ्का सीता च लक्ष्मणः ।
प्राप्तो मया जयश्चैव राज्यं मित्राणि बान्धवाः ॥ ९
हनूमान्यदि मे न स्याद्वानराधिपतेः सखा ।
प्रवृत्तिमपि को वेत्तुं जानक्याः शक्तिमान्भवेत् ॥ १०
किमर्थं वाली चैतेन सुग्रीवप्रियकाम्यया ।
तदा वैरे समुत्पन्ने न दग्धो वीरुधो यथा ॥ ११
न हि वेदितवान्मन्ये हनूमानात्मनो बलम् ।
यद्दृष्टवाञ्जीवितेष्टं क्लिश्यन्तं वानराधिपम् ॥ १२
एतन्मे भगवन्सर्वं हनूमति महामुने ।
विस्तरेण यथातत्त्वं कथयामरपूजित ॥ १३
राघवस्य वचः श्रुत्वा हेतुयुक्तमृषिस्ततः ।
हनूमतः समक्षं तमिदं वचनमब्रवीत् ॥ १४ G. 7. 38. 65 B. 7. 35. 14 L. 7. 38. 17

---

$M_{10}$ भयाद् (for बन्धाद्). $V_{1.3}$ $D_{9}$ बंधन- (for बन्धाद्वि-). — $^{b}$) $\acute{N}$ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.9}$ $G_{1}$ $\acute{N}_{1}$ -मुक्तं च (for -मुक्तेन). — $^{b}$) Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.9}$ $G_{1}$ संभाष्य च ($D_{1.3.4}$ तु); $D_{6.7.10.11}$ $T_{4}$ भाषयित्वा (for संभाषित्वा). — $^{c}$) Ñ $B_{1.3}$ $D_{12}$ $T_{1.2}$ $M_{3.7.10}$ [अ]नेन; $D_{6.7.10.11}$ $T_{4}$ $G_{2}$ येन (for तेन). — $^{d}$) $G_{2}$ $M_{4}$ [ए]व (for [इ]व). $\tilde{N}_{2}$ $B_{1.3.4}$ लांगू($B_{3}$ °गु)लस्थेन वह्निना.

8 $^{b}$) $D_{2.9}$ वायोर् (for विष्णोर्). $\tilde{N}_{2}$ $V_{3}$ $B_{4}$ $D_{6}$ $T_{1-3}$ $G_{1.3}$ $M_{2-5.7.9}$ धनद($D_{6}$ °प)स्य; $V_{1}$ $B_{3}$ $D_{1-5.9}$ $M_{1}$ वित्तदस्य (for वित्तपस्य). $\tilde{N}_{1}$ $B_{3}$ $D_{2.5}$ $T_{1-3}$ $G_{3}$ $M_{1.2.4.5.7-10}$ वा (for च). — $^{cd}$) Ś $D_{8.12}$ [ए]तानि; $D_{6.7}$ तस्य (for तानि). Ñ $V_{1.3}$ $B_{1.4}$ $D_{1-5.9}$ श्रू($V_{3}$ स्तू)यंते तानि कर्माणि (for $^{c}$). $\tilde{N}_{2}$ युद्धे यानि (by transp.); $V_{3}$ $D_{1.3-5}$ यादृशानि; $B_{1}$ पूर्वे यानि; $D_{6}$ यानि तस्य (for यानि युद्धे). $G_{2}$ transp. तानि and यानि. —After 8, $\tilde{N}_{1}$ $V_{1}$ ins.:

700* श्रुत्वागस्त्यस्य वचनं राघवः श्रीविवर्धनः ।
उवाच रामो वचनमगस्त्यमृषिसत्तमम् ।

9 $^{a}$) Ś $D_{8.12}$ वीर्येण मया. — $^{b}$) $\tilde{N}_{2}$ लब्धा (for लङ्का). $V_{3}$ सीता लंका (by transp.). $\acute{S}_{2}$ $B_{3.4}$ $D_{8.12}$ $T_{1}$(before corr. *inf. lin. pr.m.* as in text).$_{2}$ $G_{3}$ $M_{1.3.5.9}$ [अ]थ (for च). — $^{c}$) $\tilde{N}_{1}$ प्राप्तं; $\tilde{N}_{2}$ $B_{1.3.4}$ $D_{6.7.10.11}$ $T_{3.4}$ प्राप्ता (for प्राप्तो). Ś $D_{8.12}$ नयश्; $\tilde{N}_{1}$ $V_{3}$ यशश् (for जयश्). — $^{d}$) $D_{5}$ राज- (for राज्यं). $D_{12}$ बांधवः.

10 $^{a}$) $\tilde{N}_{2}$ $B_{3.4}$ न स्याच्च (for मे न स्याद्). —For $10^{ab}$, $\tilde{N}_{1}$ $V_{1.3}$ $D_{1-4.9}$ subst.:

701* सखायं वानरपतिं मुक्त्वैनं हरिपुंगवम् ।

[$\tilde{N}_{1}$ $V_{1}$ सहायं. $D_{1.3.4}$ -पतेर् (for -पतिं). $\tilde{N}_{1}$ $V_{1.3}$ [ए]वं (for [ए]नं). $\tilde{N}_{1}$ -पुंगवः; $V_{3}$ -यूथपः (for -पुंगवम्).] —$D_{11}$ reads from त्तुं in $^{c}$ up to $^{d}$ in marg. — $^{cd}$) Ś $D_{8.12}$ प्रवृत्तावपि कश्चास्या (for $^{c}$). $D_{2.9}$ transp. को वेत्तुं and जानक्याः. $D_{3}$ शक्ति ***त्.

11 $^{a}$) $T_{2}$ कथं नु. Ś $D_{6-8.12}$ $T_{1}$ $G_{3}$ वालिर्; $M_{7.8}$ वालि-; $M_{5}$ वापि (for वाली). $\tilde{N}_{1}$ $V_{1.3}$ $D_{1.2.4.9}$ $T_{2}$ वाली किमर्थम् (by transp.); $D_{3.5}$ वालिः किमर्थम् (for किमर्थं वाली). Ś $\tilde{N}_{1}$ $V_{1.3}$ $D_{1-9.12}$ $T_{1.3}$ एतेन; $G_{1.2}$ $M_{1.3.5.10}$ [अ]नेनैव; $G_{3}$ वा तेन; $M_{7.8}$ -वातेन (for चैतेन). $T_{4}$ वालिना तेन (for वाली चैतेन). $\tilde{N}_{2}$ $B_{1.3.4}$ तदेवं बलयुक्तेन. — $^{b}$) $D_{2.9}$ -हित- (for -प्रिय-). — $^{c}$) $\tilde{N}_{2}$ $B_{1.3.4}$ वाली; $T_{2.3}$ $M_{1.2.9}$ Ck तथा; Ct as in text (for तदा). $D_{8}$ om. वैरे. $G_{3}$ तदा वैरः समुत्पन्नो. — $^{d}$) $M_{9}$ दग्धा. Ñ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.9}$ $T_{6}$ तृणवन्मुने(Ñ $B_{1.3.4}$ °त्कथं; $V_{1.3}$ °द्रुने) (for वीरुधो यथा). Ś $D_{8.12}$ न नीतो यमसादनं. ❀ Cv : किमर्थं वाली चैतेनेति पाठः। न हि वेदितवान्मन्य इति च।; Cg : किमर्थमिति। वीरुध इत्यकारान्तो वृक्षवाची।; Ck : सुग्रीवप्रियकाम्यया वालिघाते किमर्थं न प्रवृत्तः। पदच्छेदवशतो गूढत्वादुक्त एवार्थः स्पष्टीक्रियते मुनिना। तथा वैर इत्यादि। वीरुध इत्यकारान्तो वृक्षवाची।; Ct : वीरुध इत्यकारान्तो वृक्षवाची। 'किमर्थं वालिघातेन' इति पाठे सुग्रीवप्रियकाम्यया वालिघाते किमर्थं न प्रवृत्त इत्यर्थः। पदच्छेददोषपूरणाभ्यां गूढत्वात्तस्यैव विवरणम्-तदा वैर इत्यादि. ❀.

12 $D_{3}$ om. (hapl. see var.) $12-13^{b}$. — $^{a}$) $\tilde{N}_{1}$ $V_{1.3}$ $D_{1.2.4.5.9}$ $T_{4}$ $M_{3}$ [अ]यं; $D_{7}$ [अ]हं; $G_{1}$ तु (for हि). $\tilde{N}_{1}$ $V_{1.3}$ $D_{1.2.6}$ $T_{4}$ $M_{3}$ विदितवान्; $\tilde{N}_{2}$ $B_{1.4}$ विज्ञातवान्; $D_{5}$ हि वेद नो; $M_{1}$ वेद तदा (for वेदितवान्). $B_{3}$ क्षाजौ (for मन्ये). — $^{c}$) $D_{8}$ om.; $M_{10}$ यं (for यद्). $M_{8}$ यो दृष्टो वा (for यद्दृष्टवान्). $T_{3}$ जीवितेष्टः. $\tilde{N}_{1}$ उपेक्षिते च तस्मिंस्तत्; $\tilde{N}_{2}$ $B_{1.3.4}$ श्रांतवान्यत्प्रियं($\tilde{N}_{2}$ °न्यः प्रियैः) प्राणैः; $V_{1.3}$ $D_{2.9}$ $T_{4}$ उपेक्षितं($T_{4}$ °क्ष्यते) च यन्मित्रं; $D_{1.4}$ यदुपेक्षितवान्मित्रं; $M_{2.9}$ दृष्ट्वाजीविताद्दिष्टः($M_{2}$ °ष्टं).

13 $D_{3}$ om. $13^{ab}$ (cf. v.l. 12). — $^{ab}$) $G_{1}$ $M_{4}$ भगवान्; $G_{2}$ जीवितं (for भगवन्). $V_{1}$ महाबले; $T_{1.2}$ °मते; $M_{3}$ °मतौ (for महामुने). $\tilde{N}_{2}$ $V_{3}$ $B_{3.4}$ चरितं वै($V_{3}$ तु; $B_{3}$ मे) हनूमतः (for $^{b}$). $B_{1}$ एतस्मिन्मे चरितं सर्वं भगवन्वै हनूमतः (hypm.). ❀ Cg : हनूमत्येतदिति हनूमद्विषये पृष्टमित्यर्थः. ❀ — $^{c}$) $\acute{S}_{2}$ महातत्त्वं; $B_{1}$ यथापूर्वं (for यथातत्त्वं). — $^{d}$) $G_{2}$ कथं वा (for कथय). $\tilde{N}_{2}$ $V_{3}$ $D_{2}$ [अ]मरपूजितः; $D_{9}$ [अ]मितविक्रम (for [अ]मरपूजित). Ś $D_{8.12}$ निखिलं कथयस्व मे; $V_{1}$ $B_{1}$ कथयस्व महामुने($B_{1}$ समाहितः). —After 13, $\tilde{N}_{2}$ ins. an addl. colophon:

[कारण ** (illeg.) तत्कथनं. 36.]

14 $\tilde{N}_{1}$ om. $14^{ab}$. — $^{a}$) Ś $D_{8.12}$ रामस्य वचनं श्रुत्वा.

G. 7. 38. 66
B. 7. 35. 15
L. 7. 38. 18
सत्यमेतद्रघुश्रेष्ठ यद्ब्रवीषि हनूमतः ।
न बले विद्यते तुल्यो न गतौ न मतौ परः ॥ १५
अमोघशापैः शापस्तु दत्तोऽस्य ऋषिभिः पुरा ।
न वेदिता बलं येन बली सन्नरिमर्दनः ॥ १६
बाल्येऽप्येतेन यत्कर्म कृतं राम महाबल ।
तन्न वर्णयितुं शक्यमतिबालतयास्य ते ॥ १७
यदि वास्ति त्वभिप्रायस्तच्छ्रोतुं तव राघव ।
समाधाय मतिं राम निशामय वदाम्यहम् ॥ १८
सूर्यदत्तवरस्वर्णः सुमेरुर्नाम पर्वतः ।
यत्र राज्यं प्रशास्त्यस्य केसरी नाम वै पिता ॥ १९
तस्य भार्या बभूवेष्टा ह्यञ्जनेति परिश्रुता ।
जनयामास तस्यां वै वायुरात्मजमुत्तमम् ॥ २०

—$^{b}$) $\tilde{N}_2$ $B_{3.4}$ $T_{1,2}$ $G_3$ $M_{1.3.10}$ तदा; $D_6$ $G_2$ तथा (for तत: ). $D_7$ महानृषि: (for ऋषिस्तत: ). —$^{c}$) $\tilde{N}$ $D_{2.9}$ तद् ; $D_5$ (with hiatus) हि; $T_3$ (with hiatus) तु (for तम् ). —$^{d}$) $\tilde{N}_2$ $B_{1.3.4}$ राघवं वाक्यमब्रवीत् .

15 $^{a}$) $D_{1.4}$ तथ्यम् (for सत्यम् ). $V_3$ -पते (for -श्रेष्ठ ). —$^{b}$) $B_1$ ब्रवीमि (for ब्रवीषि ). $D_{6.7.10.11}$ $T_1$ हनूमति. —$^{c}$) $Ś_{1.3}$ $D_8$ यद्बले( $Ś_1$ °लं ); $Ś_2$ यद्बाल्ये; $B_3$ बले न (by transp. ); $D_2$ न बलैर् (for न बले ). —$^{d}$) $D_3$ तु (for second न ). $D_{1.4}$ प्रभाव्; $M_2$ समौ (sic) (for मतौ ). $\tilde{N}_2$ $B_{1.4}$ transp. गतौ and मतौ. $\tilde{N}_1$ $V_1$ $D_{1-4.9}$ $T_3$ अपि; $\tilde{N}_2$ $B_{1.3.4}$ $G_1$ तथा; $V_3$ क्वचित् ; $D_3$ पुर:; $M_1$ परं (for पर: ).

16 $^{a}$) $B_1$ च शापो (for शापस्तु ). $\tilde{N}_2$ °वाक्यैर्मुनिभि:. —$^{b}$) $Ś_3$ [ऽ]स्ति (for ऽस्य ). $Ś$ $\tilde{N}_1$ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.7-12}$ $T_{1.3.4}$ $M_1$ मुनिभि: (for ऋषिभि: ). $\tilde{N}_2$ शापो दत्तो हनूमत:. —$^{cd}$) $T_{1-3}$ $G_3$ $M_{5.8}$ वेदितं; $M_4$ वेदितो; $M_{10}$ वेद तद् (for वेदिता ). $D_{6.7.10.11}$ न वेत्ता हि बलं सर्वं (for $^{c}$). $D_{6.10.11}$ $T_3$ -मर्दन. $Ś$ $D_{8.12}$ न च वेद बलं येन बलिनां बलमर्दनं( $D_{12}$ °न ). —For 16$^{cd}$, $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.9}$ $T_4$ subst. :

702* न ज्ञातं हि बलं येन बलिना वालिमर्दने ।

[ $T_4$ वा (for हि ). $\tilde{N}_1$ $D_{1.4.5}$ तेन (for येन ). $D_5$ बलिनाम्. $V_1$ $D_9$ बलि- (for वालि- ). $V_3$ $D_9$ $T_4$ -मर्दन (for -मर्दने ). $D_5$ अरिमर्दनं. ];

while $\tilde{N}_2$ $B_{1.3.4}$ G (ed.) subst. :

703* न ज्ञातवानयं येन बली सद्बलमात्मन: ।

[ $B_1$ नो (for न ). $\tilde{N}_2$ स; $B_1$ च (for सद्- ). G (ed.) बलवान् (for बली सद्- ). $B_3$ बलिना वारिमर्दने (for the post. half ). ]

17 $^{a}$) $D_{1.8}$ बाले; $G_3$ बालो; Cg as in text (for बाल्ये ). $Ś$ $\tilde{N}_2$ $V_3$ $B_{1.3.4}$ $D_{1.3-6.8}$ [ऽ]प्यनेन; $V_1$ $G_2$ $M_{10}$ तेन च( $V_1$ तु ) (for ऽप्येतेन ). $D_{2.9}$ बालेनानेन. —$^{b}$) $Ś$ वै सु-; $D_{12}$ कर्म (sic) (for राम ). $Ś$ $\tilde{N}_2$ $V_3$ $B_{1.4}$ $D_{1-5.8.9.12}$ महात्मना; $V_1$ हतात्मना (for महाबल ). $B_3$ कृतं वा रघुनंदन. —$^{c}$) $\tilde{N}_2$ $D_{2.9}$ न तद् (by transp.) (for तन्न ). $D_{2.9}$ कथयितुं (for वर्ण° ).

—$^{d}$) $D_{6.7.10.11}$ $T_{1-3}$ $G_{1.3}$ $M_{3.5.8}$ इति; Cv as in text (for अति- ). $D_{6.7.10.11}$ $M_{1.5}$ Ct बाल्यतया; $T_{1.2}$ $G_{1.3}$ $M_3$ तूष्णीं मया; Cv.g.k as in text (for -बालतया ). $Ś$ $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_4$ एतस्य बलिनो महत्( $D_5$ °नोरपि ); $\tilde{N}_2$ $B_{1.3.4}$ अश्रद्धेयं पृथग्जनै:; $G_2$ मतिहीनतयास्य ते. ❀ Cv : अतिबालतयास्य ते इति । न कस्यचिदप्यतिबाल्य एतत्संभाव्यत इति बुद्धिर्भविष्यति । अतोऽर्थस्यासंभाव्यत्वात् सहसा वक्तुं न शक्यते ।; Cg.k: बालतया अास्यत इति (Cg बालतया ) बालभावेन अजानते( Cg °तै )वेत्यर्थ: ।; Ct: बाल्यतया बाल्यभावेन । अजानतेवेत्यर्थ: । अनेनास्यते. ❀

18 $^{a}$) $V_1$ $D_{2.6.7}$ $G_2$ $M_{4.5.7.9}$ च (for वा ). $V_1$ $D_{2.9}$ $T_4$ हि (for तु ). $Ś$ $D_{8.12}$ चाप्यस्ति; $\tilde{N}_2$ $B_4$ तेन्नास्ति; $B_1$ चेदस्ति (for वास्ति तु ). $B_3$ यदि तेस्त्यभिप्रायस्तु (unmetric). —$^{b}$) $B_1$ तं; $D_{6.7.10.11}$ सं- (for तच् ). $B_3$ श्रोतुं त्वं (for तच्छ्रोतुं ). $\tilde{N}_2$ $B_{3.4}$ रघुनंदन; $V_3$ त्वं विशांपते (for तव राघव ). $D_{1.3.4}$ तव श्रोतुं च राघव. —$^{c}$) $Ś_3$ $D_{8.12}$ गतिं; $G_3$ मतं (for मतिं ). $G_2$ वीर (for राम ). $D_{2.9}$ [ए]कभावेन (for मतिं राम ). $\tilde{N}_2$ $B_{1.3.4}$ तत: समाधाय मनो( $B_{1.3}$ °तिं ). —$^{d}$) $G_2$ शृणु राम; Cg.k.t as in text (for निशामय ). $B_4$ ममानघ.

19 $^{a}$) $Ś$ $V_{1.3}$ $D_{1.2.4.6-8.12}$ $M_3$ -वर: (for -वर- ). $Ś$ $D_{8.12}$ पूर्वं; $D_5$ -स्वर्ण-; $M_3$ श्रीमान् (for -स्वर्ण: ). $\tilde{N}_2$ $B_{3.4}$ अस्ति रत्नमय: श्रीमान् ; $B_1$ आस्ते रत्नमय: स्वर्ण:. —$T_4$ damaged for $^{b}$. ❀ Cg : सूर्यदत्तवरस्वर्ण: सूर्यदत्तवरेण स्वर्णरूप: । सुमेरु: सुवर्णमेरु: ।; so also Ck.t. ❀ —$^{cd}$) $T_4$ तत्र; $M_7$ तस्य (for यत्र ). $M_5$ [आ]र्य: (for [अ]स्य ). $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.9}$ तत्रास्ते ( $\tilde{N}_1$ $V_{1.3}$ °सु )बलवानस्य (for $^{c}$). $T_{1.2}$ $G_2$ $M_{2.4.8.9}$ केसरिर्. $D_{1.4}$ राम (for नाम ). $\tilde{N}_2$ $B_{1.3.4}$ तत्रास्य केशरी ना( $\tilde{N}_2$ °रिर्ना )म पिता राज्यं प्रशास्ति वै.

20 $^{a}$) $D_7$ या च; $T_4$ यस्य (for तस्य ). —$^{b}$) $B_1$ $D_5$ $M_{5.10}$ (all with hiatus) अंजनेति; $D_{1.4}$ ह्यंजनीति ( $D_4$ °नाति- ) (for ह्यञ्जनेति ). $B_1$ $T_1$ प्रतिश्रुता; $D_{6.7}$ च वि°; $T_2$ सती श्रुता; $M_3$ प्रवि°; Cg.k.t as in text (for परिश्रुता ). —$^{c}$) $\tilde{N}$ $B_3$ तु; $V_3$ $B_4$ च; $B_1$ स (for वै ). $D_{1.4}$ तत्रैव; $D_{2.3.5.9}$ तत्रैनं; $T_4$ यस्यां वै; $M_1$ वै तस्यां (by transp.) (for तस्यां वै ). —$^{d}$) $Ś$ $\tilde{N}$ $V_3$ $B_{3.4}$ $D_{8.12}$ पवन: सुतमुत्तमं( $Ś$ $D_{8.12}$ पुरुषोत्तम ); $V_1$ $D_{1-5.9}$ पवनो बलवांस्तदा( $V_1$ $D_{2.9}$ °था ); $B_1$ वीर्यवंतमनुत्तमं.

शालिशूकसमाभासं प्रासूतेमं तदाञ्जना ।
फलान्याहर्तुकामा वै निष्क्रान्ता गहनेचरा ॥ २१
एष मातुर्वियोगाच्च क्षुधया च भृशार्दितः ।
रुरोद शिशुरत्यर्थं शिशुः शरभराडिव ॥ २२
ततोद्यन्तं विवस्वन्तं जपापुष्पोत्करोपमम् ।
ददृशे फललोभाच्च उत्पपात रविं प्रति ॥ २३
बालार्काभिमुखो बालो बालार्क इव मूर्तिमान् ।
ग्रहीतुकामो बालार्कं प्लवतेऽम्बरमध्यगः ॥ २४
एतस्मिन्प्लवमाने तु शिशुभावे हनूमति ।
देवदानवसिद्धानां विस्मयः सुमहानभूत् ॥ २५
नाप्येवं वेगवान्वायुर्गरुडो न मनस्तथा ।
यथायं वायुपुत्रस्तु क्रमतेऽम्बरमुत्तमम् ॥ २६
यदि तावच्छिशोरस्य ईदृशौ गतिविक्रमौ ।
यौवनं बलमासाद्य कथं वेगो भविष्यति ॥ २७ G. 7.38.78 B. 7.35.27 L. 7.38.30

21 $^{a}$) $V_{3}$ बालसूर्य-; $D_{1.4}$ सालिशूक-; $D_{2}$ पावकार्क-; $G_{3}$ $M_{2.8}$ शाली($M_{2}$ °लि)शुक- (for शालिशूक-). $\tilde{N}_{1}$ $V_{1.3}$ $D_{1-5.10.11}$ $T_{1.2}$ $G_{3}$ $M_{1.3}$ Cg.k.t -निभाभासं; $\tilde{N}_{2}$ $B_{1.3.4}$ -चयासं च($B_{1}$ तं); $G_{2}$ -समानाभासं (hypm.) (for -समाभासं). ❀ Cg : शालिशूकनिभाभासं शाल्यग्रवत् पिङ्गलाभासम् । "काञ्चनाद्रिकमनीयविग्रहम्" इत्युक्तेः ।; Ck.t : शालिशूकनिभाभासं शाल्यग्रसमानवर्णम्. ❀ —$^{b}$) $\tilde{N}_{1}$ $B_{3}$ $D_{12}$ $T_{3}$ $G_{1}$ $M_{4.8.9}$ Ck प्रसूता; $\tilde{N}_{2}$ $B_{1.4}$ $D_{1.3.4}$ $M_{7}$ प्रसूय; Cg.t as in text (for प्रासूत). $V_{3}$ $B_{3}$ [ए]नं; $M_{8}$ [इ]दं (for [इ]मं). $\tilde{N}_{1}$ $D_{5}$ ह्ये($D_{5}$ सु)तमंजना. $V_{1}$ $D_{2.9}$ सु($D_{2}$ सू)त्वा क्षेत्रजमंजना ($V_{1}$ °सा); $T_{1}$ $M_{3}$ प्रसूते मंदरेंजना; $G_{2}$ संप्रसूते तदांजना. ❀ Cg.k.t : प्रासूत(Ck प्रसूता) प्रसूतवती. ❀ —$^{c}$) $M_{10}$ फलम् (for फलानि). $M_{8}$ -कामो (for -कामा). $\acute{S}_{2.3}$ $\tilde{N}$ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.8.9.12}$ $T_{4}$ सा (for वै). —$^{d}$) $T_{4}$ damaged from गहने up to एष मा in 22$^{a}$. $\tilde{N}_{1}$ $D_{2.9}$ च वनं तदा; $D_{6}$ $M_{1.2.4.5.9}$ गगनेचरा; $D_{8.10.11}$ ग($D_{8}$ वा)हने वरा (for गहनेचरा). $\tilde{N}_{2}$ $V_{1}$ $B_{1.3.4}$ विनिष्क्रांता तदा वनं($V_{1}$ वनं तदा); $V_{3}$ निष्क्रामच्च रणेचरा; $D_{1.3-5}$ निष्क्रांता च वनेचरा; $M_{8}$ निष्क्रांतो गगनेचरः.

22 $T_{4}$ damaged up to एष मा in $^{a}$ (cf. v.l. 21). —$^{a}$) $D_{8}$ $G_{1}$ एवं (for एष). $T_{3}$ $M_{5}$ मातृ- (for मातुर्). $D_{2.5.9}$ वि($D_{9}$ नि)योगेन (for वियोगाच्च). —$^{b}$) $B_{3.4}$ क्षुधा चैव (for क्षुधया च). $B_{3}$ तृषार्दितः. $D_{5}$ $G_{2}$ क्षुधा च($D_{5}$ °धया) भृशमर्दितः. —$^{c}$) $B_{1.3.4}$ रुराव. $T_{4}$ $M_{4}$ भृशम् (for शिशुर्). —$^{d}$) $\tilde{N}_{2}$ $B_{1.4}$ गिरौ; $B_{3}$ ततः; $D_{6}$ $T_{3}$ $G_{3}$ गुहः (for शिशुः). $V_{3}$ ** (lacuna) भराडिव; $B_{1}$ शरभवच्चिव; $D_{1.3.4}$ पतगराडिव; $D_{5-7.10.11}$ T $G_{2.3}$ $M_{1.3.4}$ शरवणे यथा($D_{5}$ °णेति च; $T_{3}$ $M_{4}$ °णादिव); G (ed.) करभराडिव. Ś $D_{8.12}$ यथैव श($D_{8.12}$ स)रभः ($\acute{S}_{3}$ शभरः [meta.]) शिशुः. ❀ Cg.k : शरवणे शिशुः स्कन्दः (Ck °शुरिति। कुमारस्वामीत्यर्थः) ।; so also Ct. ❀

23 $^{a}$) Ś $\tilde{N}_{1}$ $D_{1-5.8.9.12}$ $T_{3}$ अ($D_{12}$ त)थोद्यंतं; $\tilde{N}_{2}$ $V_{1}$ $B_{3.4}$ $D_{6.10.11}$ $T_{1}$ $G_{2}$ $M_{2-4.8.10}$ तदो°; $M_{1}$ तत्रो° (for ततोद्यन्तं). —$^{b}$) $\tilde{N}_{1}$ $D_{5}$ $T_{4}$ -[उ]त्करप्रभं; $T_{1.2}$ $G_{3}$ -[उ]त्कटोपमं; $M_{3}$ -समप्रभं (for -[उ]त्करोपमम्). —Note hiatus between $^{c}$ and $^{d}$. —$^{c}$) $\tilde{N}$ $V_{1.3}$ $B_{1.4}$ $D_{1-6.9-11}$ $T_{4}$ $M_{3.8}$ ददर्श; $G_{1}$ अपश्यत् (for ददृशे). Ś -लोभाच्च (sic); $D_{3.9}$ -लाभाय (for -लोभाच्च). —$^{d}$) $\tilde{N}$ $B_{4}$ $D_{1-4.7.9-11}$ $T_{1.4}$ $M_{3}$ ह्यु($\tilde{N}$ $B_{4}$ प्रो)त्पपात; $B_{1}$ स्वात्प° (for उत्पपात). $D_{2.5.9}$ च तं (for रविं).

24 $^{b}$) $T_{4}$ damaged from इव up to ग्रही in $^{c}$. Ś $D_{8}$ -[अ]र्कातप-; $G_{1}$ -[अ]र्कस्तु स; $G_{2}$ -[अ]र्कसम- (for -[अ]र्क इव). —$^{c}$) $\tilde{N}_{2}$ $B_{1.4}$ ततो ग्रहीतुं($B_{1}$ °हार्थं [sic]). —$^{d}$) Ś $V_{3}$ $D_{1-5.8.12}$ पुप्लुवे; $D_{9}$ पुप्लाव (for प्लवते). $T_{3.4}$ -मध्यगं (for -मध्यगः). $\tilde{N}_{1}$ प्लवमानस्तदांबरं; $\tilde{N}_{2}$ $B_{1.3.4}$ G (ed.) पुप्लुवेंबरमाशुगः(G [ed.] °स्थितः); $V_{1}$ प्लवतांबरमव्ययं; $G_{1}$ $M_{2.4.5.7}$ प्लवते हनुमान्बली; $G_{3}$ $M_{10}$ प्लवतेंबरमुत्तमं.

25 $\acute{S}_{2}$ om. 25–26. —$^{b}$) $B_{4}$ $D_{1.3-5}$ -भावाद् (for -भावे). $D_{2.9}$ शिशुभावेन वै तदा. —$^{c}$) $B_{1}$ $D_{3.6.7.10.11}$ $T_{3.4}$ -यक्षाणां (for -सिद्धानां). —$^{d}$) $B_{1}$ च; $D_{9}$ स (for सु-).

26 $\acute{S}_{2}$ om. 26 (cf. v.l. 25). —$^{a}$) $\tilde{N}$ $V_{1.3}$ $B_{1.3.4}$ $D_{1-5.9}$ $T_{4}$ हि (for [अ]पि). $B_{1}$ [अ]यं; $M_{8}$ [ए]नं (for [ए]वं). $V_{3}$ धृतवान्; $T_{4}$ बलवान् (for वेगवान्). —$^{b}$) $D_{2}$ $T_{1.3}$ $G_{3}$ $M_{3}$ वा (for न). $\tilde{N}_{2}$ $B_{3.4}$ न गरुत्मान्; $B_{1}$ गरुत्मान्वा (for गरुडो न). $\tilde{N}_{2}$ $B_{3}$ $D_{2.9}$ [ऽ]थ वा; $B_{1.4}$ [ऽ]पि वा (for तथा). $\acute{S}_{1.3}$ $D_{8.12}$ गरुडो वा पतत्रवान्; $M_{1.2}$ न मनो गरुडस्तथा. —$T_{4}$ damaged from यु in $^{c}$ up to ऽम्ब in $^{d}$. —$^{c}$) $\acute{S}_{1.3}$ $\tilde{N}_{2}$ $B_{1.3.4}$ $D_{8.12}$ $T_{3}$ $G_{1}$ $M_{4.7.9}$ वै; $D_{3}$ च; $M_{2}$ [ऽ]पि; $M_{5}$ यैः (for तु). $D_{2.9}$ यदेतद्वीर्यमासाद्य. —$^{d}$) $D_{2}$ क्रमति; $D_{9}$ क्रामति (for क्रमते). $\tilde{N}_{2}$ $B_{1.3.4}$ क्रा($B_{3}$ क्र)मत्यंबरमध्यगः.

27 $D_{9}$ om. 27. Note hiatus between $^{a}$ and $^{b}$. —$^{a}$) $B_{1.3.4}$ अयं (for यदि). —$^{b}$) $G_{1}$ तादृशौ; $M_{1}$ हीदृशौ (for ईदृशौ). $\acute{S}_{1.3}$ $D_{1.3-5.8.12}$ स्वीदृशो ग($D_{5}$ ह्य)ति($D_{8}$ भाति)विक्रमः; $\acute{S}_{2}$ $\tilde{N}$ $V_{1.3}$ $B_{1.3.4}$ $D_{2.7.11}$ ईदृशो गतिवि($\tilde{N}_{2}$ $B_{1.3.4}$ हि परा)क्रमः; $D_{6}$ ईदृशी गतिविक्रिया. —$^{c}$) $\tilde{N}_{2}$ $B_{1.3.4}$ यौवने. $V_{3}$ आस्थाय (for आसाद्य). —$^{d}$) $\tilde{N}_{2}$ $B_{1.3.4}$ कीदृशोस्य($\tilde{N}_{2}$ °यं); $D_{2}$ कीदृग्वेगो (for कथं वेगो).

G. 7. 38. 79 B. 7. 35. 28 L. 7. 38. 31 तमनुप्लवते वायुः प्लवन्तं पुत्रमात्मनः ।
सूर्यदाहभयाद्रक्षंस्तुषारचयशीतलः ॥ २८
बहुयोजनसाहस्रं क्रमत्येष ततोऽम्बरम् ।
पितुर्बलाच्च बाल्याच्च भास्कराभ्याशमागतः ॥ २९
शिशुरेष त्वदोषज्ञ इति मत्वा दिवाकरः ।
कार्यं चात्र समायत्तमित्येवं न ददाह सः ॥ ३०
यमेव दिवसं ह्येष ग्रहीतुं भास्करं प्लुतः ।
तमेव दिवसं राहुर्जिघृक्षति दिवाकरम् ॥ ३१
अनेन च परामृष्टो राम सूर्यरथोपरि ।
अपक्रान्तस्ततस्त्रस्तो राहुश्चन्द्रार्कमर्दनः ॥ ३२
स इन्द्रभवनं गत्वा सरोषः सिंहिकासुतः ।
अब्रवीद्भ्रुकुटीं कृत्वा देवं देवगणैर्वृतम् ॥ ३३
बुभुक्षापनयं दत्त्वा चन्द्रार्कौ मम वासव ।
किमिदं तत्त्वया दत्तमन्यस्य बलवृत्रहन् ॥ ३४

28 $^{a}$) Ñ$_{2}$ B$_{1.3.4}$ चानु( B$_{1}$ °थ )पुप्लुवे ( for अनुप्लवते ). M$_{5}$ ततस्तदा ववौ वायुः. —$^{b}$) Ñ$_{1}$ V$_{1}$ D$_{1.3.4}$ आत्मजं ( for आत्मनः ). Ñ$_{2}$ B$_{1.3.4}$ प्लवमानं तदात्मजं; V$_{3}$ गच्छंतं सुतमात्मनः. —After 28 $^{ab}$, Ś Ñ$_{1}$ V$_{1.3}$ D$_{1-4.8.9.12}$ ins. :

704* तस्मात्सर्वेषु भूतेषु हनुमान्पवनात्तरः ।
स्थैर्याद्धैर्यात्तु गाम्भीर्याच्च समोऽस्तीह कश्चन ।

[ (l. 1) Ś D$_{8}$ प्राणेषु; D$_{12}$ वीरेषु ( for भूतेषु ). V$_{1}$ transp. भूतेषु and हनुमान्. —(l. 2) V$_{1}$ धैर्याद् ( for स्थैर्याद् ). V$_{1}$ D$_{1-4.9}$ वीर्याच्च् ( for धैर्यात् ). V$_{1.3}$ D$_{1.3-5}$ च ( for तु ). Ś D$_{3.12}$ [ऽ]स्तीति; D$_{5}$ [ऽ]हेति ( for ऽस्तीह ). ]
—$^{c}$) T$_{1-3}$ G$_{2.3}$ M$_{1.2.4.5}$ सूर्याद्. T$_{1}$ G$_{2.3}$ M$_{1.2.4.5.8}$ -भयं ( for -भयाद् ). Ś D$_{8}$ रक्षति ( for रक्षंस् ). Ñ$_{2}$ B$_{1.3.4}$ सूर्यदाहादरक्षच्च ( Ñ$_{2}$ °च्च रक्षन्वै ). —$^{d}$) Ñ$_{2}$ B$_{1.3.4}$ D$_{7}$ -कण-; D$_{6}$ -कर-; G$_{1}$ -मय- ( for -चय- ). Ś D$_{8}$ [ए]नं वायुस्तु; Ñ$_{1}$ V$_{1.3}$ D$_{1-5.9.12}$ वायुस्तु( V$_{3}$ °श्च ) हिम-( Ñ$_{1}$ D$_{1-4}$ °स्तुहिन- ); G$_{2}$ तुषारयति ( for तुषारचय- ).

29 D$_{9}$ om. 29. T$_{4}$ damaged from साहस्रं in $^{a}$ up to $^{b}$. —$^{a}$) D$_{2}$ वायुर् ( for बहु- ). —$^{b}$) Ñ$_{1}$ चक्रामैष; Ñ$_{2}$ B$_{1.3.4}$ प्रक्रांतोयं; D$_{1.3.4.10.11}$ T$_{2}$ क्र( D$_{4.10.11}$ क्रा )मत्येव( D$_{1.3.4}$ °ष ); M$_{7}$ क्रमिस्त्वैष ( for क्रमत्येष ). B$_{1.3.4}$ तदा; D$_{6.7.10.11}$ T$_{1-3}$ G M$_{1.3-5.8.9}$ गतो ( for ततो ). Ś D$_{8.12}$ M$_{7}$ ततोंबरे; Ñ V$_{3}$ नभस्तलं( Ñ$_{2}$ °ले ); V$_{1}$ नभःसुतं; M$_{10}$ ततो बली. —$^{c}$) Ś D$_{8.12}$ दुर्बल( D$_{8}$ °लभ )त्वाच्; D$_{5}$ पितुर्वाक्याच् ( for पितुर्बलाच् ). Ñ$_{2}$ वेगाच्; T$_{3}$ G$_{1}$ M$_{2.3.5.9}$ वीर्याच् ( for बाल्याच् ). —$^{d}$) Ś D$_{1-5.8.12}$ भास्करेण समागतः; Ñ$_{2}$ B$_{1.3.4}$ भास्करेणाभिरक्षितः; T$_{3}$ सूर्याभ्याशमुपागतः.

30 $^{a}$) Ś Ñ B$_{1.3.4}$ D$_{2.8.9.12}$ हि; V$_{1}$ D$_{1.3.5}$ [ऽ]पि ( for तु ). V$_{3}$ [ऽ]प्यदोषः स्याद्; D$_{4}$ [ऽ]थ दोषज्ञ; D$_{6}$ T$_{1.2}$ G$_{2.3}$ न दोषज्ञ; M$_{4}$ त्वरोषज्ञ ( for त्वदोषज्ञ ). ⊛ Cg k.t: दोषज्ञः विद्वान् स न भवतीत्यदोषज्ञः । Cg adds "दोषज्ञौ वैद्यविद्वांसौ" इत्यमरः(?). ⊛ —$^{b}$) Ś Ñ V$_{1.3}$ D$_{1-5.8.9.12}$ T$_{1.2}$ M$_{3}$ दिने( V$_{3}$ सुरे )श्वरः; B$_{1.3.4}$ विरोचनः ( for दिवाकरः ). —V$_{3}$ om. 30$^{c}$–31. —$^{c}$) D$_{6.7.10.11}$ T$_{3.4}$ G$_{1.2}$ M$_{3.4}$ चास्मिन्; D$_{9}$ चास्य; M$_{10}$ अत्र ( for चात्र ). V$_{1}$ समापन्नम्; D$_{1-5}$ समायां( D$_{2.5}$ °या )तम् ( for समायत्तम् ). Ś D$_{8.12}$ सूर्य एवं समायांतम्. —$^{d}$) Ś$_{2}$ B$_{4}$ D$_{2}$ G$_{3}$ [ए]त्रा; D$_{1.3-5.12}$ T$_{3}$ M$_{8}$ [ए]नं; G$_{2}$ [ए]तं ( for [ए]वं ). Ñ$_{1}$ मत्वा ( for [ए]वं न ). Ś D$_{8}$ तं ( for सः ).

31 V$_{3}$ om. 31 ( cf. v.l. 30 ). D$_{9}$ om. from 31 up to राम in 32$^{b}$. —$^{a}$) B$_{1}$ तमेव; D$_{12}$ यमेवं; G$_{2}$ यदि मे ( for यमेव ). Ñ$_{2}$ B$_{1}$ राम; B$_{3.4}$ चैव; D$_{6.7}$ ह्येवं ( for ह्येष ). —$^{b}$) B$_{1}$ प्लुतं; D$_{1-5}$ T$_{3}$ M$_{1}$ गतः ( for प्लुतः ). Ñ$_{1}$ V$_{1}$ ग्रहीतुं प्रति भास्करं. —$^{d}$) Ś D$_{8.12}$ जिग्रासति; Ñ$_{1}$ अजिघृक्षद् ( for जिघृक्षति ). G$_{1}$ विभावसुं ( for दिवाकरम् ). Ñ$_{2}$ B$_{1.3.4}$ चकार ग्रहणे मतिं.

32 D$_{9}$ om. up to राम in 32$^{b}$ ( cf. v.l. 31 ). —$^{a}$) B$_{1}$ परेण. Ś Ñ V$_{1.3}$ B$_{1.3.4}$ D$_{1-5.8.12}$ T$_{4}$ तु; K (ed.) Cg स ( for च ). T$_{4}$ damaged from परा up to $^{b}$. Ñ$_{2}$ B$_{1.3.4}$ M$_{3}$ परामृष्टे; D$_{6.7}$ पुरा दृष्टो; Cg.k.t as in text ( for परामृष्टो ). —$^{b}$) D$_{2.6.7.10-12}$ M$_{5}$ राहुः ( for राम ). Ñ$_{1}$ D$_{1-5}$ M$_{7}$ -रथो( M$_{7}$ °थे )धुरि; Ñ$_{2}$ B$_{1.3.4}$ -रथेध्वनि; G$_{3}$ -रथांतिके ( for -रथोपरि ). —$^{c}$) V$_{3}$ अपक्रामत्. Ś D$_{8.12}$ तदा त( D$_{12}$ °तस्त )स्थौ; V$_{3}$ T$_{6}$ M$_{10}$ ततो राहुस्; B$_{3}$ ततो राम; D$_{2.9}$ तु( D$_{9}$ च ) तत्रस्थो; M$_{3}$ त्वतस्त्रासो; L (ed.) तदा त्रस्तो ( for ततस्त्रस्तो ). —$^{d}$) T$_{4}$ रवेश्; M$_{10}$ तदा ( for राहुश् ). Ñ$_{1}$ -मर्दने; T$_{1}$ -कर्शनः; T$_{2}$ -दर्शनः; M$_{9}$ -मर्दनं ( for -मर्दनः ). V$_{3}$ चंद्रार्कस्यातिमर्दनः.

33 $^{a}$) Ś Ñ$_{1}$ V$_{1.3}$ D$_{1-5.8.9.12}$ M$_{8}$ स चेंद्र-; D$_{6.7.10.11}$ T$_{4}$ इंद्रस्य ( for स इन्द्र- ). D$_{5}$ -भुवनं. —$^{b}$) V$_{3}$ D$_{1.2.4.9}$ T$_{1}$ G$_{3}$ M$_{1.3.8.10}$ सरोषं. —$^{c}$) D$_{1}$ भ्रकुटिं; D$_{2-5.8.10-12}$ T M$_{1-3.5}$ भ्रु( D$_{3.4}$ T$_{3}$ भृ; M$_{1.2}$ भ्रू )कुटिं ( for भ्रुकुटीं ). —$^{d}$) Ñ$_{1}$ V$_{1.3}$ D$_{1-5.9}$ T$_{4}$ शक्रं देव-( D$_{1.3.4}$ चैव ); T$_{3}$ M$_{2.9}$ देवदेवं; G$_{3}$ देव देव- ( for देवं देव- ). —For 33, Ñ$_{2}$ B$_{1.3.4}$ subst.:

705* अथ दृष्ट्वा हनूमन्तं जिघृक्षन्तं तु भास्करम् ।
अब्रवीत्सत्वरं गत्वा राहुः शक्रमिदं वचः ।

[ (l. 1) B$_{1}$ अद्य ( for अथ ). —(l. 2) B$_{3}$ त्वरितं ( for सत्वरं ). ]

34 $^{a}$) D$_{6}$ T$_{3}$ M$_{5}$ -[अ]पनये; G$_{1}$ M$_{10}$ -[अ]पनयौ ( for -[अ]पनयं ). G$_{1}$ M$_{1.10}$ Ck कृत्वा; Ct as in text ( for दत्त्वा ). Ś D$_{3.12}$ भक्ष्याविमौ हि नैवास्तां; Ñ V$_{1.3}$

अथाहं पर्वकाले तु जिघृक्षुः सूर्यमागतः ।
अथान्यो राहुरासाद्य जग्राह सहसा रविम् ॥ ३५
स राहोर्वचनं श्रुत्वा वासवः संभ्रमान्वितः ।
उत्पपातासनं हित्वा उद्वहन्काञ्चनस्रजम् ॥ ३६
ततः कैलासकूटाभं चतुर्दन्तं मदस्रवम् ।
शृङ्गारकारिणं प्रांशुं स्वर्णघण्टाट्टहासिनम् ॥ ३७
इन्द्रः करीन्द्रमारुह्य राहुं कृत्वा पुरःसरम् ।
प्रायाद्यत्राभवत्सूर्यः सहानेन हनूमता ॥ ३८
अथातिरभसेनागाद्राहुरुत्सृज्य वासवम् ।
अनेन च स वै दृष्ट आधावञ्शैलकूटवत् ॥ ३९
ततः सूर्यं समुत्सृज्य राहुमेवमवेक्ष्य च ।
उत्पपात पुनर्व्योम ग्रहीतुं सिंहिकासुतम् ॥ ४०
उत्सृज्यार्कमिमं राम आधावन्तं प्लवंगमम् ।
दृष्ट्वा राहुः परावृत्य मुखशेषः पराङ्मुखः ॥ ४१

G. 7. 38. 52
B. 7. 35. 41
L. 7. 38. 45

B1.3.4 D1.3–5.9 क्षुधाविनय( Ñ1 V1 D1.3–5 क्षुधाविनोद; D9 क्षुधापनोद )नं कृत्वा( Ñ2 V3 °नं दत्त्वा; B1 °नार्थौ तु; B3.4 °नं दत्तं ); D2 क्षुधया रोदनं कृत्वा. ❀ Cv : बुभुक्षापनयनं अन्नं परावृत्य अन्नमसिक्रस्य ।; Ck : बुभुक्षापनयं कृत्वा अन्नं विधाय ‘ बुभुक्षापनीयतेऽनेनेति ’ व्युत्पत्तिः ।; so also Ct. ❀ —c) V1 D6 अयं ( for इदं ). Ś Ñ2 V3 B1.3.4 D1.3.4.8 यत्; V1 तु; D5 यस् ( for तत् ). D2.9 T4 इदानीं ( for इदं तत् ). Ñ1 देव; Ñ2 V1.3 B1.3.4 D1–5.9 T4 दत्तो; M3 काले ( for दत्तम् ). —d) Ś D8.12 विन्यस्य; M4.8 अन्यत्र ( for अन्यस्य ). G1 बलसूदन; G3 बलि° ( for बलवृत्रहन् ). Ñ V1.3 B1.3.4 D1–5.9 T4 वरोन्य( T4 damaged from न्य up to पर्व in 35a )स्मै सुरेश्वर; M3 दत्तमन्यस्य वृत्रहन्.

35 T4 damaged up to पर्व in a ( cf. v.l. 34 ). —b) Ś Ñ V1 B1.3.4 D1.3–5.8.12 आस्थितः ( for आगतः ). —c) Ś D8 G2 M10 अद्य; T4 तदा ( for अथ ). —d) D4 ** सा; T4 सह *; G1 तरसा ( for सहसा ). G2 रविः ( for रविम् ). Ś D8.12 सूर्यं ग्रसति पर्वणि. —For 35cd, Ñ2 B1.3.4 subst. :

706* दृष्ट्वा गृहीतमन्येन तमहं त्वामुपागमम् ।

[ Ñ2 illeg.; B4 ततोहं त्वामुपागतः ( for the post. half ).]

36 a) Ś D8.12 राहोस्तु. —b) D5 सहसोत्थितः; G2 M8.10 संभ्रमार्दितः. —Note hiatus between c and d. —d) V1 D1–5.9 सव्यूढं( V1 °ढं ) ( for उद्वहन् ). Ś D6–8.10–12 T1.2 G3 M1.8 कांचनीं ( for काञ्चन- ). V1 -स्रजः; M3 -प्रभं ( for -स्रजम् ). Ñ2 B1.3.4 पराध्यास्तरणान्वितं; V3 सर्वस्ते बलसंयुतः.

37 a) B3 तत्र ( for ततः ). V3 -शैलाभं ( for -कूटाभं ). —b) T4 damaged from मद up to कारिणं in c. Ś मदं स्रवन् ( sic ); Ñ1 महाश्रवं; Ñ2 B1 महामदं; D1.3.4.6 मदश्रवं; D2 महाश्रुतं; D5.9 महागजं; M5 मधु° ( for मदस्रवम् ). B4 चतुर्दंष्ट्रं सदामदं. —V3 om. 37c–38b. —c) M2 शृंगानु- ( for शृङ्गार- ). Ñ1 D1–7.9–11 T3 G1 M3 -धारिणं; V1 -चारिणं; T2 -[ आ ]कारिणं; M7 -करिणं ( for -कारिणं ). V1 प्रासं; D2.10 T3 M1 प्रांशु- ( for प्रांशुं ). Ś D8.12 शुक्लं गजवरं चैव; Ñ2 B1.3.4 षट्पदैरन्वितं प्रांशुं( B3 प्रासं ). —Ñ2 illeg. for d. —d) B3 शून्य-; M4 श्रीमद्- ( for स्वर्ण- ). B4 -नादिनं ( for -हासिनम् ).

38 V3 om. 38ab ( cf. v.l. 37 ). —a) T1.2 M1 करिणम् ( for करीन्द्रम् ). —c) V3 प्राप्तो ( for प्रायाद् ). B3 [ आ ]तपः ( for [ अ ]भवत् ). —d) Ñ1 V1.3 D5.7 M10 तेन; D2.3 तत्र ( for [ अ ]नेन ).

39 a) V1 तथा. B4 [ अ ]भि- ( for [ अ ]ति- ). Ñ1 V1 D1–4.9 T4 -रभसः; Ñ2 B1.3.4 -रभसात्; D5 -रभसा; G3 -भरसेन ( meta. ) ( for -रभसेन ). Ś D8.12 [ अ ]याद् ; Ñ1 D1.3–5 प्रागाद् ; Ñ2 V1.3 B1.3 D2.9 T4 प्रायाद् ; B4 राहुः ( for [ अ ]गाद् ). —b) V3 सूर्यम् ; B4 प्रायाद् ( for राहुर् ). T2 वासवः ( sic ). D5.9 राहुमुत्सृज्य वासवः. —c) V1 तु ( for च ). Ś D8.12 युद्धे; D2 दग्धो ( for दृष्ट ). B1 D9 दृष्टोसौ( D9 °* ) ( for वै दृष्ट ). —Ñ2 illeg. for d. T4 damaged from d up to ततः in 40a. —d) Ś D8.12 धावंतं; Ñ1 V1.3 D1–4.9 ह्यधावन् ; D5 द्रावयन् ; D6 G2 ( with hiatus ) अधावन् ; D10.11 प्रधा° ( for आधावन् ). B3 -कूटवान् ( for -कूटवत् ).

40 T4 damaged up to ततः in a ( cf. v.l. 39 ). B1 om. 40ab. —a) V3 तीरैः ( sic ) ( for सूर्यं ). T3 G1 M1.2.4.8.9 तम् ( for सम्- ). B3 ततः समुत्सृज्य राहुः. —b) Ś D1–5.8.9.12 T4 स्थूलम् ; Ñ V1.3 B4 D6.7.10.11 M7 फलम् ; G1 M1.5 एव; M3.10 पुनम् ( for एवम् ). B3 फलं चैवम् ( for राहुमेवम् ). G1 M5.8 निरीक्ष्य; M1 [ अ ]भ्यवेक्ष्य; G ( ed.) उपेत्य ( for अवेक्ष्य ). D2.3 सः ( for च ). —c) Ñ2 B1 ततो व्योम; G1 स वेगेन; M1 पुनर्व्योम्नि ( for पुनर्व्योम ). —d) Ñ1 हिंसिका- ( meta. ); D1 सिंहका- ( for सिंहिका- ).

41 B4 om. ( hapl.? ) 41–42b. Note hiatus between a and b. —a) Ś D1–4.6–8.12 T2 G M2–5.8–10 उत्सृष्ट-; T1 °ष्ट्वा ( for उत्सृज्य ). Ś D8.12 अमुं ( for इमं ). D9 अंबरे V3 ( with hiatus ) च इमं ( for [ अ ]र्कमिमं ). D9 अंबरे स; T1.2 G3 M3 हनूमंतम् ; T3 M7.10 इमं राहुम् ( for इमं राम ). —b) Ś1.2 D6 अधावंतं; Ñ1 V1 D2.9 T4 ह्य( T4 ह्या )धावंतं; Ñ2 V3 B3 D1.3–5.7.10.11 T1 M2 प्रधावंतं. Ñ1 तं प्लवंगमं ( hypm. ) ( for प्लवंगमम् ). —c) Ś

G. 7. 38. 93
B. 7. 33. 42
L. 7. 38. 46

इन्द्रमाशंसमानस्तु त्रातारं सिंहिकासुतः ।
इन्द्र इन्द्रेति संत्रासान्मुहुर्मुहुरभाषत ॥ ४२
राहोर्विक्रोशमानस्य प्रागेवालक्षितः स्वरः ।
श्रुत्वेन्द्रोवाच मा भैषीरयमेनं निहन्म्यहम् ॥ ४३
ऐरावतं ततो दृष्ट्वा महत्तदिदमित्यपि ।
फलं तं हस्तिराजानमभिदुद्राव मारुतिः ॥ ४४
तदास्य धावतो रूपमैरावतजिघृक्षया ।
मुहूर्तमभवद्घोरमिन्द्राग्न्योरिव भास्वरम् ॥ ४५
एवमाधावमानं तु नातिक्रुद्धः शचीपतिः ।
हस्तान्तेनातिमुक्तेन कुलिशेनाभ्यताडयत् ॥ ४६
ततो गिरौ पपातैष इन्द्रवज्राभिताडितः ।
पतमानस्य चैतस्य वामो हनुरभज्यत ॥ ४७

---

D8.12 T1-3 G1 M2.4.7-9 द्रुतं; Ñ1 V1.3 D1-5.9 दूराद् (for दृष्ट्वा). Ñ2 B1.3 D9 परावृत्तो; D3 परिवृत्तो; L (ed.) परि° (for परावृत्य). D6.7 T4 परावृत्याब्रवीद्रामः; D10.11 अवेक्ष्यैवं परावृत्तो. —d) Ś1.2 Ñ1 V1 D2 M4 मुखशेष-; Ś3 D8.12 °शोष-; D6.7 T3.4 मुक्ताक्रोशः (for मुखशेषः). G2 भयार्दितः; M1.3.5.10 [ऽ]पयाद्द्रुतं (for पराङ्मुखः). ❀ Cg.k.t: मुखशेष इति राहु(Ct °होः)स्वरूपकथनम्. ❀

42 B4 om. 42ab (cf. v.l. 41). —a) Ś Ñ1 V1.3 D1-5.8.9.12 प्रा(Ś D8.12 प्र; D5 वि)क्रोशमानस्; M7 आशंसमानं (for आशंसमानस्). Ś D8.12 च; M8 तन् (for तु). Ñ2 B1.3 इंद्रमेव समाधावत्(Ñ2 °गच्छत्; B3 °साद्य); M1 इंद्रेति क्रोशमानस्तु. —b) T4 damaged from का up to इन्द्रेति in c. G3 हिंसिका- (meta.) (for सिंहिका-). —c) Ñ V1.3 B3 D2.4.9 T3 M3 इंद्रें(D9 °*) द्रेति च; D1 इंद्र*द्रेति (for इन्द्र इन्द्रेति). G1 [अ]यं; M10 स (for सं-). D9 संग्रामात्; M1 संत्रासं (for संत्रासान्). —d) D8 मुहूर्तं (hypm.); M1 राहुर् (for first मुहुर्). Ñ2 B1.3.4 विचुक्रोश मुहुर्मुहुः.

43 a) B3 ततो (for राहोर्). Ñ2 B1.4 ततो विक्रोशतस्तस्य. —b) V3 एवं (for एव). Ś Ñ1 V1 D2.8-11 M5 [आ]लक्षितं; Ñ2 B1.3.4 D1.3.4 [आ]लक्ष्य तं; V3 लक्षितं; D12 [आ]लिखितं; T3 G M1.2.4.7-10 [आ]लक्षित-. Ś Ñ V1.3 B1.3.4 D1-4.8-12 G2 M3.4.5 स्वरं. D5 प्रभुश्चावेक्ष्य तं स्वरं. —c) Ś D8 प्राह; D2.9 [ऽ]प्याह; M3 आह (for [उ]वाच). D1.3-5 उवाच शक्रो (for श्रुत्वेन्द्रोवाच). Ś D8.12 भैस्त्वम् (for भैषीर्). Ñ2 B1.3.4 मा भैरिति तमाहेंद्रस्(B3 महेंद्रस्तु). —d) Ñ2 B4 D12 त्वहम्; B1 [ऽ]प्यहम्; B3 (with hiatus) D5-11 T G1.3 M1.3 महम्; M5 अरिम्; M8 असुम् (for अयम्). G2 एवं; M8 एव (for एनं). T1.2 G1.3 M3 च; T3 वै; M1 हि (for [अ]हम्). Ś Ñ2 V1.3 B1.3 D8.12 निसूदये; Ñ1 B4 D2.3.5-7.9-11 T4 निषूदये; D1.4 न सूदये (for निहन्म्यहम्).

44 a) Ś D1-5.8.9.12 ऐरावणं (here and below). T3 तदा (for ततो). Ś D8.12 द्वारं (for दृष्ट्वा). —b) Ñ1 V1 D2.4.5.9 T1.2 G2.3 M1.3.5.8.10 महांतमिद(Ñ1 V1 D2.4.9 °मिमं; D5 °मय)म्; D3 महाद्रिमयम्; M7 महत्तमिदम् (for महत्तदिदम्). Ś D8.12 महदन्यदुपागतं; Ñ2 B1.3.4 D1 महांतमिदमेव हि(D1 °ममितद्युतिं); V1 महांतं पर्वतं यथा; T4 महत्फलमिदं त्विति. —c) Ś D8.12 बलिनं; Ñ1 फलांतं; V1.3 D1-4.9 बलात्तं; D5 बलेन; T3 पततं; T4 फलात्तं (for फलं तं). Ñ2 B1.3.4 फलमित्यभिवि(B3 °सं)ज्ञाय; M5 K (ed.) फलं मत्वा हस्तिवरम्(K [ed.] °राजम्). —d) Ñ2 B1.4 तं प्र-; B3 संप्र- (for अभि-). T3 तं शिशुः (for मारुतिः).

45 a) Ś D3 अथ; V1.3 B1.4 D1.2.4.9 तद्; D5-7.10-12 M3 तथा (for तदा). Ñ2 त*स्य; B3 तस्य तं; T1.2 G3 तथाभि-; M1 तदाभि- (for तदास्य). B4 T1.2 G1 [आ]धावतो (for धावतो). Ñ1 राजन्; D9 नूनम् (for रूपम्). —d) D7.10.11 इंद्रायुपरि. Ś1.2 Ñ V2 B1.3.4 D1.2.4.8 कालाग्नेरिव सूर्छितं(Ñ2 B3.4 राघव; V3 वर्धतः; B1 वासवं [sic]; D2.4 सूर्छेरः); Ś2 V1 D3.5.9.12 कालाग्निरिव मूर्छितः; T4 कालाग्न्योरिव मूर्तिमान्.

46 a) Ś D8.12 तं दृष्ट्वा (for एवमा-). T4 तम् (for तु). Ñ V1.3 D1-3.9 आधावतस्तस्य(Ñ1 °श्चान्यं; D2 °श्चास्य); T3 °मानस्तु (for आधावमानं तु). —b) Ñ2 प्रति-; V3 (with hiatus) T4 अति-; D1.4 ह्यति-; M5 तदा (for नाति-). B1 हस्तस्थेन (for नातिक्रुद्धः). —After 46ab, Ñ1 V1.3 D1.3.4.9 T4 ins.:

707* वज्रमेवाभिमुक्तं तु देवेन्द्रेण महात्मना ।

[Ñ1 [अ]ति- (for [अ]भि-). D3 हि (for तु).]

—c) Ś1.2 Ñ1 हतुं तेन; Ś3 V1 D5.8.12 T4 हंतुं तेन; D1.4 हंतुं वैर-; D2.9 हनुस्तस्य; D3 वज्रस्तेन; D10.11 Cg.k.t हस्तांताद्; G1 M4 हस्तेन न; M5.7 हस्तात्तेन; M10 स्वहस्तेन (for हस्तान्तेन). Ś Ñ1 V1 D2.3.5.8.9.12 T3 [अ]भिमु(D2.8 °मु)क्तेन; G3 [अ]वि° (for [अ]तिमुक्तेन). Ñ2 नातिक्रोधप्रयुक्तेन; V3 हनूमानपि शक्रेन; B1 नातिक्रुद्धो विमुक्तेन; B3.4 हस्तस्थेन प्रमुक्तेन. ❀ Cv: हस्तान्ते हस्तान्तिके; Cg.k.t: हस्तान्तात् हस्ताग्रात्; Cg adds हस्तान्त इति समीप इत्यर्थः. ❀ —d) Ś D8.12 स्यताडयत्; D9 [अ]भिताडिता; T4 [अ]थ ता°; G1.2 [अ]त्य(G1 °स्य)ता° (for [अ]भ्यताडयत्).

47 B3 transp. ab and cd. —a) B4 मेरौ (for गिरौ). Ñ1 [अ]थं; V1 [आ]शु; B4 [ए]व (for [ए]ष). M8 गिरौ पपात तेनैष. —b) Ñ2 V3 B1.3 D1.3-5.9 शक्र-; D3 शक्ति- (for इन्द्र-). Ñ1 वज्रइंद्र- (by transp.) (for इन्द्रवज्र-). V3 D1-4.9 -पीडितः; B3 -विक्षतः (for -ताडितः).

तस्मिंस्तु पतिते बाले वज्रताडनविह्वले ।
चुक्रोधेन्द्राय पवनः प्रजानामशिवाय च ॥ ४८
विण्मूत्राशयमावृत्य प्रजास्वन्तर्गतः प्रभुः ।
रुरोध सर्वभूतानि यथा वर्षाणि वासवः ॥ ४९
वायुप्रकोपाद्भूतानि निरुच्छ्वासानि सर्वतः ।
संधिभिर्भज्यमानानि काष्ठभूतानि जज्ञिरे ॥ ५०

निःस्वधं निर्वषट्कारं निष्क्रियं धर्मवर्जितम् ।
वायुप्रकोपात्त्रैलोक्यं निरयस्थमिवाबभौ ॥ ५१
ततः प्रजाः सगन्धर्वाः सदेवासुरमानुषाः ।
प्रजापतिं समाधावन्नसुखार्ताः सुखैषिणः ॥ ५२
ऊचुः प्राञ्जलयो देवा दरोदरनिभोदराः ।
त्वया स्म भगवन्सृष्टाः प्रजानाथ चतुर्विधाः ॥ ५३

G. 7. 38. 104
B. 7. 35. 54
L. 7. 38. 57

—$^{c}$) Ñ1 V1.3 D1–4.9 चैवास्य; D7 वै तस्य; D8 देहस्य ( for चैतस्य ). Ñ2 B1.3.4 कुलिशेन च तेनास्य. —$^{d}$) D10.11 Ct वामा ( for वामो ). D3 अभिद्यत ( for अभज्यत ). D8 वामे यदि व्यभज्यत ( sic ). ❀ Ct : वामा हनुः । हनुशब्दः स्त्रियाम् । 'तत्परा हनुः' इति कोशात् . ❀

48 $^{a}$) D1–4.9 G2 M2.4.7.9.10 अस्मिंस्. B1 नि- ( for तु ). B3.4 ततोस्मिन् ( for तस्मिंस्तु ). G1 पातिते ( for पतिते ). B1 काले; B4 marg.; D6.7.10.11 चापि ( for बाले ). —$^{b}$) Ś D8.12 -ताडित-; G2 -[ आ ]ताडन- ( for -ताडन- ). Ñ2 -विह्वलः ( for -विह्वले ). —$^{c}$) V3 D1–5.9 T4 M1 चुकोप. —$^{d}$) D6.7.10.11 अहिताय. B1.3.4 D6.7.10.11 सः ( for च ). —After 48, D6.7.10.11 T4 M3 ins. 708*; while G1.2 M1 ins. 709*.

49 M1 om. 49$^{ab}$. —$^{a}$) M5 -मूत्रद्वारम् ( for -मूत्राशयम् ). M7 आहत्य ( for आवृत्य ). —$^{b}$) D6.7.10.11 T4 M3 प्रजानां परमार्तिकृत् . —For 49$^{ab}$, Ś Ñ V1.3 B1.3.4 D1–5.8.9.12 T1–3 G1.3 subst.; while D6.7.10.11 T4 M3 ins. after 48 :

708* प्रचारं स तु संगृह्य प्रजास्वन्तर्गतः प्रभुः ।

[ V3 तदा तं; B1 T4 प्रभावं; G ( ed. ) प्रवातं ( for प्रचारं ). Ñ2 B1.3.4 स्वं च; T4 तं तु ( for स तु ). Ś D8.12 ततः प्रचारं; D5 प्राणं तदा स ( for प्रचारं स तु ). Ñ V1 B1.4 D1–5.9 T4 संहृत्य; V3 संदिश्य ( for संगृह्य ). —T4 om. the post. half. Post. half = 49$^{b}$. B1 D5 [ अं ]तर्गतं; D1.3.4 [ अ ]नुगतं ( for [ अ ]न्तर्गतः ). D5 तदा ( for प्रभुः ). ]

—Then D6.7.10.11 T1.2 G3 M3 cont.; while G1.2 M1 ins. after 48 :

709* गुहां प्रविष्टः स्वसुतं शिशुमादाय मारुतः ।

[ T1.2 M3 स; G2 तु- ( for स्व- ). G1 -पुरं ( for -सुतं ). ] —$^{c}$) Ś D8.12 निरोध्य ( for रुरोध ). —D2 om. ( hapl. ) 49$^{d}$–50$^{a}$. —$^{d}$) Ś D8.12 मातरिश्वाथ राघव; Ñ1 V1.3 D1.3–5.9 वायुर्वर्ष( V3 °युः सर्व )मिवोषरे( Ñ1 °वोपले; D3 °येष वै; D5 °वौषधैः; D9 °वांबरः [ sic ] ); Ñ2 B1.3.4 न प्रावात्स( B3 प्रववौ न ) तदानिलः.

50 D2 om. 50$^{a}$ ( cf. v.l. 49 ). —$^{a}$) Ñ V1.3 B1.3.4 D1.3–5.9 वायोः ( for वायु- ). D1.3–5 सत्त्वानि ( for भूतानि ). —$^{b}$) Ś D8.12 वज्यमानानि; D10 ( with hiatus ) अनु° ( for निरुच्छ्वासानि ). Ñ2 V3 B1.3.4 D1–4.6.9 G1 M1.5.7 सर्वशः. —B1 om. 50$^{cd}$. —$^{c}$) Ś D8.12 संधिषु; G3 वलिभिर् ( for संधिभिर् ). Ñ1 V3 D1.2.4.5.9 भज्यमानैश्च ( D1.4.5 °स्तु ); Ñ2 B4 चाप्यसंना( B4 °न )ह्यैः; B3 श्वासन्यासैश्च ( sic ); D3.7.10.11 T1.2.4 G M1.3.5.8.10 भिद्यमानैश्च( D3 °स्तु ); D6 T3 M2.9 भिद्यमानानि( for भज्यमानानि ).

51 $^{a}$) Ñ1 निःस्वधा-; D3 निःसंध्यं; D5 G1 M7 निः( G1 M7 नि )स्वनं; T1.2 G2.3 M1.2.4.8–10 निस्वधं ( for निःस्वधं ). D6.7.10.11 T3.4 M3 निः( D6 न )स्वाध्याय-. —$^{c}$) B1 D2.9 वायोः ( for वायु- ). —$^{d}$) Ś Ñ V1 B1.3.4 D6–8.10.11 [ अ ]भवत् ( for [ आ ]बभौ ).

52 $^{a}$) V1.3 D1–5.9 M3 [ ऽ ]मराः ( for प्रजाः ). —$^{b}$) Ñ1 V1.3 D1–5.9 -यक्ष- ( for -देव- ). Ś V3 D1.3–5.8.12 M3 -मानवाः ( for -मानुषाः ). M3 सयक्षोरगराक्षसाः. —For subst. in Ñ2 B1.3.4 cf. v.l. 53. —$^{c}$) Ś D8.12 समाध्याय ( Ś3 D12 °ध्यायन्; D8 °ध्यायन् ); V1 T1.2 G1.3 °धाय; V3 D1.3.4 ( D1.3.4 with hiatus ) अधावंत; T3 °पन्नाः; M1 °साद्य ( for समाधावन् ). —$^{d}$) V1 T1.2 G1.3 M1 न सुखार्ताः; V3 दुःखार्ताश्च; D3 अदुःखार्ताः; T3.4 सुदुःखार्ताः ( for असुखार्ताः ). Ś D8.12 बहुधा हितकाम्यया; D6.7.10.11 दुःखिताश्च सुखेच्छया. —After 52, Ś Ñ1 V1.3 D1.2.4.5.8.9.12 T4 G1 M2.4.7.9 ins. :

710* प्रजापतिं प्रजास्तास्तु सुखहीनाः सुदुःखिताः ।

[ D5 पुरोधाय ( for प्रजापतिं ). Ñ1 V1 D2.9 T4 भृशातुराः; D1.4.5 भृशार्दिताः; G1 M2.4.7.9 सुखेप्स( G1 °च्छ )या ( for सुदुःखिताः ). ]

53 $^{a}$) Ś D8.12 ऊर्ध्वं ( for ऊचुः ). Ñ1 D4 देवः; D1.3.5 G2.3 M2–5.7.8.10 देवं ( for देवा ). —$^{b}$) D6.7 ( marg. ).10.11 T3 G1.3 M3 Cg.k.t महोदर- ( for दरो° ). Ś Ñ1 V1.3 D1–5.8.9.12 T3.4 ब्रह्माणं जगतः( D5 °तां ) पतिं. ❀ Cv : दरोदरनिभोदराः शङ्खोदरसदृशोदराः समुन्नतोदरा इत्यर्थः । 'दरोऽस्त्री शङ्खभीगर्तेष्विति वैजयन्ती । ; Cg.k : महोदरनिभोदराः वायुस्तम्भान्महोदरव्याधिग्रस्तोदरवदुदरं येषां ते तथा । ; so also Ct. ❀ —For 52$^{c}$–53$^{b}$, Ñ2 B1.3.4 subst. :

711* कृच्छ्रात्प्रजापतिं गत्वा प्रोचुरार्ता इदं वचः ।

G. 7. 38. 104
B. 7. 35. 55
L. 7. 38. 58

त्वया दत्तोऽयमस्माकमायुषः पवनः पतिः ।
सोऽस्मान्प्राणेश्वरो भूत्वा कस्मादेषोऽद्य सत्तम ॥ ५४
रुरोध दुःखं जनयन्नन्तःपुर इव स्त्रियः ।
तस्मात्त्वां शरणं प्राप्ता वायुनोपहता विभो ॥ ५५
वायुसंरोधजं दुःखमिदं नो नुद शत्रुहन् ॥ ५६
एतत्प्रजानां श्रुत्वा तु प्रजानाथः प्रजापतिः ।
कारणादिति तानुक्त्वा प्रजाः पुनरभापत ॥ ५७
यस्मिन्वः कारणे वायुश्चुक्रोध च रुरोध च ।
प्रजाः शृणुध्वं तत्सर्वं श्रोतव्यं चात्मनः क्षमम् ॥ ५८
पुत्रस्तस्यामरेशेन इन्द्रेणाद्य निपातितः ।
राहोर्वचनमाज्ञाय राज्ञा वः कोपितोऽनिलः ॥ ५९
अशरीरः शरीरेषु वायुश्चरति पालयन् ।
शरीरं हि विना वायुं समतां याति रेणुभिः ॥ ६०

[ B3 (with hiatus) ऊचुर् ( for प्रोचुर् ). ]

—After 53$^{ab}$, V3 ins. a long passage relegated to App. I ( No. 3 ). ☞ V3 missing from 53$^{a}$ up to 7.36.—$^{a}$) M1 प्रजाः ( for त्वया ). Ś Ñ1 B4 D2.5 9.12 स्मो; B1 D7.10.11 तु; D6 नु; M9 हि ( for स्म ). —$^{d}$) Ñ2 B1.3.4 प्रजाः सर्वाश्; L ( ed. ) प्रजा नाम ( for प्रजानाथ ).

54 $^{a}$) Ñ V1 B1.3.4 D1–5.9 च दत्तः सो ( for दत्तोऽयम् ). Ś D8.12 सृष्टा( D12 स्रष्टा ) चैत्र कृतोस्माकम्. —$^{b}$) Ñ2 B1.3.4 आयुषां. —$^{c}$) Ñ1 B3 D1–5.9 T4 M1.8 [ऽ]स्मत्- ( for ऽस्मान् ). —$^{d}$) Ñ2 B1.3.4 अपि ( for एषो ). G2 M4.10 सत्तमः ( for सत्तम ). Ś D8.12 कस्मादद्य पितामह; Ñ1 V1 D1.3.4.9 T4 क्व वसत्यद्य सत्तमः( Ñ1 °म ); D2.5 क्व च सत्पथसत्तमः( D5 °संमतः ).

55 $^{ab}$) Ñ V1 D1–5.9 रुणद्धि ( for रुरोध ). Ñ2 B1.3.4 किंचित्प्राणांश्चकार सः( Ñ2 B3 °श्च कारणः ); T3 रिपुदुर्गमिवारयः ( for $^{b}$ ). Ś D8.12 बाधयत्येष किं चास्मांस्तद्भवाञ्ज्ञातुमर्हति. —$^{c}$) Ś Ñ D1–5.8.9.12 त्वामेव; B1 तस्य ते; B3 G2 M5.7.8.10 तस्मात्ते( M7 °त्वा ); B4 ताः स्म ते ( for तस्मात्त्वां ). —$^{d}$) Ś D8 [अ]प- ( for [उ]प- ). M5 -हृता ( for -हता ). Ś D1.3–5.8.12 M3 भृशं; Ñ V1 B1.3.4 D2.6.7.9–11 T4 M5 वयं; T1.2 G2.3 M1.8.10 [अ]नघ ( for विभो ).

56 $^{a}$) B1 वायोः ( for वायु- ). D4 om. from सं in $^{a}$ up to द in $^{b}$. Ś D8.12 वायोः सु( Ś2 सं )रोषजं( D12 °णं ). —$^{b}$) Ñ1 V1 D2.9 सत्त्वानां; D3.4 सर्वं नो ( for इदं नो ). Ñ1 तत्तु; V1 हंतु ( for नुद ). D2 शात्रवं; D4 * सहं; D6.7.10.11 T4 दुःख° ( for शत्रुहन् ). Ś D8.12 नुद नः परमेश्वर; Ñ2 B1.3.4 नुद नोद्य पितामह; D1 सर्वं नाशय दुःसहः; G1 इदं नः शत्रुदुःखहन्; M9 इदं नः सुमहत्प्रभो.

57 $^{a}$) B1.3.4 इति. M10 प्रलापं ( for प्रजानां ). Ś D8.12 ज्ञात्वा प्रजानां; Ñ D1–5.9 T4 श्रुत्वा प्रजानां ( by transp. ) ( for प्रजानां श्रुत्वा ). Ñ2 च; B1.3 स; T3 G1 M1 [अ]थ ( for तु ). —$^{b}$) Ś3 D5 प्रजानाथ-; B3 वाक्यं देव-; D1 प्रजानां स ( for प्रजानाथः ). —G2 om. 57$^{c}$–59$^{b}$. —$^{c}$) T2.3 M2.4.5.9 कारुण्याद्. Ś D8.12 चापि; T1–3 M2.3.5.9 ता ( for तान् ). T3 मत्वा; M2.5.9 गत्वा ( for उक्त्वा ). Ñ2 B1.3.4 D10.11 चोक्त्वासौ( B3 °क्त्वा स ) ( for तानुक्त्वा ). Ñ1 V1 D2.5.9 T4 कारणं कारणात्मा सः; D1.3.4 कारणं कारणेनात्मा; D6 M10 कारणं तु ततो मत्वा; D7 ( marg. also as in Ñ2 ) करुणां तु ततो गत्वा; G3 कारुण्यान्विदितानुक्त्वा; M7 कारुण्याद्दीनतां गत्वा; M8 कारणानीति तानुक्त्वा. ❀ Cg.k : कारणादिति( Cg °ति चोक्त्वा ) किंचित्कारणमत्रास्तीत्युक्त्वा ।; Ct : कारणादित्युक्त्वा किंचित्कारणमत्रास्तीत्युक्त्वा यस्मिन्कारणे वायुश्चुक्रोध तत्कारणं पुनरभापत. ❀ —$^{d}$) M5 अथाब्रवीत् ( for अभापत ).

58 G2 om. 58 ( cf. v.l. 57 ). —$^{a}$) B1.4 यत्र ( for यस्मिन् ). Ś D5.8.12 तु; Ñ V1 B3 D2.3.9-11 T3.4 G1 च; B1 वै; D6.7 M5.8 वा; T1.2 G3 M1.3 हि ( for वः ). D1.4 यस्मिंश्चित्. M4 कारणो ( for कारणे ). —$^{b}$) Ś Ñ1 V1 B1.3.4 D1–5.8 9.12 T3.4 चुकोप; Ct चुक्रोध( as in text ). Ś3 D12 रुरोद ( for रुरोध ). —$^{c}$) B1.3.4 शृणुत ( for शृणुध्वं ). —$^{d}$) Ś D8.12 श्रूयतां; Ñ1 कुरुध्व( sic ); Ñ2 B1.3.4 M7 क्रियतां; V1 D1–5.9 T3 कुरुध्वं ( for श्रोतव्यं ). Ś D8.12 T2 क्षयं; Ñ1 क्रमं; T4 क्षतं ( for क्षमम् ).

59 G2 om. 59$^{ab}$ ( cf. v.l. 57 ). Note hiatus between $^{a}$ and $^{b}$. —$^{a}$) Ś3 [अ]मरीचेन ( sic ); B1.3.4 [अ]द्य वज्रे( B3 शक्रे )ण; D3 T3 [अ]मरेंद्रेण ( for [अ]मरेशेन ). —$^{b}$) Ñ1 B3 T3 M1 वज्रेण; V1 B1.4 D1–5.9 T4 शक्रेण ( for इन्द्रेण ). B1.3.4 वि-; D1.4 [अ]थ; T3 [अ]भि- ( for [अ]द्य ). Ś Ñ B1.3.4 D1–4.8.9.12 निसू( D2.3 °षू )दितः; V1 [अ]भिसूदितः ( for निपातितः ). D5 प्रतिसूदितः ; M9 व्यतिपा° ( for [अ]द्य निपातितः ). —T1.2 G3 transp. 59$^{c}$–60$^{b}$ and 60$^{c}$–61$^{b}$. —$^{c}$) Ñ2 B1.3.4 D6.7.10.11 T1.2.4 G2.3 M3.8.10 आस्थाय ( for आज्ञाय ). —$^{d}$) Ś Ñ2 B1.3.4 D1.3–5.8.12 M7 तेन; Ñ1 V1 D2.6.7.9–11 T4 ततः ( for राज्ञा ). Ñ2 B3.4 [अ]सौ; B1 [अ]यं; D5 च; D6.7 T4 M7 सं-; D10.11 स ( for वः ). T3 रुरोध; M5 राजा वः ( for राज्ञा वः ). Ś Ñ V1 B1.3.4 D1–5.8–12 T3.4 G1 M7 कुपितो; D6.7 -क्षुभितो ( for कोपितो ).

60 T1.2 G3 transp. 59$^{c}$–60$^{b}$ and 60$^{c}$–61$^{b}$. —$^{b}$) B4 M8 चलति ( for चरति ). Ñ1 पावयन् . —$^{c}$) D3 शारीरं. B1 च; D1.4 तु ( for हि ). D2.9 यथा ( for विना ).

वायुः प्राणाः सुखं वायुर्वायुः सर्वमिदं जगत् ।
वायुना संपरित्यक्तं न सुखं विन्दते जगत् ॥ ६१
अद्यैव च परित्यक्तं वायुना जगदायुषा ।
अद्यैवेमे निरुच्छ्वासाः काष्ठकुड्योपमाः स्थिताः ॥ ६२
तद्यामस्तत्र यत्रास्ते मारुतो रुक्प्रदो हि वः ।
मा विनाशं गमिष्याम अप्रसाद्यादितेः सुतम् ॥ ६३

ततः प्रजाभिः सहितः प्रजापतिः
सदेवगन्धर्वभुजंगगुह्यकः ।
जगाम तत्रास्यति यत्र मारुतः
सुतं सुरेन्द्राभिहतं प्रगृह्य सः ॥ ६४
ततोऽर्कवैश्वानरकाञ्चनप्रभं
सुतं तदोत्सङ्गगतं सदागतेः ।
चतुर्मुखो वीक्ष्य कृपामथाकरो-
त्सदेवसिद्धर्षिभुजंगराक्षसः ॥ ६५

G. 7. 38. 115
B. 7. 35. 65
L. 7. 38. 68

इति श्रीरामायणे उत्तरकाण्डे पञ्चत्रिंशः सर्गः ॥ ३५ ॥

---

$D_{1-4.9}$ $T_3$ $G_2$ $M_{5.7}$ वायुः; $D_5$ चायं; $G_1$ वातं (for वायुं). —$^{d}$) $B_1$ शमतां; $D_1$ चेदनां; $D_2$ $T_4$ समंताद्; $T_3$ क्षमतां (for समतां). $D_3$ यद्दिः; $G_3$ यातु (for याति). Ś $\tilde{N}_2$ $B_{1.3.4}$ $D_7$(marg. also)$._{8.10-12}$ दारुभिः; $\tilde{N}_1$ $V_1$ $D_{3.4}$ दारुणा; $D_1$ दारुणं; $D_{2.9}$ दारुणः; $D_6$ रोक्षसां (sic); $T_{3.4}$ नो क्षणं (for रेणुभिः). ❀ Ct : दारुभिः समतां याति। क्षणमपि न चलतीत्यर्थः. ❀

61 $\tilde{N}_1$ om. (hapl.) $61^{ab}$. $T_{1.2}$ $G_3$ transp. $59^{c}$–$60^{b}$ and $60^{c}$–$61^{b}$. —$^{a}$) $D_4$ $M_1$ वायु- (for वायुः). Ś $\tilde{N}_2$ $V_1$ $B_{1.3}$ $D_{6.9-11}$ $T_4$ $M_{1.5}$ प्राणः; $G_2$ प्राण- (for प्राणाः). $T_3$ प्राणसखा (for प्राणाः सुखं). $M_5$ दुःखं (for वायुर्). —$B_1$ om. (hapl.) $61^{cd}$. —$^{c}$) $G_1$ अद्यैव (for वायुना). $T_3$ $G_1$ $M_{2.4.5.7.9}$ हि (for सं-). $D_{1-5.9}$ -त्यक्तो; $G_2$ -त्यक्ता (for -त्यक्तं). —$^{d}$) Ś $D_8$ सुखं नो; $G_2$ न शुभं (for न सुखं). $\tilde{N}_1$ $V_1$ $D_{1-5.9}$ जनः; $M_1$ क्वचित्; $M_{4.10}$ हि तत् (for जगत्). $T_{1.2}$ $G_{2.3}$ $M_5$ विद्यते क्वचि($G_2$ $M_5$ हि य)त्.

62 $D_5$ om. (hapl.) $62^{ab}$. —$^{a}$) Ś $D_8$ सं-; $\tilde{N}_2$ तु; $V_1$ नः; $T_3$ $G_1$ हि (for च). $\tilde{N}_1$ $D_3$ पूर्वं; $D_1$ प्रजा; $D_{2.4.9}$ $T_4$ यूयं (for [ए]व च). $\tilde{N}$ $V_1$ $B_{1.3.4}$ $D_{1-4.9}$ $T_4$ $G_2$ -त्यक्ता (for -त्यक्तं). —$^{b}$) $\tilde{N}$ $V_1$ $D_{2.7.9-11}$ जगदायुना (sic); $B_3$ °त्मना (for जगदायुषा). —$^{c}$) Ś $D_{5.8}$ तु; $V_1$ $D_{1-4.9}$ च; $D_{6.7.10-12}$ $T_{2.3}$ $G_{1.3}$ ते; $M_{4.10}$ मे (for [इ]मे). $\tilde{N}_1$ अद्येयंनो (sic); $\tilde{N}_2$ $B_{1.3.4}$ $M_3$ यूयं($M_3$ अद्य) सर्वे (for अद्यैवेमे). $D_5$ निरुत्साहाः (for निरुच्छ्वासाः). —$^{d}$) $\tilde{N}_2$ $V_1$ $T_4$ कृताः.

63 $^{a}$) $V_1$ $D_1$ $T_{1-3}$ $G_2$ $M_{2-5.8.9}$ तद्याम; $D_{3.5}$ गच्छामस्; $M_{10}$ यास्यामो (for तद्यामस्). $G_2$ $M_{3.5.8.10}$ transp. तत्र and यत्र. —$\tilde{N}_2$ illeg. for $63^{bcd}$. —$^{b}$) $D_{6.7.10.11}$ नः; $M_1$ सः (for वः). Ś $D_{8.12}$ [ऽ]त्युत्कटो हि यः; $\tilde{N}_1$ $B_{1.4}$ सुखदो हि नः($B_1$ सः); $V_1$ $D_{1-5.9}$ $T_4$ नः($D_{1.3-5}$ वः) प्रजाहितः ($D_2$ °पतिः) (for रुक्प्रदो हि वः). —Note hiatus between $^{c}$ and $^{d}$. —$^{c}$) $\tilde{N}_1$ विषादं (for विनाशं). Ś $\tilde{N}_1$ $V_1$ $B_{1.3.4}$ $D_{1-5.8.9.12}$ $T_4$ गमिष्यध्वं. ❀ Cg.k.t : गमिष्याम अप्रसाद्येत्य( Cg °द्येति )सन्धिरार्षः. ❀ —$^{d}$) $B_1$ $D_{6.7}$ तं प्रसाद्य; $G_1$ संप्रसाद्य. $B_{1.4}$ $M_1$ दितेः (for [अ]दितेः). $D_6$ $T_{1.2}$ $G_{1.3}$ $M_3$ सुताः (for सुतम्). Ś $D_{8.12}$ प्रसादाम(Ś °मः) सदागतिं; $V_1$ प्रसादात्तस्य वै प्रभोः; $D_{1.3-5}$ $T_{3.4}$ ह्य($T_3$ यत्-; $T_4$ आ)प्रसादात्तु तस्य वै; $D_{2.9}$ प्रसादात्तु तथास्य वै; $G_2$ प्रसादादाप्यते सुखं.

64 $^{a}$) G (ed.) सहितं (for सहितः). $B_4$ om. प्रजापतिः. $V_1$ $D_{2.9}$ सह देवगुह्यकैर्. —$^{b}$) $D_{1.3-5}$ -सुपर्ण-; $T_3$ $G_1$ $M_{2.4.5.7.9}$ -मनुष्य- (for -भुजंग-). $\tilde{N}$ $B_{1.3.4}$ $D_{1.3-7.10.11}$ T G $M_{1.3.6.8.10}$ -गुह्यकैः; $M_9$ -गुह्यकाः (for -गुह्यकः). $V_1$ $D_{2.9}$ गंधर्वयक्षोरगराक्षसोत्तमैः. —$^{c}$) $D_{2.9}$ यत्र (for तत्र). Ś $D_{8.12}$ [आ]शु सः; $\tilde{N}_2$ $B_{1.4}$ $G_1$ $M_3$ [अ]स्ति स($M_3$ हि); $M_{10}$ [आ]सत (sic) (for [आ]स्यति). $D_{1.3-5}$ [ए]व यतः सः; $D_{2.9}$ स्वभवत्स (for [आ]स्यति यत्र). $\tilde{N}_2$ $B_{1.3.4}$ $D_{6.7.10.11}$ $M_5$ transp. तत्र and यत्र. Ś $D_{8.12}$ गुह्यकः (for मारुतः). $T_4$ * * * वज्राभिहतं श्रमातुरं. ❀ Cg : तत्रास्यतीति। यत्र अस्यति तिष्ठतीति यावत् ।; Ck : तत्र आस्यतीति पदम्। तिष्ठतीति यावत् ।:; Ct : आस्यत्यास्ते. ❀ —$^{d}$) Ś $\tilde{N}$ $V_1$ $B_{1.4}$ $D_{1-5.8.9.12}$ तु(Ś $D_{8.12}$ हि; $\tilde{N}_1$ $V_1$ $D_{2.5.9}$ च) वज्र-; $M_1$ महेंद्र- (for सुरेन्द्र-). $B_3$ हि वज्रेण (for सुरेन्द्राभि-). Ś $D_8$ तान्; $\tilde{N}_1$ $V_1$ $B_{3.4}$ $D_{1.2.4.9.12}$ तं; $\tilde{N}_2$ वै (for सः). $D_3$ प्रजेश्वरं (for प्रगृह्य सः). $D_6$ तं प्रसाद्यादितेः ** प्रगृह्य सः(sic).

65 $^{a}$) Ś $D_{8.12}$ हि (for ऽर्क-). $D_5$ -विग्रह-; $T_{1.2}$ $G_3$ $M_{10}$ -मारुत- (for -काञ्चन-). Ś $D_{8.12}$ -[अ]र्चिषं (for -प्रभं). —$^{b}$) $\tilde{N}$ $B_{3.4}$ शिशुं; $B_1$ शिशुः (sic) (for सुतं). Ś $D_{8.12}$ $T_3$ तथोत्संग-; $\tilde{N}$ $B_4$ समु°; $V_1$ च स्वो°; $B_{1.3}$ $D_{2.9}$ तमु°;

# ३६

G. 7. 39. 1
B. 7. 36. 1
L. 7. 39. 1

ततः पितामहं दृष्ट्वा वायुः पुत्रवधार्दितः ।
शिशुकं तं समादाय उत्तस्थौ धातुरग्रतः ॥ १
चलत्कुण्डलमौलिस्रक्तपनीयविभूषणः ।
पादयोर्न्यपतद्वायुस्तिस्रोऽवस्थाय वेधसे ॥ २
तं तु वेदविदाद्यस्तु लम्बाभरणशोभिना ।
वायुमुत्थाप्य हस्तेन शिशुं तं परिमृष्टवान् ॥ ३

D5 G3 तदु°; M2.9 ततो° (for तदोत्सङ्ग-). Ñ B1.3.4 निरीक्ष्य (Ñ1 °क्ष्य तु); D2.6 T4 सदागतिः; D6.9 त(D9 स)दागतः; M5 समागतः (for सदागतेः). —$^c$) D3 T4 चतुर्मुखं. Ś3 D8 [उ]द्वी*; V1 D1.2.4.5.9 प्रेक्ष्य; D8 प्रेक्ष्यम्; D12 भिद्य (sic) (for वीक्ष्य). V1 D2.9 T4 मुदं; D3 इदं (for कृपाम्). V1 D1.4ह्यथ; D3.9 यथा; D8 तथा; T4 तदा (for अथ). D5 च तं सहामरैः (for कृपामथाकरोत्). —$^d$) Ś D8.12 वृतः स (for सदेव-). T1 -गंधर्व- (for -सिद्धर्षि-). T1 M1 -राक्षसैः; T3 -गुह्यकैः (for -राक्षसः). Ś V1 D2.8.9.12 T2.4 M3.8 -गंधर्वस यक्ष(V1 D2.9 T4 M8 °महर्षि)राक्षसैः(T2 °सः; T4 °सं); D1.3-5 -गंधर्वमहर्षिपन्नगः(D3.5 °गैः); D6.7.10.11 Ck.t -गंधर्वऋषियक्षराक्षसैः; G2 M5 Cg -गंधर्वर्षियक्षराक्षसैः(M5 °सः); G3 -गंधर्व***श्वराक्षसः (for -सिद्धर्षिभुजंगराक्षसः). ❀ Cg.k.t: गंधर्वऋषि(Cg °र्वर्षि)यक्षेति गुरुलघुभेद आर्षः. ❀—For 65$^{cd}$, Ñ B1.3.4 subst.:

712* चतुर्मुखाद्या मुदितास्तदा प्रजाः
सदेवगन्धर्वपुरोगमा भृशम् ।
[(l. 1) Ñ2 ततः (for तदा).]

Colophon.—*Kāṇḍa name*: Ś1 Ñ1 D2.9 om. —*Sarga name*: Ś D8.12 वायुप्रदर्शनं; Ñ1 हनुवज्रन हत (corrupt); Ñ2 D3 हनूमद्वर्णनं(D3 °नो); V1 D2.9 हनुमजन्मवर्णनो(V1 °नं); B1 हनूमतो हनूखंडनं; B3 हनुमत्ताडनं; B4 हनुमतो वज्रेण हनुखंडनं; D1.4 हनुमद्धर्षणो; D5 हनुमच्चरित्रवर्णनो.—*Sarga no.* (figures, words or both): Ś1.2 Ñ1 B3 D2.12 om.; Ś3 33; Ñ2 D8 37; V1 30; B1 D3.9 T4 38; B4 D1.4.5 39; T3 40. —After colophon, D3 concludes with राम ॥ राम; T4 with श्रीरामार्पणमस्तु; GM1.5.8 with श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

## 36

☞ V2.3 missing for Sarga 36 (cf. v.l. 7.12.2 and 7.35.53 respy.). B2 M6 om. Sarga 36 (cf. v.l. 7.35).

1 $^b$) D6.7 T1.2 G2.3 M8 वायुः पुत्रमथार्दितं. —Note hiatus between $^c$ and $^d$. —$^c$) B3 ताडितं (for शिशुकं). Ś Ñ V1 B1.3.4 D1.3-5.8.12 पुत्रमादाय; G1 तं समाधाय (for तं समादाय). D2.9 T4 शिशुं पुत्रक(T4 °त्रं स)मादाय; G3 तं शिशुं तूर्णमादाय. —$^d$) D1.4 प्रतस्थौ; D2.9 T2.4 M8 ह्युत्तस्थौ; D3.6 प्रो° (for उत्तस्थौ). Ś D8 वायुरु(Ś3 °स)-त्तमः; Ñ1 V1 D1-5.9 T1.2 G3 M8 वेगवत्तरः(T1 °रं); Ñ1 B1.3.4 त्वरितस्तदा; M1 राजसत्तम (for धातुरग्रतः). D11 उत्तस्थावाशु सत्तमः; G1 समुत्तस्थौ तदग्रतः.

2 $^a$) Ś Ñ1 V1 B4 D1.4 G1 M4 चल-; T1.2 G2.3 M3.5.8.10 ततः; M1 हार- (for चलत्-). Ś D8.12 -मौली यः; Ñ B3.4 -मौलिस्तु; V1 D1-5.9 °लिः सः; T4 °लिः संस; G3 -दीप्तास्यस्; G3 -माल्यस्रक्-; M1 -केयूर-; M8 -माली स्रक्- (for -मौलिस्रक्-). —$^b$) Ś V1 D1.3-5.8.12 -विभूषितः (for °षणः). M1 -मकुटाद्यैरलंकृतः; G (ed.) तप्तकांचनभूषणः. Ck.t: स्रक्तपनीयेति । तपनीयस्रगिति यावत्(Ct °गित्यर्थः). ❀—$^c$) B3 क्षपतद्; T1 निपतद्. Ñ2 B1.3.4 G1 मूर्ध्ना (for वायुस्). —$^d$) D6 G2.3 M10 त्रिदिवस्थाय; D10.11 Ct त्रिरुप°; T1-3 M2.3 Cg तिस्रोप°; M4.9 सास्रोप° (for तिस्रोऽवस्थाय). Ś Ñ1 V1 D2.3.5.8.9.12 शिरोवस्थाप्य वेधसः; Ñ2 B1.3.4 दुःखितः पद्मयोनये; D1.4 शिरोधारय वेधसः (sic); T4 शिरोपस्थाप्य वेधसे; G1 ब्रह्मणो विश्ववेधसः. ❀ Cv: तिस्रोऽवस्था यस्य त्र्यवस्थावान् । अन्यत्सर्वमार्षम् ।; Cg: तिस्रोपस्थाय त्रिरुपस्थाय । अलुगप्यार्षः । त्रिरुपस्थाय चेति पाठः । न्यपतदिति । उपस्थानपूर्वकं त्रिः साष्टाङ्गमनमदित्यर्थः ।; Ck: उपस्थाय न्यपतदिति । उपस्थानपूर्वकं त्रिः साष्टाङ्गनमस्कारं कृतवानित्यर्थः ।; Ct: त्रिरुपस्थाय न्यपतत् । उपस्थानपूर्वकं त्रिः साष्टाङ्गं प्रणतवानित्यर्थः. ❀—After 2, D6 ins.; while T1.2 M3 ins. l. 1-3 after 2 and then subst. l. 4-5 for 3$^{cd}$:

713* त्रिगुणाय त्रिवेदाय त्रियुगाय त्रिशक्तये ।
त्रिकालाय त्रिधाम्ने ते त्रिलोकपतये नमः ।
इति नत्वा ततो वायुर्ब्रह्मणेऽनन्तशक्तये ।
शिशुकं तं समादाय उपतस्थे पितामहम् ।
ततः पितामहो देवस्तं हस्तेन समार्जयत् । [5]

[(l. 2) M3 च (for ते). —(l. 4) Note hiatus between the two halves. Prior half = 1$^c$. —(l. 5) M3 शिशुं (for ततः). D6 समज्जयत् (for समार्जयत्). M3 हस्तेन परिमृष्टवान् (for the post. half).]

3 $^a$) T1.2 G3 M3 स (for तं). Ś D8.12 वेदवतानेन; Ñ2 B3.4 G (ed.) देवः पदांतेन(B3 °ते तु; G [ed.] °तेपि); V1 घृतपदांतेन; B1 D6.7.10.11 T1.2.4 G3 M3.5 वेदविदा ते (B1 G3 °ने)न; D1-5.9 धौतपटांतेन; T3 G1 वेदनया युक्तं; G2 देवविदा तेन (meta.); M8 वेदपदांतेन; M10 वेदविदेकेन; L (ed.) °वता तेन (for वेदविदाद्यस्तु). Ñ1 तमुद्भूतपदांतेन. —For 3$^{cd}$, T1.2 M3 subst. l. 4-5 of 713*. —$^d$) B3 शिशुं सं-; D4.5 शिशुकं (for शिशुं तं). Ñ1 -स्पृष्टवान्; D5

स्पृष्टमात्रस्ततः सोऽथ सलीलं पद्मजन्मना ।
जलसिक्तं यथा सस्यं पुनर्जीवितमाप्तवान् ॥ ४
प्राणवन्तमिमं दृष्ट्वा प्राणो गन्धवहो मुदा ।
चचार सर्वभूतेषु संनिरुद्धं यथा पुरा ॥ ५
मरुद्रोगविनिर्मुक्ताः प्रजा वै मुदिताभवन् ।
शीतवातविनिर्मुक्ताः पद्मिन्य इव साम्बुजाः ॥ ६
ततस्त्रियुग्मस्त्रिककुत्त्रिधामा त्रिदशार्चितः ।
उवाच देवता ब्रह्मा मारुतप्रियकाम्यया ॥ ७
भो महेन्द्राग्निवरुणधनेश्वरमहेश्वराः ।
जानतामपि तत्सर्वं हितं वक्ष्यामि श्रूयताम् ॥ ८
अनेन शिशुना कार्यं कर्तव्यं वो भविष्यति ।
ददतास्य वरान्सर्वे मारुतस्यास्य तुष्टिदान् ॥ ९ G. 7. 39. 9 B. 7. 36. 9 L. 7. 39. 9

-पृष्ट° (for -मृष्टवान्). ❀ Cv : तं तु वेदविदा वेदविदा तेन हनुमदुज्जीवनार्थमङ्गुल्यग्रविन्यस्तवेदवादेन ।; Cg : तमिति । हनुमज्जीवनार्थमङ्गुल्यग्रविन्यस्तवेदपदेन वेदविदा विदितनिखिलवेदवेदान्तेन ब्रह्मणा लम्बाभरणशोभिना हस्तेन तं शिशुं च परिसृष्टवान् ।; Ck : वेदविदा चतुरोऽपि वेदान्स्वमुखत्वेन विन्दता अनादितोऽशेषवेदार्थविदा ब्रह्मणा लम्बाभरणशोभिना हस्तेन वायुमुत्थाप्य तं शिशुं च परिमृष्टवान् ।; Ct : वेदविदानादितोऽशेषवेदार्थविदा लम्बाभरणशोभिना हस्तेन वायुमुत्थाप्य । परिमर्शः स्पर्शः. ❀

4 D5 om. (hapl. ?) 4. —$^{a}$) Ś Ñ1 V1 D8.12 M9 स्पृष्टमात्रं; D2.9 परिसृ( D9 °स्पृ )ष्टस्; T2 दृष्टमात्रस् (for स्पृष्ट°). Ś Ñ1 V1 D1–4.8.12 T4 तु देवेन; Ñ2 B1 तदाप्ये (Ñ2 °दा चै )ष; B3 तदैवाथ; B4 तदैवैष; D9 तु वेगेन; M8 तदा तेन ( for ततः सोऽथ ). —$^{b}$) Ñ2 B1.3.4 -योनिना ( for -जन्मना ). Ś Ñ1 V1 D1–4.8.9.12 T4 पाणिना( Ś D8.12 स तदा ) पद्मयोनिना. —$^{d}$) V1 D2.9 पुनर्जीवितवांस्तदा.

5 $^{a}$) Ś Ñ1 D8.12 तु तं; V1 D9 सुतं; B4 इदं ( sic ); D2 तु सं-; T4 शिशुं ( for इमं ). —$^{b}$) Ś D8.12 M2.9 प्राण-; Ñ2 B1.3.4 पुनर्; T4 सुतं ( for प्राणो ). D1.4 G1 तदा ( for मुदा ). —$^{c}$) D9 चकार. —$^{d}$) Ś D8.12 ( all with hiatus ) अविरुद्धं; Ñ ह्यविरोधं; V1 D1–4.9 ह्यवि°; B1 विशेषश्च; B3.4 ( both with hiatus ) अविरोधाद्; D5 ह्यविरुद्धो; T4 चावि°; G2 संनिरुद्धो; M1 सोनिरुंधन्; G ( ed. ) ह्यविरोधो; Cg.k.t as in text ( for संनिरुद्धं ). ❀ Cg : सर्वभूतेषु संनिरुद्धमन्तःप्रतिष्ठितं यथा भवति तथा प्राणः प्राणभूतश्चचार ।; Ck : संनिरुद्धमन्तःप्रतिष्ठितं यथा भवति तथैव स्थित्वा प्राणापानात्मना चचार ।; Ct : सर्वभूतेषु संनिरुद्धं संत्यक्तनिरोधं यथा भवति तथा । यथापुरा यथापूर्वं प्राणापानात्मना चचार. ❀

6 $^{a}$) Ñ2 मारुतक्रोध-; V1 D1–7.9–11 T3.4 G1 M5 मरुद्रो( D5 असुरो )धाद्वि-( D9 °द्वि ); D12 M1–4.7.8 °गाद्वि-; T1.2 °गात्तु; G2 °द्योगाद्वि-; M10 °गाभि- ( for मरुद्रोगवि- ). Ñ1 B4 मारुताद्रो( B4 °तक्रो )धमुक्तास्ताः; B1.3 मारुतः क्रोधनिर्मुक्तः. —M10 om. ( hapl. ) $6^{bc}$. —$^{b}$) Ñ2 V1 B3 D1–3.5–7.9–11 T4 ताः प्रजा; M5 प्रभावैर्. D2 सुस्थिता; D9 सुखिता ( for मुदिता ). Ñ1 B3.4 D1.3.5 बभुः; Ñ2 भृशं; L ( ed. ) भवन् ( for [ अ ]भवन् ). B1 स्वां प्रजां मुदिताः प्रभुः; D4 प्रजा मुदितया बभुः. —$^{c}$) Ś D8.12 शीतातप-; Ñ1 V1 D1–5.9 T4 Cg शीतदाह- ( for °वात- ). ❀ Cg : शीतदाहो हिमेन दाहः । शीतवातविनिर्मुक्ता इति च पाठः. ❀ —$^{d}$) Ñ1 V1 D1–5.9 M3 पुष्पिताः; Ñ2 B4 सद्विजाः; T1.2 G3 शैशिरे; G2 M5.10 ताः प्रजाः ( for साम्बुजाः ).

7 G3 om. $7^{ab}$. —$^{a}$) M1 तत्र. B1 त्रियामा; B3.4 त्रिधामा; D1.3.4 त्रियुग्मा. D1.4 त्रिकाकुस् ( sic ); D7 M2.8 त्रिककुप् ( for त्रिककुत् ). —$^{b}$) Ñ1 B4 त्रियुग्मस्; Ñ2 B3 त्रिमुख-; B1 त्रियुगस्; D3 त्रिधा*; D4 त्रिधामी ( for त्रिधामा ). Ś D3.5.8.12 त्रिवृतोच्युतः; Ñ B1.3.4 त्रिदिवच्युतः; V1 D1.4 त्रिदिवोच्युतः; D2 त्रिवृद्क्षुतः ( sic ); D9 त्रिवर्णोच्युतः; T G2 M2.8 त्रिदिवार्चितः; Cg as in text ( for त्रिदशार्चितः ). —$^{c}$) V1 D6 T1 देव तान् ( for देवता ). Ś D8.12 प्राप्ता; T3 G1 M2.4.9 सर्वा ( for ब्रह्मा ). —$^{d}$) Ś B4 D8.12 मारुतेः; D1.3.4 मारुति-; M8 ( with hiatus ) उवाच ( for मारुत- ). B3 -हितकाम्यया.

8 $^{a}$) G1 M1 हे ( for भो ). Ñ1 B1.3.4 इंद्रसूर्य-; M8 महेंद्राश्वि-; K ( ed. ) °द्रेश- ( for महेन्द्राग्नि- ). Ñ2 V1 B1.3.4 D1.3–5.10 T4 M2.5.9 -वरुणा. —After $8^{a}$, G3 erroneously repeats $5–8^{a}$. —$^{b}$) G2 M7 -प्रजेश्वर- ( for -धनेश्वर- ). Ś Ñ V1 B1.3.4 D2.4.6–12 M3.5 महेश्वर( D4 om. )-धनेश्वराः; T1–3 G1.3 M2.4.8–10 प्रजे( T1.2 G3 प्राणे )श्वर-धनेश्वराः( M2.9 °रौ ). —Ñ2 illeg. for $8^{cd}$. —$^{c}$) Ś D6–8.10–12 M3 वः ( for तत् ). Ñ1 B3.4 जानतोपि हि वः( B4 नः ) सर्वान्( B3 °र्वं ); V1 D1–5.9 T3.4 सर्वेषां वः( D2 T3 च ) परं ( V1 पुरं; D9 पुरो ) देवा; B1 जानतो मोक्षितः सर्वं. —$^{d}$) M1.10 इदं ( for हितं ). Ś D8.12 सर्वत्र ( for वक्ष्यामि ). M2.5.9 शृण्वतां. Ñ1 B1.3.4 D1.3–7.10.11 M3 वक्ष्यामि श्रूयतां हितं. ❀ Cg.k.t : वक्ष्यामि श्रूयतामिति । गुरुवैषम्यमार्षम्. ❀

9 $^{b}$) Ś D8.12 भवतां सं-; B1 M1 कर्तव्यं मे( M1 वै ). —$^{c}$) Ś D8.12 तद्दाम; Ñ1 B4 प्रयच्छध्वं; Ñ2 B1 प्रयच्छत; V1 तद्दास्यामो; B3 D10.11 तद्दद्ध्वं; D1–5.9 T4 तद्द्योस्य; D6.7 तद्ददध्वं ( for ददतास्य ). G3 वरं. V1 M9 सर्वान् ( for सर्वे ). —$^{d}$) Ś D6–8.10–12 [ अ ]स्य तुष्टये; Ñ2 B1.4 [ आ ]-त्मजा( B1 सुता )य वै; G3 [ अ ]स्य तुष्टिदं; M10 [ अ ]द्य तुष्टिदान् ( for [ अ ]स्य तु° ). Ñ1 V1 D1–5.9 T4 मारुतेर्मुदिता वयं.

G. 7. 39. 10
B. 7. 36. 10
L. 7. 39. 10

ततः सहस्रनयनः प्रीतिरक्तः शुभाननः ।
कुशेशयमयीं मालां समुत्क्षिप्येदमब्रवीत् ॥ १०
मत्करोत्सृष्टवज्रेण हनुरस्य यथा क्षतः ।
नाम्नैष कपिशार्दूलो भविता हनुमानिति ॥ ११
अहमेवास्य दास्यामि परमं वरमुत्तमम् ।
अतः प्रभृति वज्रस्य ममावध्यो भविष्यति ॥ १२
मार्ताण्डस्त्वब्रवीत्तत्र भगवांस्तिमिरापहः ।
तेजसोऽस्य मदीयस्य ददामि शतिकां कलाम् ॥ १३
यदा तु शास्त्राण्यध्येतुं शक्तिरस्य भविष्यति ।
तदास्य शास्त्रं दास्यामि येन वाग्मी भविष्यति ॥ १४
वरुणश्च वरं प्रादान्नास्य मृत्युर्भविष्यति ।
वर्षायुतशतेनापि मत्पाशादुदकादपि ॥ १५
यमोऽपि दण्डावध्यत्वमरोगत्वं च नित्यशः ।
दिशतेऽस्य वरं तुष्ट अविपादं च संयुगे ॥ १६

10 $^{b}$) $D_{6.7.10.11}$ $T_{1-3}$ G $M_{1.3.5.10}$ प्रीतियुक्तः ( for °रक्तः ). Ś $D_{8.12}$ पीतरक्तांशुभास्व( $Ś_{3}$ °क्तांशुभासु; $D_{8}$ °क्तां शुभां व )रां; Ñ $V_{1}$ $D_{1-5.9}$ रक्तां( $Ñ_{2}$ दिव्यां )वरधरः प्रभुः; $B_{1.4}$ दिव्यवज्र( $B_{4}$ °रत्न )धरः प्रभुः; $B_{3}$ दिव्यालंकारधृक्प्रभुः; $T_{4}$ पीतरक्तस्रगंबरः. — $^{d}$) $Ś_{2.3}$ $Ñ_{1}$ $D_{8.12}$ $G_{2}$ $M_{2.4.5.7-10}$ समुत्कृष्य ( for °त्क्षिप्य ). $D_{6.7.10.11}$ $M_{1}$ उत्क्षिप्ये( $M_{1}$ आमुच्ये )दं वचोब्रवीत्.

11 $^{a}$) $Ś_{3}$ $D_{8.12}$ -[ उ ]त्कृष्टवज्रेण; $D_{2}$ -[उ]त्सृष्टहस्तेन (sic) ( for °वज्रेण ). Ñ मया वज्रेण मुक्तेन; $B_{4}$ मया मुक्तेन वज्रेण. — $^{b}$) $T_{2}$ $G_{3}$ तस्य तदा; $G_{1}$ ते यत्तदा; $M_{3.8}$ अस्य यदा; $M_{5}$ अस्य तदा ( for अस्य यथा ). $B_{1}$ $D_{6.7.10.11}$ हतः ( for क्षतः ). Ś $D_{8.12}$ गिरौ हन्वा व्यवस्थितः; $Ñ_{1}$ $B_{3.4}$ यस्मादस्य क्षतो हनुः; $Ñ_{2}$ हनुर्यस्मात्क्षतो *वै; $V_{1}$ $D_{1-5.9}$ $T_{4}$ यस्मादेष( $D_{5}$ $T_{4}$ °दस्य ) हनौ( $V_{1}$ $D_{5}$ $T_{4}$ °नुर् ) हतः. ❀ Cv : मत्करोत्सृष्टवज्रेण हनुरस्य यथा क्षत इति पाठः. ❀ — $B_{1}$ om. 11$^{c}$–13$^{b}$. — $^{c}$) $Ñ_{1}$ $V_{1}$ नाम्नैव; $D_{1.3.4}$ नामैष; $D_{5}$ नामैक (sic); $D_{6.7.10.11}$ $T_{3}$ नाम्ना वै ( for नाम्नैष ). $V_{1}$ हरि-; $M_{3}$ कृत- ( for कपि- ). Ś $D_{8.12}$ नामैतत्कपिशार्दूल; $Ñ_{2}$ $B_{3.4}$ G (ed.) तस्मादेष( $Ñ_{2}$ °व ) कपिर्नाम्ना( G [ed.] °म ). — $^{d}$) Ś $D_{8.12}$ भवताद् ( for भविता ). Ñ $V_{1}$ $B_{3.4}$ $D_{1-5.9}$ हनूमांस्तु( $Ñ_{2}$ $B_{4}$ °न्वै; $B_{3}$ °न्हि; $D_{1.3}$ °श्च; $D_{4}$ °श्चैव[ hypm. ] ) भविष्यति.

12 $B_{1}$ om. 12 ( cf. v.l. 11 ). — $^{a}$) $B_{4}$ इमं चैव; $D_{6.7}$ $T_{4}$ अहमपि; $D_{10.11}$ °मस्य ( for अहमेव ). Ś $D_{10.11}$ प्र- ( for [अ]स्य ). $B_{3}$ इदं चास्य ददाम्यद्य; $M_{1}$ इदमेवापरं वत्स. — $^{b}$) $Ñ_{2}$ प्रथमं; $T_{1.2}$ $G_{3}$ $M_{3}$ ( all with hiatus ) अपरं; $M_{1}$ दास्यामि ( for परमं ). Ñ $V_{1}$ $D_{2-7.10.11}$ अद्भुतं ( for उत्तमम् ). $M_{5.7}$ वरं परमनुत्तमं. — $^{c}$) Ñ $V_{1}$ $D_{1-5.9}$ $T_{4}$ $G_{1.2}$ $M_{5}$ अद्य-; $D_{6.7.10.11}$ $T_{1.2}$ $G_{3}$ $M_{2.3.10}$ इतः; $T_{3}$ ततः ( for अतः ). — $^{d}$) $G_{2}$ मा वध्योयं ( for ममावध्यो ). — For 12$^{cd}$, Ś $D_{8.12}$ subst.; $D_{3}$ ins. l.2 only after 12 :

714* नासुं वज्राधिकं वास्त्रं प्रहरिष्यति मारुतिम् ।
अवध्योऽयमवध्योऽयमजरोऽमर एव च ।

[ (l. 1) $Ś_{2}$ च ( for वा ). — (l. 2) $D_{3}$ अमेयो and अजरामर ( for first अवध्यो and अजरोऽमर ). ]

13 $B_{1}$ om. 13$^{ab}$ ( cf. v.l. 11 ). — $^{a}$) $Ś_{1.2}$ Ñ $V_{1}$ $B_{3.4}$ $D_{1-11}$ $G_{2}$ $M_{4}$ Cg मार्तंडस्. $Ñ_{2}$ $G_{2}$ च ( for तु ). $D_{9}$ तं तु ( for तत्र ). — $^{c}$) $T_{4}$ [ ऽ ]द्य ( for ऽस्य ). — $^{d}$) Ś Ñ $B_{1.4}$ $D_{1-5.8.9.12}$ शतमं( $B_{4}$ °कां )शकं; $V_{1}$ शतमं करं; $B_{3}$ दशमीं कलां; $T_{1}$ च समांशकं; $G_{2}$ समतां कलां; $M_{8}$ गतिमान्कलां ( for शतिकां कलाम् ).

14 $^{a}$) $B_{4}$ $D_{6.7.10.11}$ T G $M_{1-5.7.9}$ च; Cg as in text ( for तु ). Ś Ñ $V_{1}$ $B_{1.3.4}$ $D_{1-5.8.9.12}$ शास्त्रम्. — $^{b}$) $Ś_{3}$ $D_{8.9.12}$ मतिर्; $B_{4}$ बुद्धिर् ( for शक्तिर् ). — $^{c}$) $G_{1}$ तदस्य- ( for तदास्य ). Ś $Ñ_{2}$ $D_{8.9}$ शास्त्रं च( $D_{9}$ प्र- ); $B_{1}$ $D_{6}$ च शास्त्रं; L (ed.) शास्त्रं तु. ❀ Cg : शास्त्रं शास्त्रार्थज्ञानम् । ऐन्द्रव्याकरणमित्यर्थः ।; Ck : शास्त्रं दास्यामीति । शास्त्राध्ययनं शास्त्रार्थज्ञानं चेत्यर्थः ।; so also Ct. ❀ — $^{d}$) $D_{5}$ यतो ( for येन ). — After 14, $D_{7}$ $T_{4}$ ins. :

715* भविता त्रिषु लोकेषु न कश्चिच्छास्त्रदर्शने ।;

while $T_{3}$ G $M_{1-5.7-10}$ ins. after 14 :

716* न चास्य भविता कश्चित्सदृशः शास्त्रदर्शने ।

[ $T_{2}$ [ अ ]न्यश्च ( for कश्चित् ). ❀ Cg : शास्त्रदर्शने शास्त्रज्ञाने. ❀ ]

15 $^{a}$) Ś $Ñ_{1}$ $V_{1}$ $B_{1.3}$ $D_{1.3-5.8.12}$ $M_{8}$ [ ऽ ]स्य ( for च ). — $^{b}$) $M_{1}$ ते ( for [ अ ]स्य ). ❀ Cg : वरुणोक्तवरस्तु स्वयुद्धनिमित्तमरणाभावमात्रम्. ❀ — $G_{1}$ om. (hapl.) 15$^{c}$–17$^{b}$. — $^{c}$) $D_{1.4}$ -शतेवापि ( for -शतेनापि ). $T_{3}$ वर्षाणामयुतेनापि. — $^{d}$) $Ñ_{2}$ $B_{1.3.4}$ तथा ( for अपि ). $T_{4}$ मत्पाशेभ्यो जलादपि.

16 $G_{1}$ om. 16 ( cf. v.l. 15 ). — $^{a}$) $B_{4}$ यम-. Ś Ñ $V_{1}$ $B_{1.3.4}$ D $T_{1.2.4}$ $G_{3}$ $M_{3}$ दंडाद्; $M_{8}$ [ ऽ ]ददाद् ( for ऽपि दण्ड- ). — $^{b}$) Ś $B_{3}$ $D_{8.12}$ $M_{1}$ अरोगित्वं. $D_{6.7.10.11}$ $T_{4}$ दत्तवान्; $T_{3}$ सर्वदा ( for नित्यशः ). $B_{4}$ आरोग्यं चैव नित्यशः. — Note hiatus between $^{c}$ and $^{d}$. — $^{c}$) Ś दिशेत्तस्य; Ñ $B_{1.3.4}$ ददावस्य; $V_{1}$ $D_{9}$ धनेशोस्य; $D_{1.3.4}$ दिदेशास्य; $D_{2}$ दिशतास्य; $D_{5}$ वित्तेशोस्य; $M_{1}$ दिशते स्म; $M_{3}$ दिशत्यस्य ( for दिशतेऽस्य ). $D_{5}$ $M_{4}$ परं. $D_{4}$ पुष्टो; $G_{2}$ जुष्टम्; $M_{5}$ तुष्टिम् ( for तुष्ट ). $D_{6.7.10.11}$ $T_{4}$ वरं ददामि( $D_{7}$ $T_{4}$ °ति ) संतुष्टः; $M_{8}$ दिशते वरं तुष्टस्तु. — $^{d}$) Ś Ñ $V_{1}$ $B_{1.3.4}$ $D_{1-5.8.9.12}$ ह्यविषादं( $D_{2}$ °दश् ); $T_{1.2}$ $M_{2}$ अविषादश्; $T_{4}$ ह्यमरत्वं; $G_{3}$ अविदष्टश्; Ck.t as in text ( for अविषादं ). $D_{1.3.4}$ हि; $M_{3}$ स्म ( for च ). $Ñ_{1}$ नित्यशः ( for संयुगे ). ❀ Ck.t : तुष्ट अविषादमित्यार्षः ( Ct °र्षोऽसंधिः ). ❀

गदेयं मामिका नैनं संयुगेषु वधिष्यति ।
इत्येवं वरदः प्राह तदा ह्येकाक्षिपिङ्गलः ॥ १७
मत्तो मदायुधानां च न वध्योऽयं भविष्यति ।
इत्येवं शंकरेणापि दत्तोऽस्य परमो वरः ॥ १८
सर्वेषां ब्रह्मदण्डानामवध्योऽयं भविष्यति ।
दीर्घायुश्च महात्मा च इति ब्रह्माब्रवीद्वचः ॥ १९
विश्वकर्मा तु दृष्ट्वैनं बालसूर्योपमं शिशुम् ।
शिल्पिनां प्रवरः प्राह वरमस्य महामतिः ॥ २०
विनिर्मितानि देवानामायुधानीह यानि तु ।
तेषां संग्रामकाले तु अवध्योऽयं भविष्यति ॥ २१
ततः सुराणां तु वरैर्दृष्ट्वा ह्येनमलंकृतम् ।
चतुर्मुखस्तुष्टमुखो वायुमाह जगद्गुरुः ॥ २२   G. 7. 39. 22 B. 7. 36. 21 L. 7. 39. 22

17 $G_1$ om. $17^{ab}$ (cf. v.l. 15).—$^a$) Ś $D_{2.5.8.9}$ मामका ($D_{2.9}$ °की). Ś$_{1.2}$ $D_{2.5.8.9.12}$ चैव; Ś$_3$ Ñ $V_1$ $B_3$ $D_{1.3.4}$ $T_4$ चैनं; $M_{2.4.7.9}$ नेमं (for नैनं).—$^b$) $T_2$ भविष्यति. Ś Ñ$_2$ $V_1$ $B_3$ $D_{1-5.8.9.12}$ $T_4$ K (ed.) संयुगे ($V_1$ °ग्रामे) न हनि (K [ed.] वधि)ष्यति.—$D_9$ om. $17^{cd}$.—$^c$) $M_3$ इति स्म. Ś Ñ $V_1$ $B_{1.3.4}$ $D_{3.5-8.10-12}$ $T_4$ धनदः; $G_2$ वरदं (sic) (for वरदः). Ś $B_3$ $D_8$ प्रादात्; $D_{12}$ प्राहस् (for प्राह).—$^d$) $T_2$ तथा हि; $G_2$ तथापि (for तदा हि). $D_{1.2.4-6}$ [ए]काक्ष-. Ś$_3$ $D_{8.12}$ तत्तदा ह्येकपिंगलः. ⁂ Cv: एकाक्षिपिङ्गलः वैश्रवणः. ⁂

18 $^a$) $D_6$ ततो. Ś $D_{2.7}$ गदा-; Ñ$_2$ मम; $D_6$ महा- (for मद्). Ś$_{2.3}$ lacuna for नां च. Ś$_1$ हि; $D_{12}$ $T_3$ तु (for च). $D_8$ मदायुधान्नित्यं; L (ed.) गदायुधा(त्)पाशाद्. ⁂ Ct: मदायुधानां शूलादिपाशुपतास्त्रान्तानाम्. ⁂—$^b$) Ś $D_{2.6-12}$ $T_1$ $G_1$ $M_3$ अवध्योयं; $T_3$ ह्यव°; $M_{2.4.7.10}$ वध्योयं न (by transp.) (for न वध्योऽयं).—After $18^{ab}$, $D_3$ ins.; while $D_{1.4}$ ins. after 18:

717* शूलोऽयं मामको येन संयुगे न हनिष्यति ।
[ $D_3$ नैनं (for येन). ]

—$^c$) $D_{2.9}$ इत्येष. Ñ$_1$ $D_{1-5.9}$ [अ]स्य (for [अ]पि).—$^d$) Ñ$_1$ $D_{1-5.9}$ वै (for ऽस्य).—After 18, Ś $D_8$ ins.:

718* सर्वेषां च त्रिशूलानामवध्योऽयं भविष्यति ।;

while $D_7$ $T_4$ ins. after 18:

719* मच्छूलेनाप्यवध्यत्वं मम चैव भविष्यति ।
मच्छक्तिमचलां चैव वहन्नित्यं विशेषतः ।
[ (l. 2) $D_7$ हंत्येव हि (for वहन्नित्यं). ]

19 $B_{1.3}$ read 19 after 21. $D_{6.7.10.11}$ $T_4$ read 19 ($^{abcd}$ transp.) before 22.—$^a$) Ñ$_2$ $B_{1.3.4}$ ब्रह्मास्त्र- (for सर्वेषां).—$^b$) $D_{6.7.11}$ $T_4$ अवध्यत्वं; $D_{10}$ °ध्यस्त्वं (for °ध्योऽयं):—After $19^{ab}$, $G_2$ repeats erroneously $18^c$–$19^b$. Note hiatus between $^c$ and $^d$.—$^c$) Ś $D_{8.12}$ सु- (for first च). ⁂ Cg: सर्वेषां ब्रह्मास्त्रान्तानामित्यर्थः । ब्रह्मदण्डानां ब्रह्मशापानां ब्रह्मायुधानां वा ।; Ck: सर्वेषामिति । ब्रह्मास्त्रान्तानामित्यर्थः । ब्रह्मदण्डः प्रसिद्धः । ब्रह्मर्षिक्रियमाणसंहारार्थशापे च ब्रह्मदण्डः । महात्मा चेति । महान् आत्मा यस्य स तथा । ब्रह्मज्ञश्चेत्यर्थः ।; Ct: महात्मा महानात्मा यस्य सः । ब्रह्मज्ञ इति यावत् । सर्वेषां ब्रह्मास्त्रान्तानाम् । ब्रह्मदण्डो ब्रह्मर्षिक्रियमाणः संहारोद्देश्यकः शापो न भविष्यति । अस्येति शेषः. ⁂—$^d$) $D_{6.7.10.11}$ ब्रह्मा तं प्र- (for इति ब्रह्मा). $T_4$ तमब्रवीत्.

20 $^a$) Ñ $V_1$ $B_3$ $D_{1-7.9-11}$ $T_{3.4}$ च; $B_{1.4}$ $M_1$ [अ]पि; $M_3$ स्म (for तु). Ñ$_1$ $D_3$ $M_1$ [ए]वं; $V_1$ [ए]व; $B_{1.4}$ $D_{1.4-7.10.11}$ $T_{2.4}$ [इ]मं (for [ए]नं). ⁂ Cg: विश्वकर्मेति । यज्ञाद्यायुधानामपि विश्वकर्मनिर्मितत्वेऽपि तदतिरिक्तायुधपरमिदम्. ⁂—$^b$) Ś$_{2.3}$ Ñ$_2$ $D_1$ $T_4$ $M_1$ बालं. Ñ $V_1$ $D_{2.3.5}$ $T_4$ -सूर्यनिभं; $D_{1.4.9}$ $T_3$ -सूर्यसमं (for -सूर्योपमं). Ñ$_1$ $V_1$ सुतं (for शिशुम्). $D_{6.7.10.11}$ बालं प्रति महारथः.—$D_{6.7.10.11}$ om., B (ed.) reads within brackets $20^{cd}$.—$^c$) $D_3$ $G_2$ $M_{2.4.7.9.10}$ वरदः; $M_1$ परमः (for प्रवरः). Ś Ñ $V_1$ $B_{1.3.4}$ $D_{2.3.5.8.9.12}$ प्रादाद्.—$^d$) $B_3$ बालस्य (for वरम्). $T_3$ $G_{1.2}$ $M_{2.4.7.9.10}$ महात्मनः (for °मतिः). Ñ $V_1$ $D_{1-5.9}$ $T_4$ G (ed.) वरमस्मै महात्मने (G [ed.] °मतिः).

21 $^a$) Ñ$_1$ संनिर्मितानि; Ñ$_2$ $V_1$ $B_{1.3}$ $D_{1-4.9}$ मन्नि°; $B_4$ यन्नि°; $D_5$ मन्निमित्तानि; $M_1$ निर्मितानि च (for विनिर्मितानि). Ś $D_{8.12}$ दैवानि.—$^b$) Ñ $V_1$ $B_{1.4}$ $D_3$ च (for तु). $D_9$ तु यानि ह; $T_1$ $M_3$ महांति च; $T_2$ महाकपिः; $T_3$ मया तु वै; $G_2$ वधाय तु; $M_1$ ममापि तु (for [इ]ह यानि तु). Ś $D_{8.12}$ देवानामायुधानि च.—Note hiatus between $^c$ and $^d$.—$^c$) Ñ$_1$ $D_{1.4}$ -काले च; $D_{2.3.5.9}$ °लेयं; $T_{1.2}$ $G_{1.3}$ $M_{2.4.8.9}$ °लेषु (for -काले तु).—$^d$) Ñ$_1$ $B_{1.4}$ $G_{1.3}$ न वध्योयं; $T_3$ $M_3$ ह्यव°; $M_{1.5}$ वध्योयं न (for अवध्योऽयं). $V_1$ $D_{1-5.9}$ अ ($D_{1.4}$ त्व)वध्यो भविता ($V_1$ $D_1$ °वति) सदा.—For 21, $D_{6.7.10.11}$ $T_4$ K (ed.) subst.:

720* मत्कृतानि च शस्त्राणि यानि दिव्यानि तानि च ।
तैरवध्यत्वमापन्नश्चिरजीवी भविष्यति ।
[ (l. 1) K (ed.) संयुगे (for तानि च).—(l. 2) $D_7$ चिरंजीवी. ]

—After 21, $B_{1.3}$ read 19.

22 Before 22, $D_{6.7.10.11}$ $T_4$ read 19 ($^{abcd}$ transp.).—$^a$) Ñ$_1$ $V_1$ $D_{1-5}$ $T_4$ प्रवरो; $D_9$ प्रवणे (sic) (for तु वरैर्). Ś $D_{8.12}$ ततः सुरैस्तु सहितो; Ñ$_2$ $B_{1.3.4}$ एवं वरैः ($B_1$ मुनैः [sic]) सुराणां च ($B_3$ तु); $T_1$ तत्सुराणां तु प्रवरैर्.—$^b$) $M_5$ बालम् (for ह्येनम्). Ñ$_1$ $V_1$ $D_{1-5.9}$ $T_4$ दृष्ट्वा वरसमन्वितं ($D_5$ °मनुत्तमं).—$^c$) Ś $D_{8.12}$ हृष्टमुखो;

G. 7. 39. 23
B. 7. 36. 22
L. 7. 39. 23

अमित्राणां भयकरो मित्राणामभयंकरः ।
अजेयो भविता तेऽत्र पुत्रो मारुत मारुतिः ॥ २३
रावणोत्सादनार्थानि रामप्रीतिकराणि च ।
रोमहर्षकराण्येष कर्ता कर्माणि संयुगे ॥ २४
एवमुक्त्वा तमामन्त्र्य मारुतं तेऽमरैः सह ।
यथागतं ययुः सर्वे पितामहपुरोगमाः ॥ २५
सोऽपि गन्धवहः पुत्रं प्रगृह्य गृहमानयत् ।
अञ्जनायास्तमाख्याय वरं दत्तं विनिःसृतः ॥ २६
प्राप्य राम वरानेष वरदानबलान्वितः ।
बलेनात्मनि संस्थेन सोऽपूर्यत यथार्णवः ॥ २७
बलेनापूर्यमाणो हि एष वानरपुंगवः ।
आश्रमेषु महर्षीणामपराध्यति निर्भयः ॥ २८
स्रुग्भाण्डानग्निहोत्रं च वल्कलानां च संचयान् ।
भग्नविच्छिन्नविध्वस्तान्सुशान्तानां करोत्ययम् ॥ २९

---

$\tilde{N}$ $V_{1}$ $D_{2.3.5-7.9-11}$ $T_{4}$ $M_{1}$ तुष्टमना; $B_{4}$ तु सुमुखो; $D_{1.4}$ तु भगवान् ( for तुष्टमुखो ).

23 $^{a}$) $\tilde{N}_{1}$ एषोमित्र- ( for अमित्राणां ). Ś $D_{8.12}$ भयं कर्ता. $\tilde{N}_{2}$ $B_{1}$ एष मित्राभय( $B_{1}$ °यं )करः; $V_{1}$ $D_{1-5.9}$ एषोमित्रभयंकारी; $B_{3.4}$ मित्राणामभयं कर्ता; $M_{5}$ भयंकरो ह्यमित्राणां. —$^{b}$) $G_{2}$ om. from णा up to तमा in $25^{a}$. Ś $\tilde{N}_{1}$ $D_{1-5.8.12}$ मित्राणामभयप्रदः; $\tilde{N}_{2}$ $B_{1.3.4}$ शत्रूणां च ( $B_{1}$ हि ) भयंकरः. —$^{c}$) $B_{3}$ भवतः ( for भविता ). Ś $\tilde{N}$ $V_{1}$ $B_{1.3.4}$ D $T_{4}$ $M_{3}$ पुत्रस्; $T_{1.2}$ $G_{3}$ $M_{1.5}$ तत्र ( for तेऽत्र ). —$^{d}$) Ś $\tilde{N}$ $V_{1}$ $B_{1.4}$ D $T_{4}$ $M_{3}$ तव ( for पुत्रो ). $\tilde{N}_{2}$ $B_{1}$ $D_{1.3.4}$ मानद; $V_{1}$ मा रुद; $B_{4}$ मानदः ( for मारुतिः ). $B_{3}$ युद्धे चायं भविष्यति. —After 23, $D_{7.10.11}$ $T_{4}$ ins. :

721* कामरूपः कामचारी कामगः प्लवतां वरः ।
भवत्यव्याहतगतिः कीर्तिमांश्च भविष्यति ।

24 $G_{2}$ om. 24 ( cf. v.l. 23 ). —$^{a}$) $\tilde{N}_{1}$ $V_{1}$ $D_{1-5.8}$ ( before corr. ).$_{9}$ $T_{4}$ -[ उ ]त्सा( $D_{1.3.4}$ °च्छे )दनार्थाय; $B_{1.3}$ -[ उ ]च्छेदनार्थानि. —$^{b}$) Ś $D_{8.12}$ $M_{1.4.5.10}$ -प्रिय- ( for -प्रीति- ). $\tilde{N}_{1}$ $V_{1}$ $D_{1-5.9}$ $T_{4}$ राघवप्रीणनाय च( $D_{5}$ नः ). —$^{c}$) $D_{1-3.5}$ रामहर्ष-. $D_{2.6.7.10.11}$ T $G_{1.3}$ $M_{3}$ [ ए ]त्र ( for [ ए ]ष ). $\tilde{N}_{2}$ $B_{1.3.4}$ दैवतानां च सर्वेषां. —$^{d}$) $B_{3.4}$ कार्याणि ( for कर्माणि ). —After 24, $\tilde{N}_{2}$ $B_{1.3.4}$ read an addl. Colophon.

[ *Sarga name* : $\tilde{N}_{2}$ $B_{1.3.4}$ हनूमद्वरप्र( $B_{1}$ °* )दानं. —*Sarga no.* ( figures, words or both ) : $B_{3}$ om.; $\tilde{N}_{2}$ 38; $B_{1}$ 39; $B_{4}$ 40. ]

25 $G_{3}$ om. up to तमा in $^{a}$ ( cf. v.l. 23 ). —$^{a}$) Ś $D_{8.12}$ समासेन; $\tilde{N}_{1}$ तदामंत्र्य; $D_{5}$ समा° ( for तमामन्त्र्य ). —$^{b}$) $D_{6.7.10.11}$ $T_{1.2}$ $G_{3}$ $M_{3}$ तु ( for ते ). $\tilde{N}_{1}$ तदामराः; $\tilde{N}_{2}$ $B_{1.3.4}$ $D_{1-5.9}$ [ ऽ ]मराः सह( $D_{1-5.9}$ शुभाः ); $V_{1}$ सुराः शुभाः; $T_{4}$ [ ऽ ]मरास्ततः; $M_{1}$ सुराः सह; $M_{3}$ [ अ ]मरास्तदा ( for ऽमरैः सह ). Ś $D_{8.12}$ त्रिदिवेशाः( $D_{8.12}$ °दशास्ते ) समीरणं. —$^{c}$) $M_{8}$ यथागता. —$^{d}$) $B_{1.4}$ -पुरःसराः ( for -पुरोगमाः ).

26 $^{a}$) Ś $D_{8.12}$ तत्र ( for पुत्रं ). —$^{b}$) $B_{2}$ आगतः; $B_{4}$ °गमत् ( for आनयत् ). Ś $D_{8.12}$ प्रगृह्य सुतमात्मनः. —$^{c}$) $B_{4}$ अंजनायै. $G_{2.3}$ $M_{1.3-5.7.10}$ तदा ( for तम् ). $\tilde{N}_{1}$ $V_{1}$ $D_{1-5.9}$ $T_{1.2.4}$ $M_{8}$ अंजनायै( $T_{1.2}$ °यास् ) तदाचख्यौ( $M_{8}$ समाख्याय). —$^{d}$) Ś $D_{8.12}$ $M_{1.5}$ वरदानं; $\tilde{N}_{1}$ वरप्राप्तिम्; $\tilde{N}_{2}$ $V_{1}$ $B_{1.3}$ $D_{2.5.10.11}$ $T_{4}$ $G_{2}$ $M_{2.3.9}$ Cg.t वरदत्तं ( for वरं दत्तं ). $\tilde{N}$ $D_{1-5.9}$ $T_{4}$ इति प्रभुः; $V_{1}$ इमं प्रभुः; $D_{6.7.10.11}$ $M_{3.8}$ विनिर्गतः ( $M_{8}$ °तं ); $T_{1.2}$ $M_{4}$ विनिःसृतं; $T_{3}$ $G_{1}$ सुरोत्तमैः; $M_{1.5}$ दिवि स्थितैः ( for विनिःसृतः ). ❀ Cg.t : वरदत्तं दत्तवरम्. ❀

27 $\tilde{N}_{2}$ reads 27( $^{ab}$ [ first time ] illeg. ) twice. —$^{a}$) $G_{2}$ एवं प्राप्य ( for प्राप्य राम ). Ś $D_{8.12}$ प्राप्यैव निर्द( $Ś_{1.2}$ °र्भ )यस्त्वेष; $\tilde{N}$ $D_{9}$ प्राप्य चापि( $D_{9}$ °सं चाति )-वयस्त्वेष; $V_{1}$ $B_{3.4}$ $D_{2.3}$ प्राप्य( $B_{4}$ तस्मान् ) नातिव्रय( $V_{1}$ चातिबल )स्त्वेष; $B_{1}$ तस्मात्त्वभिचराम्येष; $D_{1.4}$ प्राप्यैतानि वरस्त्वेष. —$^{b}$) $Ś_{3}$ $D_{8}$ वरदानं. $T_{1-3}$ G $M_{2-4.7.9.10}$ -समन्वितः ( for -बलान्वितः ). — $V_{1}$ om. $27^{cd}$. —$^{c}$) $D_{6.7.10.11}$ T $G_{1}$ $M_{3}$ जवेन ( for बलेन ). $\tilde{N}$( $\tilde{N}_{2}$ first time ) $B_{1.3.4}$ [ आ ]त्मसमुत्थेन ( for °निसंस्थेन ). —$^{d}$) Ś $D_{8.12}$ ( all with hiatus ) आ( Ś अ )पूर्यत; $\tilde{N}_{1.2}$ ( second time ) $D_{2.9}$ $T_{4}$ ह्यापूर्य( $D_{9}$ °रि )त; $\tilde{N}_{2}$ ( first time ) $B_{4}$ ( with hiatus ) अपां पूर्णो( $\tilde{N}_{2}$ °र्णैर् ); $B_{1.3}$ ( with hiatus ) आपुपूर( $B_{3}$ °प्लाव ); $D_{1.3-5}$ संपूर्यत; $D_{6.7.10.11}$ सोसौ पूर्ण; L ( ed. ) ह्यपूर्यत ( for सोऽपूर्यत ). Ś $\tilde{N}_{1.2}$ ( second time ) D $T_{4}$ ( all except $D_{6.7.10.11}$ with hiatus ) इवार्णवः.

28 $T_{1-3}$ $G_{3}$ om. ( hapl. ) $28^{ab}$. $\tilde{N}_{2}$ illeg. for $^{a}$. Note hiatus between $^{a}$ and $^{b}$. —$^{a}$) $D_{10.11}$ तरसा; $M_{5}$ बलैर् ( for बलेन ). $D_{6}$ पूर्यमाणो. $B_{1.3}$ च; $B_{4}$ तु; $D_{6.7.10.11}$ $M_{1.5}$ [ ऽ ]पि ( for हि ). Ś $D_{8.12}$ आपूर्यमाणो बलवान्; $\tilde{N}_{1}$ $V_{1}$ $D_{1-5.9}$ आपूर्यमाणस्तरसा. —$^{b}$) $\tilde{N}_{1}$ $V_{1}$ $D_{1-3.9}$ ह्येष; $D_{6.7.10.11}$ $T_{4}$ तदा ( for एष ). $B_{1.3.4}$ वयसा च प्लवंगमः. —$^{d}$) $M_{8}$ अवरुध्यति. $\tilde{N}_{2}$ $B_{1.3.4}$ $M_{10}$ नित्यशः; $D_{5}$ $M_{1}$ निर्भयं ( for निर्भयः ).

29 $D_{5}$ reads 29 twice. —$^{a}$) $\tilde{N}_{2}$ स्रुग्भांडम्; $B_{3}$ $D_{9}$ $T_{3}$ $M_{7.10}$ Cg.k.t स्रुग्भांडानि. $G_{1}$ अग्निहोत्रांश्च ( for °होत्रं ). Ś $\tilde{N}_{1}$ $V_{1}$ $D_{1-5}$( second time ).$_{8.12}$ स्रुग्भांडं दहनाज्यं ( $Ś_{3}$ $D_{5.8.12}$ °ध्यं ) च; $B_{4}$ $M_{1.3.5.8}$ स्रुग्भांडान्य( $M_{1}$ °डम )ग्निमाज्यं च; $D_{5}$( first time )$_{-7.10.11}$ $T_{4}$ स्रुग्भांडान्यग्निहोत्राणि. ❀ Cg.k.t. : स्रुग्भाण्डानि यज्ञोपकरणानि । Ct adds अग्निहोत्राण्यग्निहोत्रसाधनभूताग्नयः. ❀ —$^{b}$) $T_{1}$ वल्क-

सर्वेषां ब्रह्मदण्डानामवध्यं ब्रह्मणा कृतम् ।
जानन्त ऋषयस्तं वै क्षमन्ते तस्य नित्यशः ॥ ३०
यदा केसरिणा त्वेष वायुना साञ्जनेन च ।
प्रतिषिद्धोऽपि मर्यादां लङ्घयत्येव वानरः ॥ ३१
ततो महर्षयः क्रुद्धा भृग्वङ्गिरसवंशजाः ।
शेपुरेनं रघुश्रेष्ठ नातिक्रुद्धातिमन्यवः ॥ ३२
बाधसे यत्समाश्रित्य बलमस्मान्प्लवंगम ।
तद्दीर्घकालं वेत्तासि नास्माकं शापमोहितः ॥ ३३
ततस्तु हृततेजौजा महर्षिवचनौजसा ।
एषोऽश्रमाणि नात्येति मृदुभावगतश्चरन् ॥ ३४

G. 7. 40. 11
B. 7. 36. 35
L. 7. 39. 34

लाजिन- ( for °नां च ). T3 संचयं. Ś Ñ V1 B3 D1–5 (second time).8.9.12 वल्कलान्यजिनानि च; B1.4 वल्कलानि च सर्वशः. —$^{c}$) G1 भिन्न- ( for भग्न- ). D8 -[ आ ]विच्छिन्न-. Ś V1 D1.4.8.12 -विध्वस्त-; Ñ1 D3.5( first time ).9 -विध्वस्तं; D2 -विध्वंसं; T1.2 -विस्रस्तान् ( for -विध्वस्तान् ). Ñ2 B1.3.4 भग्नविध्वस्तच्छिन्नानि. ❀ Ct : भग्नविच्छिन्नविध्वस्तशब्दाः स्रुग्भाण्डादिषु क्रमेण योज्याः. ❀ —$^{d}$) Ś D8.12 -संशीतानि; V1 -समस्तानि; D1.4 -संशस्तानि; D3.5 ( first time ) संश्रितोपि; D5 ( second time ) T4 M3 महर्षीणां; D10 G1 M8 सशांतानां; D11 संशांतानां; T1 G3 शांतानग्नीन् ; T2 सशांतानग्नीन् (hypm.); G2 सुगंधानां; M1 हर्वींषि च ( for सुशान्तानां ). D1.3–5 ( first time ) [ अ ]करोदयं; D6 करोत्यसौ; G3 करो** ( damaged ) ( for करोत्ययम् ). Ñ B1.3.4 करोत्येष प्लवंगमः; D2.9 समंतादकरोदयं; T3 सुशांतानकरोदयं. ❀ Cg : संशान्तानां शान्तिप्रधानानाम् ।; Ck : संशान्तानामिति । शान्तिप्रधानानामृषीणामित्यर्थः ।; so also Ct. ❀ —After 29, D5 (after second occurrence).6.7.10.11 G2 M1.3.5 ins. :

722* एवंविधानि कर्माणि प्रावर्तत महाबलः ।

[ M3 कुरुते स्म ( for प्रावर्तत ). G2 महाकपिः. ❀ Ct : प्रावर्तत । प्रावर्तयदित्यर्थः. ❀ ]

30 Before 30, G2 reads $31^{ab}$. —$^{a}$) M1.8 एव ( for ब्रह्म- ). M8 देवानाम् ( for -दण्डा° ). —$^{b}$) Ś Ñ2 V1 B1.3.4 D6–8.10–12 G2 अवध्यो. Ñ1 प्रभुना; Ñ2 विधिना; B1.3 विष्णुना; B4 विभुना; D1.3–7.10.11 T3 G1.2 M1.2.4.5.7–10 Cg शंभुना ( for ब्रह्मणा ). Ś Ñ2 B1.3.4 D6–8.10–12 कृतः. ❀ Cg.t : शंभुना ब्रह्मणा । Cg adds "शम्भूब्रह्मत्रिलोचनौ" इत्यमरः ।; Ck : शंभुना चतुर्मुखरुद्रेण. ❀ —$^{c}$) Ñ1 V1 D1–5.9 T4 मुनयस्. Ś Ñ1 V1 D8.12 ते वै; D2.9 तद्धि; D5 त्वेनं; D6.7.10.11 T4 G1 M1 सर्वे ( for तं वै ). Ñ2 B1.3.4 इति विज्ञाय मुनयः; M5 जानयंतर्षयस्तं वै ( sic ). —$^{d}$) D6.7.10.11 Ct सहंते ( for क्षमन्ते ). D1–5.9–11 T1.4 G1.3 M3.5.10 Cv.g.t शक्तितः; T2 शक्तिभिः ( for नित्यशः ). Ś D8.12 क्षमं तस्य न शक्तितः ( sic ); Ñ1 V1 क्षमंत तस्य शक्तितः; Ñ2 B1.4 क्षमंते शक्तिहानितः; B3 क्षमंते स्म स्वशक्तितः. ❀ Cv : तस्य शक्तितः शंभोर्माहात्म्यात् ।; Cg : तस्य शक्तितः ब्रह्मणो वरशक्तितः ।; Ct : तस्य ब्रह्मणः शक्तितो वरसामर्थ्यात्सहन्ते क्षमन्ते तस्य चेष्टितमिति शेषः. ❀

31 G2 reads $31^{ab}$ before 30. —$^{a}$) V1 D1–5.9 तदा; D6.7.10.11 T4 तथा ( for यदा ). Ś Ñ1 V1 D1–5.9.12 T4 हि; G2 च ( for तु ). —$^{b}$) S D8.12 [ अं ]जनया तथा; Ñ B1.3 स्वजनैः सह; V1 D2.9 T4 [ अं ]जनयापि च ( D2 वा ); B4 प्रजनेन च; D5.7 10.11 सोंजनी( D7 °ना )सुतः. —$^{d}$) B3 G1 M3 लंघयित्वा. Ś2.3 B4 D1.2.4–9.12 T G M1.3.5.10 [ ए ]ष; B3 च ( for [ ए ]व ).

32 $^{a}$) Ś D8 तदा. V1 D2.5 सिद्धा ( for क्रुद्धा ). —$^{b}$) Ñ1 B3 M3 -[ आं ]गि( M3 °गी )रस-; T3 -[ अं ]गीरस-. —$^{c}$) D8 पुनरेतं. D2.9 नरश्रेष्ठ; G2 M5.8.10 हरिश्रेष्ठं ( for रघुश्रेष्ठ ). —$^{d}$) Ñ1 D2.9 तेपि; V1 T4 तेति-; M5 अति- ( for नाति- ). D3 -क्रोधाः; M7 -वृद्धा ( for -क्रुद्धा ). D7 विमन्यवः; M8 न मन्यवः. Ñ2 B1 नातिक्रोधसमन्विताः; B3.4 हनूमंतं तपोधनाः; D1.4 नातिक्रोधातिमन्यु च; D5 ते तु क्रुद्धाः समन्यवः. ❀ Cg.k.t : ( Cg नातिक्रुद्धातिमन्यवः । ) क्रोधो जिघांसा । मन्युरमर्षः । अतिक्रुद्धा अतिमन्यवश्च न भवन्तीति यावत् ( Ck °न्तीति तथा; Ct °न्तीत्यर्थः ). ❀

33 $^{a}$) V1 D1.4 T1.4 M2.8.9 बाधते. Ś Ñ1 D6.7.8.12 यं ( for यत् ). —$^{b}$) D6.7 वरम् ; T4 बलेन ( for बलम् ). V1 ( m. ) D1.4.12 T1.2 M2.8.9 प्लवंगमः. —$^{c}$) Ś Ñ1 D1.3.4.8.12 न ( for तद्- ). D1.4 दीर्घकाले. Ñ2 B3.4 तत्त्वं न वेत्स्यसे कालं; B1 न त्वमात्मबलं वेत्सि; T4 न बलं स्वस्य वेत्तासि; G ( ed. ) तत्त्वं नात्मबलं वेत्सि. —$^{d}$) Ś D8.12 तस्मात्त्वं; M1 मास्माकं ( for नास्माकं ). Ñ1 D1.4 ( all with hiatus ) अस्मच्छापविमोहितः; Ñ2 B1.3.4 किंचि( Ñ2 B3 कश्चि )च्छापविमोहितः; D2.5.9 T4 ना( T4 ह्य )स्मच्छापविमोहितः; D3 ह्यस्मरञ्शापविमोहितः ( hypm. ). —After 33, Ñ2 B1 ins. :

723* स्मारितो मित्रकार्यार्थं स्ववीर्यं वेत्स्यसे पुनः ।

[ Ñ2 illeg. for the prior half and सुरार्थं ( for स्ववीर्यं ). ];

while D6.7.10.11 T3.4 ins. after 33 :

724* यदा ते स्मार्यते कीर्तिस्तदा ते वर्धते बलम् ।

[ D7 तु ( for first ते ). ]

34 M9 om. ( hapl. ? ) 34–36. —$^{a}$) Ś2.3 B1 D1.2.4–6.8–12 T4 तु हत-; Ñ2 [ ऽ ]यं हृत-; T1.2 स हृत-; G3 M1 संहृत- ( for तु हृत- ). Ñ2 -तेजास्तु; B1 °जा हि; B3.4 °जा वै ( for -तेजौजा ). —$^{b}$) Ñ1 -वचनादसौ; B3 °नात्तदा; M2 °नेन वै ( for -वचनौजसा ). —$^{cd}$) T3 आश्रमानेष; G1 आश्रमाणि च ( for एषोऽश्रमाणि ). D10–12 तान्येव; M10 नाभ्येति ( for

G. 7. 40. 11 B. 7. 36. 36 L. 7. 39. 35

अथ ऋक्षरजा नाम वालिसुग्रीवयोः पिता ।
सर्ववानरराजासीत्तेजसा इव भास्करः ॥ ३५
स तु राज्यं चिरं कृत्वा वानराणां हरीश्वरः ।
ततस्त्वृक्षरजा नाम कालधर्मेण संगतः ॥ ३६
तस्मिंस्तस्तमिते वाली मन्त्रिभिर्मन्त्रकोविदैः ।
पित्र्ये पदे कृतो राजा सुग्रीवो वालिनः पदे ॥ ३७
सुग्रीवेण समं त्वस्य अद्वैधं छिद्रवर्जितम् ।
अहार्यं सख्यमभवदनिलस्य यथाग्निना ॥ ३८
एष शापवशादेव न वेद बलमात्मनः ।
वालिसुग्रीवयोर्वैरं यदा राम समुत्थितम् ॥ ३९

नात्येति ). Ś D8 तान्येव चा( D8 [ with hiatus ] श्रा )-श्रमाण्येष; Ñ1 V1 D2.9 अथाश्रमाणि तान्येष( Ñ1 तस्येव ); Ñ2 B1.3.4 M3 आश्रमाण्येष तान्येव( M3 नात्येति ); D6.7 T4 एष तानाश्रमानेव ( for °). ❀ Cg.k.t : एषोश्रमाणीत्यार्षः ( Ck °णीति छान्दसः ) संधिः. ❀ Ñ2 B1.3.4 D6.7.10.11 T G3 M1.3.7 मृदुभावं; G1 मृदुभूत-. Ś Ñ2 B1.3 D6-8.10-12 गतोचरत्; Ñ1 V1 D2.9 G1 M2.8 -गतिश्चरन्; B4 गतोभवत् ( for -गतश्चरन् ). D1.3-5 तान्याश्रमपदान्येव मृदुपूर्वं चचार ह. —After 34, V1 B4 ins. :

725* ते तत्पुरा राम हरीश्वरस्य
वृत्तं शिशोर्जन्म महाशुभं तत् ।
हनूमतो जन्म वरप्रदानं
बलं च वीर्यं च पराक्रमं च ।

Colophon.

[ ( l. 1 ) V1 एतत् ( for ते तत् ). —( l. 2 ) V1 महदद्भुतं भुवि ( for महाशुभं तत् ). —*Sarga name* : V1 हनुमद्वृत्तं; B4 हनूमतो मुनिशापः. —*Sarga no.* ( figures, words or both ) : B4 om. ; V1 31. ]

35 M9 om. 35 ( cf. v.l. 34 ). D1.4 om. 35[ab]. —[a]) Ś D8.12 अथ( Ś यो )क्षों विरजा( S2 °जो ); Ñ1 अथासौ विरजा; Ñ2 B1.3.4 आसीद( B1 °चा )क्षिरजा; V1 D9 अथर्क्षविरजा; D2.5 अथाक्षिवितु( D5 °र )जा; D3 अथातो विरजा; D10.11 T1.2 G1.3 M1.8 अथर्क्षरजसो; T3 G2 अथ ऋक्षरजो; M2.7.10 अथ चर्क्षरजा( M10 °जो ) ( for अथ ऋक्षरजा ). ❀ Cg.k.t : ऋक्षरजस इत्यकारान्तः ( Cg °न्तोऽप्यस्ति ). ❀ —[c]) Ñ1 V1 D2.9 -तेजस्वी; B1 -वीराणां; D1.4 -राजोसौ ( for -राजासीत् ). Ñ2 B1.4 वानराधिपतिवीरस्. —[d]) Note hiatus between तेजसा and इव. Ś B3 D8.12 T3.4 G1 M2.5 तेजसाम्; Ñ1 ज्योतिषां; V1 D3.5 तेजस्वी; D1.4 तेजस्वान्; D2.9 दीप्तिमान् ( for तेजसा ). Ñ1 V1 D2.3.5.9 G2 M10 भास्करो यथा; Ñ2 B1.4 M7 भास्करोपमः; T1.2 M1 भास्करप्रभः ( for इव भास्करः ).

36 M9 om. 36 ( cf. v.l. 34 ). —[a]) Ñ1 V1 D2.3.5.9 राज्यं सु-; B1.4 च राज्यं ( for तु राज्यं ). —[b]) B4 प्रभुर्बली; D1.4 अधीश्वरः; D2.9-11 महे° ( for हरीश्वरः ). —[c]) Ñ1 D9 तदार्क्षो( D9 °र्क्ष ) विरजा; Ñ2 B1.3 श्रीमानक्षिरजा; V1 तदर्क्षविरजा; D1.4 अथर्क्षो विरजो; D3 अथाक्षिवितुजा; D2.5 तदाक्ष( D5 °क्षि )विरजा; D6 K ( ed. ) स च ऋक्षरजो ( K [ ed. ] °जा ); T1.2 G3 M1.8 स ऋ( M8 तद )क्षरजसो( M1 °सा ); T4 M2-4.7.10 ततस्त्वृक्षरजा( M10 °जो ); G1 M5 तदृक्षरजसो; G2 ततः सर्क्षरजो ( for ततस्त्वृक्षरजा ). D6 T1.2 M1 राम; G2 M2.7.8.10 राजा ( for नाम ). B4 किष्किंधाधिपतिः श्रीमान्. —[d]) D6.7.10.11 T4 योजितः ( for संगतः ). Ś Ñ1 D1-5.8.9.12 कालधर्ममुपागतः; Ñ2 V1( m. also as in Ś ) B1.3.4 T3 G1 M1 कालधर्ममुपेयिवान्.

37 [a]) Ñ1 V1 D2.9 T4 राम; D6.7.10.11 M2.4.7.8 चाथ ( for वाली ). ❀ Cv : तस्मिन्नस्तमिते चाथ इति पाठः. ❀ —[b]) D3 मंत्रिकोविदैः; G2 मंत्रिणोचितैः. —[c]) Ś1 D2.3 पैत्रे; Ñ2 B3.4 पित्रे; B1 D5.6.9 पैत्र्ये ( for पित्र्ये ). Ś D8.12 नाम; Ñ B1.3.4 सोथ; V1 D2.6.7.9-11 T3 G1 M2.5.8 वाली; T4 ह्ये *; L ( ed. ) राम ( for राजा ). M1 पित्र्ये कृतः पदे वाली. —[d]) B1 वालिनोंशके.

38 Note hiatus between [a] and [b]. —[a]) Ñ B1.3.4 M1 तदा ( for समं ). Ś Ñ1 B1.3 D1.3-8.12 T1.2 G2.3 M1 Cv.k तस्य; Ñ2 [ ए ]तस्य; G1 M4.5.9.10 तत्र ( for त्वस्य ). —[b]) Ś D8.12 अद्वेष्यं; B3 देवतं ( sic ); D6 G1 M9.10 अद्वैतं; T1.2 राज्यार्धं( T2 °र्थं ); T3 ह्यद्वैतं; G1 तद्वैधं; G3 राज्यार्थं; Cv.t as in text ( for अद्वैधं ). M5 द्वैध-; Cv.t as in text ( for छिद्र- ). Ñ1 V1 D1-5.9 T4 द्वे( V1 दो )षछिद्रविवर्जितं. ❀ Ct : अद्वैधमेकप्रकारम्. ❀ —[c]) Ś D8.12 अ( Ś आ )पार्यं; Ñ2 B3.4 D6.7 M1.4.9.10 आहार्यं; V1 अक्षयं; D1.4 अभयं; D2 अजय्यं; D5 अक्षय्यं; D10.11 T1.3 M3 Cg.k आबाल्यं; T2 आबाल्य-; G3 आबाल-; Cv as in text ( for अहार्यं ). T3 M5 मित्रम्; Cv as in text ( for सख्यम् ). D3 सख्यमभवद्साथ ( with hiatus ). —[d]) V1 D2.6.7.9-11 T4 [ अ ]ग्निना यथा ( by transp. ); G2 यथानिलः ( sic ) ( for यथाग्निना ). ❀ Cv : सुग्रीवेण समं तस्य अद्वैधं छिद्रवर्जितम् । अहार्यं सख्यमभवदिति च । ; Cg : अस्य हनूमतः सुग्रीवेण सह आबाल्यं बाल्यमारभ्य । ; Ck.t : आबाल्यं बाल्यमारभ्य. ❀

39 D11 om. 39. —[a]) Ñ B1.3.4 D1.3-5 एवं ( for एष ). Ñ B3.4 D1.3-5 एष; T3 एवं ( for एव ). V1 D2.9 T4 एवं शापबलादेव. — D9 om. ( hapl. ) 39[b]–40[c]. —[b]) D5 तुलयम् ( for बलम् ). —[d]) Ś V1 D8 T1.2 यथा; D3 सदा; Ck.t as in text ( for यदा ). B4 ह्यासीत् ( for राम ). Ñ2 B1.3 यदासीत्समुपस्थितं; T3 G2 M2-4.7.9.10 यदा रोषपरीतयोः.

न ह्येष राम सुग्रीवो भ्राम्यमाणोऽपि वालिना ।
वेदयानो न च ह्येष बलमात्मनि मारुतिः ॥ ४०

पराक्रमोत्साहमतिप्रतापैः
सौशील्यमाधुर्यनयानयैश्च ।
गाम्भीर्यचातुर्यसुवीर्यधैर्यै-
र्हनूमतः कोऽप्यधिकोऽस्ति लोके ॥ ४१ G. 7. 40. 17 B. 7. 36. 43 L. 7. 39. 42

40 D9 om. 40abc (cf. v.l. 39). D1.4 om. 40. B1.3.4 om. 40ab. M3 repeats 40ab after 40.—a) V1 स ह्येष; D3 नो ह्येष; G2 M9.10 तदा च; M3 न स्यादि; Cv.k.t as in text (for न ह्येष). Ś D8.12 न क्षमेचैष सुग्रीवं; M3 (second time).5 परित्रास्यति सुग्रीवं. —b) G1.2 M9.10 हि; M3 (first time) तु (for ऽपि). Ś D8.12 M3 (second time) वध्यमानं हि; Ñ1 तदाक्लिश्येन; Ñ2 V1 D2.3.5 T4 त-(D5 य)दा(T4 °था)क्लिश्यत; M5 भ्राम्यमाणं * (for भ्राम्यमाणोऽपि). — D3 om. 40cd.—c) T1 G3 M2.3 यदा; T2.3 यथा; G1 M1.3.5 यदि (for न च). Ś D3.12 यद्यवैत्सीदयं धीमान्; Ñ1 V1 तदावेत्स्यद्यदि ह्येष; Ñ2 तज्जानाति हि यद्येष; B1.4 तज्जानानो हि यद्येष; B3 वेदमानो यदि ह्येष; D2 तदा-वेत्स्यत्कपिर्ह्येष; D5 तदा न ज्ञातवानेष; D6.7.10.11 देव जानाति न ह्येष; T4 तदावेत्स्यति तर्ह्येष. —d) B3 बलवानेति मारुतिः. ※ Cv: 'न ह्येष राम सुग्रीवो भ्राम्यमाणोऽपि वालिना। वेदयानो यदा ह्येष बलमात्मनि मारुतिः' इति। एष सुग्रीवोऽपि इदानीं वालिना भ्राम्यमाणोऽपि न भवति यदेष बलं वेदयानो भवति। अस्येदानीमात्मनि बलवेदनम्। अनेन चास्य सुग्रीवस्य कार्यं न भवतीत्यर्थः।; Ck: न ह्येष इत्यादि। हे राम वालिना भ्राम्यमाण एष सुग्रीवोऽपि मारुतेर्बलं वेदयानो न ह्यभूत् तदपि यावद्देवकार्यमृषिशापादेव। देवकार्ये प्राप्ते तु जाम्बवान् स्मृत्वा समुद्रलङ्घनादिसमयेषु बोधयति स्म। अथ यदा ह्येष बल-मित्यादि।; Ct: न ह्येष इति। वालिना भ्राम्यमाण एष सुग्रीवोऽपि तद्बलं न वेदेत्यनुकर्षः। तदपि देवकार्यं यावदेव। तदा तु जाम्बवता स्मारितः समुद्रतीरे तज्ज्ञातवान्। उक्तमेव पुनराह देवेति. ※ —After 40, Ś Ñ1 V1 D S (except M6) ins.:

726* ऋषिशापाद्धृतबलस्तदैष कपिसत्तमः ।
सिंहः पञ्जररुद्धेव आस्थितः सहितो रणे ।

[(l. 1) Ś D8.12 -शापाद्धलवतस्; Ñ1 V1 D1-5.9 T1 -शापबला(Ñ1 °वशा)न्मूढस्(D5 °दज्ञस); D6.7 M3.7 °द्धतबलस्; D10.11 °द्दतबलस; T2 M2.5.8 °पोद्धृतबलस्; T3 °वृतबलस् (for -शापाद्धृत°). Ś D1.3.4.8.12 T1.2 G1.3 M3.5.10 तदेष; D11 T3 M9 तदैव (for तदैष). Ñ1 कपिकुंजरः. —(l. 2) Note hiatus between the two halves. D1 पिंजर-; D7.10.11 कुंजर-. Ś D8.12 -बंधस्थो; Ñ1 D1-7.9-11 T1.2.4 M3.10 -रुद्धो वा; V1 -संरुद्धो; T3 -रोधीव (for -रुद्धेव). T3 [अ]प्यास्थितः; G1 ह्यास्थितः. D6 T3 समतां (for सहितो). Ś D8.12 यथा तरसहते रणे; Ñ1 D2.9 ह्या(Ñ1 आ)साद्य स हतो भवेत्; V1 बाल्यास्तौल्यहतो भवेत्; D1.3-5 सहेता(D3 °त वा [hypm.])पि पराभवं (for the post. half). ※ Cv: आस्थितः सहितो रणे।; Cg: सिंह इति। रणे युद्धादौ स्वबलमास्थितोऽभूत्।; Ck: पञ्जररुद्धेवेति। संधिरार्षः। यदैव देवकार्यरहितकाले ऋषिशापोऽभूत् तदैव पञ्जररुद्धः सिंह इव एष कपि-सत्तम ऋषिशापाद्धृतबलः अपहृतस्वबलपरिज्ञानोऽभूत्। यदा हि देवकार्ये प्रवृत्ते एष मारुतिर्जाम्बवद्बोधनेनात्मनि बलं वेदयानो जानानो भवति ततः परं स हि हनुमान् तोरणे तोरणयुद्धादौ स्वबलमास्थितोऽभूत्।; Ct: तदा सुग्रीवविपत्समये आहृतबलोऽपहृतस्वबलपरिज्ञानः, अत एव रणे कुञ्जररुद्धः सिंह इव सहितोऽयमास्थितः स्थित एव, न तु युद्धं कृतवानिति। 'सिंहः कुञ्जररुद्धेव' इति पाठान्तरम्। तत्र संधिरार्षः. ※];
while Ñ2 B1.3.4 ins. after 40:

727* तदैव विनिहन्यात्तं वालिनं हेममालिनम् ।

[B1.3 तदेव हि (for तदैव वि-).]

41 a) G2 M10 -गति- (for -मति-). Ś Ñ V1 B1.3.4 D8.12 T3 G3 M3.10 -प्रभावैः; D6.7.10.11 T4 M5 -प्रताप- (for -प्रतापैः). —b) Ñ2 V1 B3.4 D9 शौटी (D9 शौंडी)र्य-माधुर्य-; B1 स्वकीयशौटीर्य- (for सौशील्यमाधुर्य-). Ñ2 B3.4 -नयागमैश्च (B3 °*); D8 -मयैनैयैश्च; M7 -दयानयैश्च. —c) D1.4 -माधुर्य- (for -चातुर्य-). Ñ1 -प्रवीर्य-; D1.3.4.8.12 -सवीर्य- M9 -सुवीर- (for -सुवीर्य-). B3 -स्वद्वीर्यवीर्यैर् (sic). —d) Ś D8.12 नाप्यधिको; Ñ1 B4 D1.3.4 G1 M5.7 कोभ्यधिको; T3 को ह्यधिको. B4 तु (for ऽस्ति). ※ Cg.k: पराक्रमेति। सौशील्यं सुस्वभावत्वम्। माधुर्यं वाचः। नयानयौ प्रवृत्तिनिवृत्ती। गाम्भीर्यं चित्तस्य। धैर्यमापद्यक्षोभः।; Ct: पराक्रमो महत्स्वपि युद्धकार्येषूत्साहः। उत्साहपदेनेतरकार्यविषयः सः। मतिरर्थनिर्धारणम्। प्रतापः प्रभावः। सौशील्यं सुस्वभाव-त्वम्। माधुर्यं वाचि। नयानयौ तत्परिज्ञाने। प्रवृत्तिनिवृत्ती इत्यन्ये। गाम्भीर्यमापद्यक्षोभः। सुवीर्यं स्वरक्षणेन परपराभवः। धैर्यमकम्प्यचित्तता। हनूमत एतैर्गुणैः कोऽप्यधिकः। न कोऽ-पीत्यर्थः. ※ —After 41, D5 T1.4 M3 ins.; D6.7.10.11 T2 G1.3 M1.7 ins. after 42; T3 G2 M2.5.8-10 ins. after 43; M4 ins. after 42ab (owing to om.):

728* ससूत्रवृत्त्यर्थपदं महार्थं
ससंग्रहं साध्यति वै कपीन्द्रः ।
न ह्यस्य कश्चित्सदृशोऽस्ति शास्त्रे
वैशारदे छन्दगतौ तथैव ।

[M4.7 om. l. 1-2.—(l.1) M3 -[अ]र्थपरं. D6.7 T4 नितांतं (for महार्थं). —(l. 2) D10.11 T4 G1 सिध्यति. D6.7 T4 M3 यः (for वै). T3 M2.9 स्माधिजगे; G3 चाध्यगिपे; M5 राध्यति वै; M8 साध्यजवैः (sic); M10 चाध्यगमत् (for साध्यति वै).—G1 om. l. 3-4.—(l.3) D6.10 T1-3 G3 M2-4.7-9 [अ]स्ति (for [अ]स्य). G2 किंचित्. T1-3 G3 M2.4.7-9 [ऽ]स्य; M3 हि (for ऽस्ति). D6 T2 शास्त्रैः.

G. 7.40.18
B. 7.36.44
L. 7.39.43

असौ पुरा व्याकरणं ग्रहीष्य-
न्सूर्योन्मुखः पृष्ठगमः कपीन्द्रः ।
उद्यद्गिरेरस्तगिरिं जगाम
ग्रन्थं महद्धारयदप्रमेयः ॥ ४२

प्रवीविविक्षोरिव सागरस्य
लोकान्दिधक्षोरिव पावकस्य ।
लोकक्षयेष्वेव यथान्तकस्य
हनूमतः स्थास्यति कः पुरस्तात् ॥ ४३

एषोऽपि चान्ये च महाकपीन्द्राः
सुग्रीवमैन्दद्विविदाः सनीलाः ।
सतारतारेयनलाः सरम्भा-
स्त्वत्कारणाद्राम सुरैर्हि सृष्टाः ॥ ४४

—(l. 4) T2 G2 तथैव च.—After l. 4, D11 ins. राम. ✿ Cg : ससूत्रेति । सूत्रमष्टाध्यायीलक्षणम् । वृत्तिः सूत्रार्थमात्रप्रतिपादकग्रन्थः । अर्थपदं वार्तिकम् । उक्तानुक्तदुरुक्तिचिन्तानुरूपम् । महार्थं भाष्यं विस्तरविवरणरूपम् । संग्रहं प्रकरणादि । साध्यति साधयति, धारयतीत्यर्थः । शास्त्रान्तरेष्वपि वैशारदे वैदुष्ये । छन्दगतौ छन्दःशास्त्रे ।; Ck : ससूत्रेत्यादि । सूत्रमष्टाध्यायीलक्षणम् । वृत्तिस्तत्कालीनसूत्रवृत्तिः । अर्थपदं वार्तिकम् । महार्थं महाभाष्यम् । ससंग्रहम्, अस्मदादिभिरस्मिन् काल इव तत्कालीनकृतसूत्रवृत्तिवार्तिकभाष्यार्थसंग्राहकसंग्रहाख्यमहाग्रन्थसहितम् । सिध्यति वै इति । सिद्धो भवति । शास्त्रान्तरेष्वपीत्यर्थः । विशिष्य नवमव्याकरणकर्ता हनुमानिति प्रसिद्धिः । तदेवोक्तं शास्त्रे इति । शब्दशास्त्रविषये । वैशारदे वैदुष्ये । सिध्यति वा इति, अस्मद्व्याकृतार्थ एव स्पष्टीकृतः । सर्वासु विद्यास्विति । यं हि स्पर्धत इति उक्तव्याकरणादिविद्याविषय इति शेषः ।; Ct : सूत्रमष्टाध्यायीलक्षणम् । वृत्तिस्तात्कालिकसूत्रवृत्तिः । अर्थपदं सूत्रार्थबोधकपदवद्वार्तिकम् । महार्थं महाभाष्यं पतञ्जलिकृतम् । ससंग्रहं व्याडिकृतसंग्रहाख्यग्रन्थसहितम् । सिध्यति वै सिद्धो भवति । शास्त्रान्तरेष्वपीत्यर्थः । तदेवाह—नह्यस्य सदृशः शास्त्रे कश्चित् । छन्दगतौ पूर्वोत्तरमीमांसामुखेन वेदार्थनिर्णये वैशारदे वैदुष्ये । विशिष्य नवमव्याकरणकर्ता हनूमानिति च प्रसिद्धिरिति कतकः. ✿ ]

—Then D10.11 T2.3 G2.3 M1.4.5.7–10 cont.; D5–7 T1.4 M3 ins. after 43; M2 ins. after 42 :

729* सर्वासु विद्यासु तपोविधाने
प्रस्पर्धतेऽयं हि गुरुं सुराणाम् ।

[(l. 1) D5.7 T4 कः स्पर्धते; D6 M1.5 पस्पर्धते; G3 बृहस्पते (sic) (for प्रस्पर्धते). D5.7 T4 यं हि सुरा-. (T4 * *); T2 G2.3 M10 यं हि गुरुः; M1.3 यो हि गुरुं; M2.4.7–9 येन गुरुः (for ऽयं हि गुरुं). M5 गुरूणां (for सुराणाम्). —Thereafter M3 cont.:

730* सोऽयं नवव्याकरणार्थवेत्ता
ब्रह्मा भविष्यत्यपि ते प्रसादात् ।

42 a) Ś Ñ B3.4 D8.12 अयं पुरा; V1 पुरा ह्येष; B1 D5–7.10.11 T4 असौ (B1 °यं) पुनर्; D1.3.4 गतः पुरा; D2.9 पुरा ह्यसौ (for असौ पुरा). D5 व्याकरणे. —b) D5 G2 सूर्योन्मुखं. Ś Ñ1 V1 D8.12 T4 पृष्ठगतः; D1–4.9 पृष्ठगतिः; D5–7.10.11 प्रष्टुमनाः (for पृष्ठगमः). —M4 om. (hapl.) from 42c up to l. 2 of 728*. —c) D5 अस्तमयं; G1 °गिरेर् (for अस्तगिरिं). —d) Ś D8.12 सर्वं; Ñ1 गच्छन्; B1 ग्रस्तं (for ग्रन्थं). D10–12 M1.7.8.10 धारयन्; G1 धारयते. B1 समुच्चारयन्. Ś Ñ1 V1 D1.3.4.6.8.12 T2–4 अप्रमेयं; (for अप्रमेयः). ✿ Cv : उद्यतो गिरिरित्युद्यद्गिरिः । उद्यद्गिरेः उदयगिरेरित्यर्थः । महद्ग्रन्थं व्याकरणग्रन्थम् । धारयन् अर्थतः पाठतश्च गृह्णन्नित्यर्थः । धारयदिति पाठे नुडभाव आर्षः । धारयते इति पाठान्तरम् ।; Ck : उद्यद्गिरेरुदयगिरेरित्यर्थः । महद्ग्रन्थं व्याकरणग्रन्थम् । धारयन्नर्थतः पाठतश्च गृह्णन्नित्यर्थः धारयदप्रमेय इति पाठे नुडभाव आर्षः ।; Ct : उद्यद्गिरेरुदयगिरेः । महद्ग्रन्थं धारयन्नर्थतः पाठतश्च गृह्णन् । धारयदप्रमेय इति । नुडभाव आर्षः. ✿ —After 42, D6.7.10.11 T2 G1.3 M1.4 (after 42ab).7 ins. 728*, while M2 ins. 729*.

43 M4.7 om. 43. —a) Ś D8.12 यथानिलक्षोभित-; Ñ V1 D1.3.4 अपामिव क्षोभित-; D2.9 T3 वायोरिव क्षोभित-; D5.6 G1.3 M2.8.9 प्रजा चिचि (D5.6 रिर; M2 चिव; M8 चिभ; M9 विवि) क्षोरिव; T1 M3 प्रजा जिघृक्षो°; T2 प्रजा बुभुक्षो°; T4 G2 M1.10 प्रजा मि (G2 म) मंक्षो°; M5 प्रजा विभित्सो° (for प्रवीविविक्षोरिव). B1.3.4 G (ed.) लोकान्न (G [ed.] °कांश्च) पिप्लावयिषोरिवाब्धेः. ✿ Cg : प्रवीविविक्षोः युगान्ते भूमिमाप्लावयितुं प्रकर्षेण विशेषेण वेष्टुमिच्छोः ।; Ck : प्रवीविविक्षोरिति दीर्घश्छान्दसः । युगान्ते भूमिमाप्लावयितुं प्रवेष्टुमिच्छोरित्यर्थः ।; Ct : प्रवीविविक्षोर्युगान्ते भूमिमाप्लावयितुं तां प्रकर्षेण विशेषेण वेष्टुमिच्छोः । प्रवी इति दीर्घ आर्षः. ✿ —b) Ś D8.12 G2 लोकं; B1.4 प्रजा (for लोकान्). —c) Ś D8.12 लोकक्षयोत्थस्य; D6 °येच्छेव; K (ed.) युगक्षये ह्येव; Ck as in text (for लोकक्षयेष्वेव). Ñ B1.3.4 D1–4.9 T3 प्रजा जिही (B1.3.4 क्षयं चिकी) र्षोरिव चांतकस्य; G1 लोकक्षये काल इवांतकस्य. ✿ Cg : युगक्षये काले युगान्तकाल इत्यर्थः ।; Ck : लोकक्षयेष्वेवेति । युगान्तकालेष्वेवेत्यर्थः ।; Ct : लोकक्षये युगान्तकाले. ✿ —d) M8 कोप्यधिकः (for स्थास्यति कः). —After 43, D5–7 T1.4 M3 ins. 729*; while T3 G3 M2.5.8–10 ins. 728*.

44 a) Ñ1 V1 D2.7.9 M1 एतेपि; B3 यथैव; D1.3.4 एते च; D10.11 Cg. k.t : एषेव; G2 एषो हि; G3 एषैव; M3 अयं हि (for एषोऽपि). Ñ2 B1 अयं तथान्ये. Ñ1 तु महा-; D2.3.5.7.9 T3 [ऽ]पि महा-; M1 बहवः (for च महा-). M5 कपिप्रवीराः (for महाकपीन्द्राः). Ś D8.12 एषो (D8 यथा) यथान्ये च तथा कपींद्राः; B4 अयं तथान्येपि च ये कपींद्राः. —b) D6 T2 सुनीलाः. —c) D1.3.4 समस्तास्. —d) Ñ1 B1.3.4 स्वत्कारणे; D1.3.4 तत्कारणाद्. D8 वरैस्

तदेतत्कथितं सर्वं यन्मां त्वं परिपृच्छसि ।
हनूमतो बालभावे कर्मैतत्कथितं मया ॥ ४५

दृष्टः संभाषितश्चासि राम गच्छामहे वयम् ।
एवमुक्त्वा गताः सर्वे ऋषयस्ते यथागतम् ॥ ४६

G. 7. 40. 22
B. 7. 36. 59
L. 7. 39. 47

## इति श्रीरामायणे उत्तरकाण्डे षट्त्रिंशः सर्गः ॥ ३६ ॥

(for सुरैर्). Ś Ñ2 V1 B3.4 D3.8.12 तु; Ñ1 B1 च; D1.4 सु-; T2.3 M2.4.5 7.9 वि-; G3 नि- (for हि). ❀ Cg : एपेवेति । संधिरार्षः । तारेयोऽङ्गदः ।; Ck : एपेवेति एष इवेत्यर्थः ।; so also Ct. ❀ —After 44, D5–7.10.11 T G1.2 M1–5. 8–10 K (ed., within brackets) ins. :

731* गजो गवाक्षो गवयः सुदंष्ट्रो
मैन्दः प्रभो ज्योतिमुखो नलश्च ।
एतेऽपि ऋक्षाः सह वानरेन्द्रै-
रत्वत्कारणाद्राम सुरैर्हि सृष्टाः ।

[ (l. 2) T1.2 M3 तथर्षभो; M10 धूम्रः प्रभो (for मैन्दः प्रभो). —(l. 3) D7 (m. also) एतैश्च; D10.11 T4 M5 एते च; T3 एते हि. D5 एतेप्यथर्क्षैः; D6 T1.2 M3 °पि ऋक्षैः; D7 M8 एतेप्यथर्क्षाः (for एतेऽपि ऋक्षाः). D5.6 T1.2 M3 वानरेंद्रास. —l. 4=44d. —(l. 4) T2 निसृष्टाः; T3 M2.4.5.9 विसृष्टाः. ]

—Then D7 T4 K (ed.) cont.; while Ś Ñ V1 B4 D1–4.8.9.12 ins. after 44 :

732* महीं गता देवगणाः समग्रा
महाबला रावणनाशहेतोः ।

[ (l. 1) Ś1 D8 महेंद्र-; Ś2.3 D12 -महींद्र-; B4 D3 T4 समस्ता (for समग्रा). —(l. 2) D8 महाबली-. T4 राक्षस- (for रावण-). ]

—Then Ñ2 B4 cont. :

733* वीर्याणि निक्षिप्य च वानरीषु
उत्पादिरे देवबलांश्च कीशान् ।

[ (l. 2) Ñ2 देवबलाः सुकीर्णाः. ]

—After 732* ; D7 T4 K (ed.) further cont. :

734* एतत्तु मत्तो विदितं तवास्तु
प्लवंगमानां धरणीनिवासः ।

[ (l. 1) T4 गुह्यं (for मत्तो). — (l. 2) T4 -निवासं. ]

45 a) Ñ1 V1 B3.4 D1–4.9 तुभ्यं; T3 राम (for सर्वं). Ś D8.12 L (ed.) एतत्तु (D12 °त्त; L [ed.] °त्ते) देव कथितं.—b) Ś D8 यथा; D2 M1 यस्मात्; T3.4 M4 यन्मा. G2 च (for त्वं). Ś Ñ2 B1.3.4 D8.12 पृच्छसि राघव.—c) Ś D3.6–8.12 [ऽ]स्य बालत्वे; Ñ B1.4 प्रभावं च; V1 D2.9 T4 हि (D9 [ऽ]पि; T4 [ऽ]स्य) बालस्य; B3 प्रभावो हि; D5 [ऽ]य बालत्वे (for बालभावे). D1.4 हनूमानस्य बालत्वे.—d) Ś V1 D1–4.8.9.12 L (ed.) कर्मा (Ś3 D8 °र्म) ण्य (L [ed.] °र्मणा) द्भुतकर्मणः; Ñ B1.3.4 चरितं शापमे (Ñ2 B3 °प ए) व च.—After 45, D9 T4 ins.; D7 ins. after l. 4 of 737* :

735* एतत्पुरा राम हरीश्वरस्य
वृत्तं शिशोश्चैव यदद्भुतं विभो ।
हनूमदुत्पत्तिवरप्रदानं
बलं च वीर्यं च पराक्रमं च ।

[ Cf. 725*.—(l. 1) D9 महीश्वरस्य.—(l. 2) D7 एव (for चैव). —(l. 3) D7 -प्रदाश्च. ]

—Then T4 cont.; while D5.6.7(m.).10.11 T1–3 G M1–5.7–10 ins. after 45 :

736* श्रुत्वागस्त्यस्य कथितं रामः सौमित्रिरेव च ।
विस्मयं परमं जग्मुर्वानरा राक्षसैः सह ।
अगस्त्यस्त्वब्रवीद्रामं सर्वमेतच्छ्रुतं त्वया ।

[ (l. 1) D5.6 T3.4 G1 M1.4.7.10 वचनं; T1.2 G3 M3 गदितं (for कथितं). T3 G1 सौमित्रिणा सह (for °त्रिरेव च). — After l. 2, T4 (after an addl. colophon) M3 ins. a long passage relegated to App. I (No. 3).—T4 om. l. 3. ]

—Then T4 reads an addl. colophon : इति श्रीमदुत्तरकाण्डे एकोनचत्वा * * * * श्री रामार्पणमस्तु.

46 D9 om. 46.—a) Ś Ñ V1 B1.3.4 D2.3.8.12 सभाजिताश्च. Ś Ñ2 V1 B1 D6 T1.2 G1 M1.3.4.8 चापि; T3.4 चैव; G2 चासीद् (for चासि). D1.4 सत्कृताः पूजिताश्चापि; D5 दुष्करं भाषितश्चापि; M5 दृष्टाः संभाषिताश्चापि.—b) V1 यास्यामहे (for गच्छा°). Ñ B1.4 गच्छामो राम सांप्रतं. —After 46ab, D5–7.10.11 S (except M6) ins. :

737* श्रुत्वैतद्राघवो वाक्यमगस्त्यस्योग्रतेजसः ।
प्राञ्जलिः प्रणतश्चापि महर्षिमिदमब्रवीत् ।
अद्य मे देवताः सर्वे पितरः प्रपितामहाः ।
युष्माकं दर्शनादेव नित्यतुष्टाः सबान्धवाः ।
विज्ञाप्यं तु ममैतद्धि यद्वदाम्यागतस्पृहः ।
तद्भवद्भिर्मम कृते कर्तव्यमनुकम्पया ।
पौरजानपदान्स्थाप्य स्वकार्येष्वहमागतः ।
क्रतूनहं करिष्यामि प्रभावाद्भवतां सताम् ।
सदस्या मम यज्ञेषु भवन्तो नित्यमेव हि ।
भविष्यथ महावीर्या ममानुग्रहकाङ्क्षिणः ।
अहं युष्मान्समाश्रित्य तपोनिर्धूतकल्मषान् ।
अनुगृहीतः पितृभिर्भविष्यामि सुनिर्वृतः ।
तदागन्तव्यमनिशं भवद्भिरिह संगतैः ।
अगस्त्याद्यास्तु तच्छ्रुत्वा ऋषयः संशितव्रताः ।
एवमस्त्विति संश्रुत्य प्रयातुमुपचक्रमुः ।

# ३७

-G. 7. 42. 14
B. 7. 38. 15
L. 7. 40. 35

विमृश्य च ततो रामो वयस्यमकुतोभयम् । | प्रतर्दनं काशिपतिं परिष्वज्येदमब्रवीत् ॥ १

[ ( l. 1 ) T1.2 G3 M3 तद् ( for [ प ] तद् ). — ( l. 2 ) T1 M3 चैव. M8 महर्षीन् ( for °र्षिम् ). — ( l. 3 ) D5.6 G3 M1.7.10 सर्वा: ; D7.10.11 तुष्टा: ; K ( ed. ) हृष्टा: ( for सर्वे ). T3 च ( for प्र- ). — ( l. 4 ) G2 युष्मत्सं- ( for युष्माकं ). D5-7.10.11 T1.4 G2 नित्यं तुष्टा: ; G1 M4.7 नित्यतृप्ता:. D5 स ( for स- ). — After l. 4, D7 ins. 735*. — ( l. 5 ) T3 ममैवैतद्; G2 मया तद्धि; M1 मयैतद्धि ( for ममै° ). — ( l. 6 ) M1 अविशंकया. — ( l. 7 ) T1.2 G2.3 M5.8.10 -जानपदं. D5-7 T4 स्वधर्मेषु; G2 तत्कार्येषु ( for स्वकार्येषु ). D5-7 T4 [ अ ] ह्यमादृता: ; M7.8 समाहिता: ( for [ अ ]-ह्यमागता: ). — ( l. 8 ) M4.7.9 अपि; K ( ed. ) एव ( for अहं ). T4 प्रणयाद्; G1 प्रसादाद् ( for प्रभावाद् ). — ( l. 9 ) G2 तदस्य ( for सदस्या ). D10.11 तु; T1.2.4 G2.3 मे ; M8 वै; K ( ed. ) तत् ( for हि ). — ( l. 10 ) D5-7 T4 भविष्यध्वं ; M1 भविष्यंति. M5 महाप्राज्ञा; Cg.k.t as above ( for °वीर्या ). G2 महा- ( for मम ). T3 G1 M2.4.5.7.9 -कारिण: ( for -काङ्क्षिण: ). — ( l. 11 ) G3 समाश्रुत्य ( for °श्रित्य ). D6 तपोभिर्धूत-. — ( l. 12 ) T3 अनुग्रहीतुं ; T4 अनुग्राह्यश्च ; G1 अनुगृहीतं ; Cg.k.t as above ( for °गृहीता: ). T1.2 गमिष्यामि; Ct as above ( for भवि° ). — T4 om. l. 13. — ( l. 13 ) T3 तथा ( for तदा ). D5-7 इत्येव ( for अनिशं ). M2 संगमै: ( for °तै: ). ❀ Ct : तदा आगन्तव्यमिति छेद:. ❀ — ( l. 15 ) D7 एतम् ( for एवम् ). D10.11 तं प्रोच्य; T1.2 G3 संचिंत्य; K ( ed. ) तं चोक्त्वा ( for संश्रुत्य ). — D7 reads the post. half in marg. ]

—[c] ) B1 एवं चोक्त्वा. G2 M5.10 ययु: ( for गता: ). —[d] ) Ñ V1 B1.3.4 D1-4 मुनयस् ( for ऋषयस् ). Ñ2 B4 G3 ते ( B4 तु ) यथागता: ; D5-7 स्वं स्वमाश्रमं ( for ते यथागतम् ). —After 46, D5-7 T1.2.4 G1.3 M1.3.8 K ( ed., within brackets ) ins. :

738* अभिवाद्य महात्मानो राघवेण विसर्जिता: ।

[ G1 अनुवाद्य ( for अभिवाद्य ). M3 महात्मानं. ]

—Then all the above mss. cont. ; while Ś Ñ1 ( l. 1 only ) V1 D1-4.8.10-12 T3 G2 M2.4.5.7.9.10 ins. after 46 :

739* राघवश्च तमेवार्थं चिन्तयामास विस्मित: ।
ततोऽस्तं भास्करे याते विसृज्य नृपवानरान् ।

[ Ś D8.12 om. l. 1. — ( l. 1 ) D5-7 तु ( for च ). — ( l. 2 ) Ś D8.12 प्राप्ते; M2.5.9 याति ( for याते ). D5-7 ततोस्तंगत आदित्ये ( for the prior half ). Ś D1-2.5-8.12 T4 नर- ( for नृप- ). ]

—Then D1-7.10.11 S ( except M6 ) cont. :

740* संध्यामुपास्य विधिवत्तदा नरवरोत्तम: ।
प्रवृत्तायां रजन्यां तु सोऽन्त:पुरचरोऽभवत् ।

[ D1-4 om. l. 1. — ( l. 1 ) M5 अन्वास्य ( for उपास्य ). G1 ततो. T3 G1 M2.4.7.9 नृपवरोत्तम: ; M1 नृपवरात्मज: ( for नरवरोत्तम: ). — ( l. 2 ) D1.3.4 च ( for तु ). D3.4 M10 -गतो; T3 G1 -गतो ( for -चरो ). M8 सोंत:पुरमुपागमत् ( for the post. half ). ]

—After 46, Ñ2 B1.3.4 ins. ; Ñ1 cont. l. 3-6 only after l. 1 of 739* :

741* आश्चर्यमिति रामश्च तान्संभाष्य ततो मुनीन् ।
विदित्वा चैव तत्सर्वं पूजयामास तान्पुन: ।
ततो गतेऽस्तं तु रवौ स राघवो
विसर्जयित्वा नरवानरान्प्रभु: ।
उपास्य संध्यां विधिवद्विवेश
ततस्तु सोऽन्त:पुरमूर्जितश्री: । [5]

[ ( l. 1 ) Ñ2 illeg. for आश्चर्यमि. B4 रामस्तान् ( for रामश्च ). B3 सभाज्य ( for संभाष्य ). B4 संभाष्य मुदितो मुनीन् ( for the post. half ). — ( l. 2 ) Ñ2 [ ए ]व च ( by transp. ). B4 राघव: ( for तान्पुन: ). — ( l. 3 ) For l. 3-6 cf. l. 2 of 739* and 740*. Ñ1 B1 च ( for तु ). — ( l. 4 ) Ñ B4 विसृज्य रक्षो-( Ñ2 * * ) ( for विसर्जयित्वा ). — ( l. 5 ) B4 उपास्त ( for उपास्य ). — ( l. 6 ) B1 उच्छ्रितश्री:. ]

Colophon : Ś D8.12 om. —*Sarga name* : Ñ1 महर्षिप्रयाणं; Ñ2 V1 B1.3.4 D1-4 ऋषिप्रयाणं ( D2.3 °णो ); D5 अगस्त्यादिमुनिगमनं; D9 हनूमदुत्पत्ति:. —*Sarga no.* ( figures, words or both ) : Ñ1 B1 D2 om.; Ñ2 D2.9 39; V1 32; B3 38; B4 T3 41; D1.4.5 40; T4 44. —After colophon, D2 concludes with राम; T4 with श्रीरामार्पणमस्तु ; G M1.5.8 with श्रीरामाय नम: ; M10 with श्रीरामचन्द्राय नम:. —After Sarga 36, D9 ins. App. I ( No. 3 ).

## 37

Before Sarga 37, Ñ V1.2 B1.3.4 D1-6 S L ( ed. ) ins. App. I ( No. 4 ), while D7.10.11 ins. l. 1-47 of App. I ( No. 4 ).

☞ V2 missing ; B2 om. Sarga 37 ( cf. v.l. 7.12.2 and 7.35 respy. ).

1 [a] ) Ñ V1.3 B1.4 D1-5.9 T4 गते त( D5 चा )स्मिन् ; B3 D6.7.10.11 T1-3 G M Cg.k.t तं विसृज्य ( for विमृश्य च ). T3 M3 तदा ( for ततो ). — Ñ2 reads 1[c]-2 after 4. —[c] ) G3 प्रतर्दिनं. Ś D8.12 स नृपतिं ( for काशिपतिं ).

एवमेतत्कपिश्रेष्ठ भविता नात्र संशयः ।
लोका हि यावत्स्थास्यन्ति तावत्स्थास्यति मे कथा ॥ १८
चरिष्यति कथा यावल्लोकानेषा हि मामिका ।
तावच्छरीरे वत्स्यन्ति प्राणास्तव न संशयः ॥ १९

ततोऽस्य हारं चन्द्राभं मुच्य कण्ठात्स राघवः ।
वैदूर्यतरलं स्नेहादाबबन्धे हनूमति ॥ २०
तेनोरसि निबद्धेन हारेण स महाकपिः ।
रराज हेमशैलेन्द्रश्चन्द्रेणाक्रान्तमस्तकः ॥ २१

G. 7. 43. 22
B. 7. 40. 20
L. 7. 42. 24

$V_{1.3}$ $B_4$ $D_{2.3.5-7.9-11}$ $M_4$ रामस्तु; $B_1$ $T_4$ रामस्तं; $G_1$ रामश्च (for राजेन्द्रो). —$^{b}$) Ñ $V_{1.3}$ $B_{1.4}$ $D_{2.3.5-7.9-11}$ वर-; $G_2$ $M_8$ तथा (for अथ). —For $17^{ab}$, Ś $B_3$ $D_{1.4.8.12}$ $M_6$ subst.:

774* हनूमति ब्रुवत्येवं राघवः परवीरहा ।

[ $B_3$ $M_6$ परमासनात्. ]

—$D_{12}$ om. $17^{c}$–18. —$^{c}$) $B_3$ तं; $G_2$ तु (for च). Ś $D_8$ सस्वजे तं च; Ñ $V_{1.3}$ $B_{1.4}$ $D_{1-7.9-11}$ $T_4$ सस्वजे ($V_3$ lacuna) स्नेहाद्; $M_6$ [अ]भ्यस्वजत्तत्र (for च परिष्वज्य). —$^{d}$) Ś $D_{2.8.9}$ $T_4$ $M_6$ चेदम्; $D_{1.4}$ चैतद् (for एतद्). —After 17, $V_3$ repeats l. 2 only of 773*.

18 $D_{12}$ $T_1$ om. 18 (cf. v.l. 17). —$^{a}$) $B_1$ एतदेवं (by transp.); $B_3$ $M_6$ एवमेव (for एवमेतत्). —$^{b}$) $T_3$ भविष्यति न संशयः. —$Ñ_2$ $B_3$ (after 19) $D_{6.7.10.11}$ read $18^{cd}$ after 777*. —$^{c}$) $V_3$ $D_3$ च (for हि). —$^{d}$) Ś $D_8$ वत्स्यति. $Ñ_2$ $V_{1.3}$ $B_{1.3}$ $D_{6.10.11}$ $T_2$ $M_{4.5.7.9.10}$ तावत्स्थास्यंति मे कथाः. ⁂ Ck : लोके हीत्यादि। अयं वादः स्वकब्रह्मवैभवानुभवसंधानपूर्वकम्। एवं च हनूमते रामेणार्थाश्रिलत्वं दत्तमिदं चातिदुष्करम् ।; Ct : एवं च हनूमते भगवताकारनित्यत्वं कल्पस्थायित्वरूपं दत्तमित्याभाति. ⁂ —After 18, $Ñ_2$ $D_{6.7.10.11}$ K (ed.) ins.:

775* एकैकस्योपकारस्य प्राणान्दास्यामि ते कपे ।
शेषस्येहोपकाराणां भवाम ऋणिनो वयम् ।

[(l. 1) $D_6$ एकस्यैव. —K (ed.) reads l. 2 within brackets. —(l. 2) $D_{6.7}$ [ए]व (for [इ]ह). ⁂ Ct : उपकाराणां मध्ये शेषस्येत्यर्थः. ⁂ ]

—Then all the above Mss. cont.; $Ś_{2.3}$ $D_{8.12}$ $T_4$ ins. after 19; while $Ñ_1$ $V_1$ $B_4$ $D_{1-5.9}$ $T_3$ cont. after 777*; $B_3$ ins. after 18:

776* अङ्गेष्वेव जरा यातु यत्त्वयोपकृतं कपे ।
नरः प्रत्युपकाराणामापत्सु लभते फलम् ।

[K (ed.) reads l. 1 within brackets. $D_{8.12}$ om. up to त्व in l. 1. —(l. 1) $Ś_3$ $D_9$ [ए]वं; $Ñ_2$ ते; $T_4$ [अ]पि (for [ए]व). $B_{3.4}$ अंगेभ्यस्तु. $D_4$ $T_3$ जरां. $Ś_3$ न स्यान्; $Ñ_1$ $D_2$ $T_3$ यांतु; $Ñ_2$ $T_4$ मास्तु (for यातु). $D_{6.7.10.11}$ मदंगे जीर्णतां यातु (for the prior half). $Ś_3$ न चैव (for यत्त्वया). $Ś_3$ [अ]पक्रुतं (sic); $B_4$ [उ]पस्कृतं; $D_{8.12}$ [आ]पत्कृतं; G (ed.) [उ]पहृतं (for [उ]पकृतं). $D_5$ मम (for कपे). —(l. 2) G (ed.) तस्य (for नरः). $B_4$ अवश्यं (for आपत्सु). $Ñ_2$ च लभेत् (for लभते). $D_6$ (m. also as above) $_{.7.10.11}$ Ct आपत्स्वायाति पात्रतां (for the post. half). ⁂ Ct : प्रत्युपकाराणां पात्रतां नर आपत्स्वायातीत्यनेन प्रत्युपकारार्थिन उपकृतावापत्प्रार्थना भवति। सा मे कदापि मा भूदिति व्यञ्जयन्. ⁂

19 $T_1$ om. 19 (cf. v.l. 17). $B_1$ om. 19–21. —$^{a}$) $Ñ_1$ $V_{1.3}$ $B_4$ $D_{1-5.9}$ $T_3$ भविष्यति; $M_8$ करिष्यति. G (ed.) यावदेषा (for कथा यावल्). —$^{b}$) $D_{1.4}$ $T_3$ एषा लोके; $G_2$ लोके येषां; $M_{2.4.7.10}$ लोकेष्वेषा; $M_6$ लोके चैव (for लोकानेषा). $M_9$ मामका. Ś $D_{8.12}$ लोकानेतान्हि मामकी ($D_8$ °कान्); $Ñ_1$ $V_1$ $B_4$ $D_{2.9}$ एषा ($D_{2.9}$ °व) लोके हि मामकी ($V_1$ शाश्वती); $Ñ_2$ $B_3$ $D_{6.7.10.11}$ एषा लोके च मामिका; $V_3$ एव लोकेषु मामिका; $D_5$ एषा लोकेषु कामिका; G (ed.) लोके च मामका कथा. —$^{d}$) $T_4$ $M_8$ तव प्राणा (by transp.). —For $19^{cd}$, Ñ $V_{1.3}$ $B_4$ $D_{1-7.9-11}$ $T_3$ subst.:

777* तावत्ते भविता कीर्तिः शरीरेऽप्यसवस्तथा ।

[ $V_1$ $D_{1-5.9}$ $T_3$ हि (for ऽपि). $Ñ_2$ $T_3$ तव; $D_2$ तदा. ]

—Then $Ñ_1$ $V_1$ $B_4$ $D_{1-5.9}$ $T_3$ cont. 776*; while $Ñ_2$ $D_{6.7.10.11}$ read $18^{cd}$. —After 19, $Ś_{2.3}$ $D_{8.12}$ $T_4$ ins. 776*; while $B_3$ reads $18^{cd}$.

20 $B_1$ om. 20 (cf. v.l. 19). $M_6$ om. 20–21. —$^{a}$) $Ś_{1.2}$ $D_5$ स्वहारं; $Ś_3$ स हारं; $D_{8.12}$ स हारं; $T_{1.2}$ $G_3$ $M_3$ हारं च; L (ed.) हारं तु (for ऽस्य हारं). —$^{b}$) $Ś_{1.3}$ $Ñ_1$ $V_{1.3}$ $B_{3.4}$ $D_{1-9.12}$ $T_3$ मुक्त्वा; Ck.t as in text (for मुच्य). ⁂ Ck : मुच्य कंठादिति। स्वीयाद्विसृज्येत्यर्थः ।; so also Ct. ⁂ —$^{c}$) $B_4$ -प्रभवं; $D_5$ -तरले; $G_2$ -तनयं (sic) (for -तरलं). Ś Ñ $V_{1.3}$ $B_{3.4}$ D $T_4$ कंठे (for स्नेहाद्). ⁂ Cg.k : तरलो हारमध्यगः (Cg °गो मणिः) ।; so also Ct. ⁂ —$^{d}$) $T_{1-3}$ $G_{1.3}$ $M_{1.3.8}$ आबबंध. $T_3$ $G_1$ $M_{2.3}$ हनूमतः (for °मति). Ś Ñ $V_{1.3}$ $B_{3.4}$ D $T_4$ $G_2$ $M_{10}$ बबंध च ($G_2$ $M_{10}$ °धांसे) हनूमतः ($Ñ_1$ °ते).

21 $B_1$ $D_9$ $M_6$ om. 21 (for $B_1$ $M_6$, cf. v.l. 19 and 20 respy.). —$^{a}$) $D_3$ $M_1$ ततोरसि. —$^{b}$) Ś $D_{8.12}$ रराज (for हारेण). Ñ $V_{1.3}$ $B_{3.4}$ $D_{2.5-7.10.11}$ महता (for स महा-). —$^{c}$) $T_4$ $G_3$ $M_{1.4.9}$ हैम-; Cg.k.t as in text (for हेम-). $T_3$ $G_2$ $M_{10}$ -[अ]द्रिरिव; $M_{1.2.4.5.7-9}$ -शैलेव; Cg.k.t as in text (for -शैलेन्द्रश्). Ś Ñ $V_{1.3}$ $B_{3.4}$ $D_{1-8.12}$ रराज (Ś $D_{8.12}$ हारेण) कांचनः शैलश्. ⁂ Cg : हेमशैलेन्द्रो मेरुः। चन्द्रेण चन्द्रकिरणैः। आक्रान्तमस्तक आक्रान्तकर्णप्रदेश इत्यर्थः ।; Ck : हेमशैलेन्द्रो मेरुः। चन्द्रेण चन्द्रकिरणेन। आक्रान्तमस्तकः। व्याप्तशिखराद्यामूलप्रदेश इत्यर्थः।; Ct : हेमशलेन्द्रो मेरुश्चन्द्रेणाक्रान्तमस्तकस्तादृशः पर्वतो यथा

G. 7.43.22 B. 7.40.27 L. 7.42.25 श्रुत्वा तु राघवस्यैतदुत्थायोत्थाय वानराः ।
प्रणम्य शिरसा पादौ प्रजग्मुस्ते महाबलाः ॥ २२
सुग्रीवश्चैव रामेण परिष्वक्तो महाभुजः ।
विभीषणश्च धर्मात्मा निरन्तरमुरोगतः ॥ २३
सर्वे च ते बाष्पगलाः साश्रुनेत्रा विचेतसः ।
संमूढा इव दुःखेन त्यजन्ते राघवं तदा ॥ २४

इति श्रीरामायणे उत्तरकाण्डे एकोनचत्वारिंशः सर्गः ॥ ३९ ॥

---

ामूलशिखरं तत्किरणैर्व्याप्तो भवति तथा हनूमांस्तद्गुणकिरणव्याप्तो जात इत्यर्थः. ❀

22 B3 om. 22. Ñ1 V3 D2.3.5.9 transp. 22 and 23. D1.4 (after 24) repeat 22 after 23.—$^a$) D1 (both times) श्रुत्वा च; T3 तच्छ्रुत्वा; G3 श्रुत्वा तु; M1 दृष्ट्वा तु (for श्रुत्वा तु). Ñ1 रामस्य वचः; B1 राघवस्यैवम्; D1 (both times).4 (first time) °वचस् (for राघवस्यैतद्). V1 D2.3.4(second time)5.9 श्रुत्वा रामस्य वचनम्( D3-5 तु वचः); V3 (with hiatus) रामस्य च वचः श्रुत्वा. ❀ Ct: श्रुत्वेति । हनूमदुद्देश्यकमेकैकस्येत्यादि वाक्यम्. ❀—$^b$) D1 (both times).4 (first time) त्वरया; D7 तत (for first उत्थाय). Ñ1 साश्रुनेत्रा विचेतसः.—$^c$) M4.7.10 भूमौ (for पादौ).—$^d$) Ś Ñ2 B1.4 D1(both times).4(first time).6-8.10-12 M6 निर्जग्मुस्ते; V1.3 D2.3.4(second time).5.9 प्रययुस्ते; T3 जग्मुस्ते च; G1 जग्मुस्ते तु (for प्रजग्मुस्ते).

23 Ñ1 V3 D2.3.5.9 transp. 22 and 23.—$^a$) Ñ1 V3 D1-5.9 T3 चापि; Ñ2 B1 D6.7.10.11 स च (for चैव).—$^b$) T3 G1 M1.2.4.7.9.10 महाबलः; M5 °मतिः (for महाभुजः). D10.11 निरंतरमुरोगतः = 23$^d$.—$^c$) V1 तु (for च). T4 रामेण (for धर्मात्मा).—$^d$) Ś D3.12 अनंतरं; T1 G3 M1-4.8.9 उरोगतं; Cg.k.t as in text (for उरोगतः). Ñ1 V1 D2.3.5.9 सर्वे च( V1 D5 ते ) हरियूथपाः; Ñ2 B1 D6.7.10.11 सर्वे ते( B1 ते सर्वे ) बाष्पविक्लवाः; D1.4 (with hiatus) अश्रुने( D4 om. after ने up to 24$^b$ )त्रो बभूव ह. ❀ Cg.k: निरन्तरमुरोगत इति । गाढ( Ck °ढं )परिष्वक्त इत्यर्थः ।; so also Ct. ❀.—After 23, D1 repeats 22.

24 Ñ1 D1 om. 24$^{ab}$ (for D1 cf. v.l. 23). V1 D1-3.5.9 om. 24.—$^a$) D12 सर्वे एते. B3 बाष्पजलैर्; D6.7.10.11 T1.2 M1.5.6 Ct बाष्पकलाः (for °गलाः). Ñ2 कामरूपाश्च दुःखार्ताः; V3 B4 सर्वे ते बाष्पकलिताः( B4 °लाः ); B1 परिष्वज्य च रामाय. ❀ Ct: बाष्पकलाः कण्ठस्य बाष्परुद्धत्वेनाव्यक्तभाषिणः. ❀—$^b$) M4.7.10 सास्रनेत्राः; Ct साश्रुनेत्रा (as in text). Ś D8.12 अश्रुनेत्रैः प्रसुस्रुवुः; B3 आवृतास्तैरचेतसः. ❀ Cg: विचेतसो वियोगखिन्नचेतसः ।; Ck: विचेतसो वियोगखिन्ना इति यावत् ।; Ct: विचेतसः शून्यमनसः, अत: संमूढा इव मूर्छिता इव बभूवुरिति शेषः. ❀—B4 om. 24$^{cd}$.—$^c$) D6.7.10.11 T G M1.3.5.6.9.10 त्यजंतो. T1 M3 भ्रातरं (for राघवं). T3 तथा. Ś D3.12 रामं ते तत्यजुस्तदा; Ñ1 प्रययुस्ते महाबलाः; Ñ2 V3 B1.3 निर्ययुस्ते च( Ñ2 °युस्तथा; V3 °युः स च ) राघव; D4 रामं ते सत्यतेजसः.—After 24, D4 repeats 22; while D6.7.10.11 T G M1.3-5.7.8.10 ins.:

778* कृतप्रसादास्तेनैव राघवेण महात्मना ।
जग्मुः स्वं स्वं गृहं सर्वे देही देहमिव त्यजन् ।

[T3 damaged for l. 1.—(l. 1) D3.10.11 M1.3 [ए]वं (for [ए]व).—(l. 2) D6.7 T4 स्वं स्वं (for देही). M1 इह; Cg.k.t as above (for इव). D6.7 T3.4 G M5.8 [अ]त्यजन्; Cg.k.t as above (for त्यजन्). ❀ Cg: देहं त्यजन्देहीव रामवियोगखिन्ना इत्यर्थः । युद्धकाण्डान्ते वानरादीनां विसर्जनोक्तिः काण्डसमापनायात्रैव विसर्जनं तत्रोक्तमिति मन्तव्यम् ।; Ck: देहं त्यजन्देहीवेति रामपरित्यागखिन्ना इति शेषः ।; Ct: देहं त्यजन्देहीव रामवियोगखिन्नाः अभूवन्निति शेषः । शरीरात्माभिमानिनां देहत्यागेनेव तेषां रामविश्लेषणखेदोऽभूदित्यर्थः. ❀]

—Then D7.10.11 cont.; while Ñ V3 B1.3.4 ins. after 24:

779* ततस्तु ते राक्षसऋक्षवानराः
प्रणम्य रामं रघुवंशवर्धनम् ।
वियोगजाश्रुप्रतिपूर्णलोचनाः
प्रतिप्रयातास्तु यथा निवासिनः ।

[(l. 3) Ñ1 V3 B3 -परि- (for -प्रति-).—(l. 4) V3 तथा (for यथा).]

Colophon.—*Kāṇḍa name*: Ś1 D1.9 M7 om.—*Sarga name*: Ś D5.8.12 वानरप्रयाणं( D5 °णो ); Ñ1 D9 वानरराक्षसप्रयाणो( D9 °णं ); Ñ2 V3 वानरऋक्षराक्षसविसर्जनं; V1 हरिराक्षसविसर्जनं; B1 ऋक्षवानरप्रेषणं; B3 राक्षसवानरसंप्रेषणं; D1.2 वानरऋक्षराक्षसप्रयाणो( D2 °णं ); D3 वानरर्क्षगोपुच्छराक्षसप्रयाणं; D4 वानरर्क्षाणामुत्थाय राक्षसप्रयाणो.—*Sarga no.* (figures, words or both): Ś Ñ1 V3 B3 D3.12 om.; Ñ2 B1 44; V1 34; B4 T3 45; D1.3.4 42; D5 43; D6-8.10.11 T1-3 M1-5.7-10 40; D9 48; T4 47; M6 38.—After colophon, D3 concludes with रामः; T4 with श्रीरामार्पणमस्तु; G M1.5.8 with श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

## ४०

विसृज्य च महाबाहुर्ऋक्षवानरराक्षसान् ।
भ्रातृभिः सहितो रामः प्रमुमोद सुखी सुखम् ॥ १
अथापराह्णसमये भ्रातृभिः सह राघवः ।
शुश्राव मधुरां वाणीमन्तरिक्षात्प्रभाषिताम् ॥ २
सौम्य राम निरीक्षस्व सौम्येन वदनेन माम् ।
कैलासशिखरात्प्राप्तं विद्धि मां पुष्पकं प्रभो ॥ ३
तव शासनमाज्ञाय गतोऽस्मि धनदं प्रति ।
उपस्थातुं नरश्रेष्ठ स च मां प्रत्यभाषत ॥ ४
निर्जितस्त्वं नरेन्द्रेण राघवेण महात्मना ।
निहत्य युधि दुर्धर्षं रावणं राक्षसाधिपम् ॥ ५
ममापि परमा प्रीतिर्हते तस्मिन्दुरात्मनि ।
रावणे सगणे सौम्य सपुत्रामात्यबान्धवे ॥ ६
स त्वं रामेण लङ्कायां निर्जितः परमात्मना ।
वह सौम्य तमेव त्वमहमाज्ञापयामि ते ॥ ७
एष मे परमः कामो यत्त्वं राघवनन्दनम् ।
वहेर्लोकस्य संयानं गच्छस्व विगतज्वरः ॥ ८

G. 7. 44. 8
B. 7. 41. 8
L. 7. 43. 8

## 40

☞ $V_2$ missing for Sarga 40 ( cf. v.l. 7.12.2 ). $D_{12}$ begins with ॐ.

1 $^{a}$) $T_4$ damaged for विसृज्य. Ś $D_{8.12}$ तान्; $B_{1.2.4}$ $T_4$ $M_{2.6.9}$ तु; $M_8$ ते ( sic ) ( for च ). —$^{b}$ ) $B_3$ -राक्षसवानरान् ( by transp. ). —$^{c}$ ) $M_6$ राजा ( for रामः ). —$^{d}$ ) $V_{1.3}$ $D_{1-5.9}$ विजहार ( for प्रमुमोद ). Ś $V_{1.3}$ $D_{1.3-5.7-12}$ $T_3$ $G_2$ Cg सुखं सुखी ( by transp. ); $B_2$ सुखं सुखं; $D_2$ सुखे सुखी; $M_1$ सुखी सुखी ( for सुखी सुखम् ). ❀ Cg : प्रमुमोद सुखं सुखी, स्वतः सुखी राम आश्रितदुःखनिवृत्त्या सुखं प्रमुमोद, अविच्छिन्नप्रमोदमगमदित्यर्थः. ❀

2 $^{a}$) $M_8$ तथा ( for अथ ). $M_9$ अथापराह्ण भगवान्. —$^{b}$ ) $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.9}$ रामः सर्वैः सहानु( $V_3$ $D_5$ °र्वैर्महासु )-जैः( $V_1$ $D_{2.9}$ °गैः ). —$^{c}$ ) $D_{3.5}$ शुश्रुवे ( for शुश्राव ). —$^{d}$ ) Ñ B $D_{6.7}$ अंतरिक्ष( $\tilde{N}_1$ °क्षे )गतां( $B_1$ °चरीं ) प्रभुः; $V_{1.3}$ $D_{1-5.9}$ $T_4$ अंतरिक्षे प्र( $V_1$ $D_{2.9}$ $T_4$ वि )भु स्तदा; $D_{10.11}$ अंतरिक्षान्महाप्रभुः. ❀ Cg : अन्तरिक्षात्प्रभाषिताम्, अन्तरिक्षगतेनोक्ताम् । पुष्पकाभिमानिदेवतयोक्तामित्यर्थः । अन्तरिक्षाद्विनिःसृतामिति च पाठः ।; Ck : अन्तरिक्षात्, अन्तरिक्षचरभूतेनेत्यर्थः ।; Ct : अन्तरिक्षात् । अन्तरिक्षचराद्विनिःसृतामित्यर्थः. ❀

3 $^{a}$) $T_3$ सौम्यं. —$T_4$ damaged from $^{b}$ up to प्रा in $^{c}$. —$^{b}$ ) $G_1$ $M_5$ नयनेन ( for वदनेन ). —$^{c}$ ) $\tilde{N}_2$ B $D_{6.7.10.11}$ कुबेर-; $D_{1.3-5}$ कैलासाद् ( for कैलास- ). Ś $\tilde{N}_2$ $V_3$ B $D_{6-8.10-12}$ $M_6$ -भवनात्; $V_1$ $D_{2.9}$ -निलयात्; $D_{1.4}$ अभिसं-; $D_{3.5}$ अचलात् ( for -शिखरात् ). —$^{d}$ ) $\tilde{N}_1$ $V_{1.3}$ $D_{1-6.9}$ $M_8$ विमानं ( for विद्धि मां ). $G_1$ $M_1$ transp. विद्धि मां and पुष्पकं. $V_1$ $D_{2.9}$ तदा; $B_{1.2.4}$ $T_{3.4}$ $M_{5.10}$ विभो ( for प्रभो ). ❀ Ck : मां पुष्पकं विद्धीति । एवं च पुष्पकविमानाधिष्ठातृदेवताया अयं वादः । न त्विह पुष्पकविमानाकारस्य ।; so also Ct. ❀

4 $^{a}$) $B_2$ आदाय ( for आज्ञाय ). —$^{b}$ ) $D_8$ राज्ञो ( for गतो ). Ś $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_4$ $M_6$ [ ऽ ]हं ( for ऽस्मि ). Ś $D_{8.12}$ $M_6$ धनदेश्वरं; $D_{6.10.11}$ भवनं प्रति; $G_1$ धनदालयं ( for धनदं प्रति ). —$^{c}$ ) $\tilde{N}_2$ B उपस्थितं ; $V_1$ $D_{2.5.9}$ $M_6$ उपस्थाने( $M_6$ °प्य ); $T_4$ उपस्थास्य ( for उपस्थातुं ). Ś $D_{8.12}$ नरव्याघ्र; $D_{2.9}$ $T_4$ रघुश्रेष्ठ; $D_5$ नृप° ( for नरश्रेष्ठ ). —$^{d}$ ) $B_3$ स तु; $D_5$ तत्र ( for स च ). $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.9}$ $T_4$ इदमब्रवीत्.

5 $^{a}$) $V_3$ रक्षितस् ( for निर्जितस् ). —$^{c}$ ) Ś $D_{8.12}$ च सु-; $\tilde{N}_2$ $B_3$ युद्धे ( for युधि ). $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.9}$ हत्वा युधि दुराधर्षं. —$^{d}$ ) $T_4$ damaged after रावणं रा up to $6^{a}$. $D_{6.7.10.11}$ राक्षसेश्वरं ( for राक्षसाधिपम् ). Ś $D_{8.12}$ राक्षसं रावणं ततः ( $D_{12}$ प्रति ).

6 $T_4$ damaged up to $6^{a}$ ( cf. v.l. 5 ). —$^{a}$ ) $B_3$ $D_{1.2.4}$ परम- ( for परमा ). —$^{b}$ ) $\tilde{N}_1$ निर्जितेस्मिन् ; $V_3$ $D_{1-4.9}$ जिते त( $V_3$ चा )स्मिन् ; $D_5$ जितेस्मिन् ( subm. ) ( for हते तस्मिन् ). —$^{c}$ ) $\tilde{N}_2$ $B_{1.2}$ $D_{6.7.10.11}$ चैव; $B_{3.4}$ रौद्रे ( for सौम्य ). $D_{1.3-5}$ transp. सगणे and सौम्य. —$^{d}$ ) $\tilde{N}_1$ सपुत्रैः सह बांधवैः; $\tilde{N}_2$ $V_1$ B $D_{6.7.10.11}$ सपुत्रे सहबांधवे; $V_3$ $D_{1.3-5}$ सपुत्र( $V_3$ °त्रे )ज्ञातिबांधवे; $D_{2.9}$ सहपुत्रे सबांधवे.

7 $M_6$ om. $7^{ab}$. —$^{a}$ ) $D_3$ सत्यं ( for स त्वं ). —$^{b}$ ) $D_{2.3.5}$ अर्जितं( $D_3$ °तः ) ( for निर्जितः ). $V_3$ विजितात्मना. —$^{c}$ ) $B_2$ सह ( for वह ). $V_1$ चैव ( for सौम्य ). $Ś_1$ $\tilde{N}_2$ $D_{1.6.10.11}$ त्वम् ( sic ) ( for तम् ). $B_4$ वह सौम्य त रामेणम् ( corrupt ). —$^{d}$ ) $V_{1.3}$ $D_{1-5.9}$ प्रभुर् ( for अहम् ). Ś $D_{8.12}$ $T_4$ $M_6$ वै; $V_3$ [ अ ]हं ( for ते ).

8 $^{a}$) Ś $D_{8.12}$ $M_9$ एवं ( for एष ). $M_5$ नः; $M_7$ ते ( for मे ). $\tilde{N}_2$ $V_1$ B $D_{1.3-7.10.11}$ $T_1$ transp. एष मे and परमः. $T_4$ damaged from कामो up to $^{b}$. $\tilde{N}_1$ $V_3$ परमो ह्येष कामोयं ( $V_3$ मोवस्त्वाम् [sic] ); $D_{2.9}$ परमो हर्षकामो मे. —$^{b}$ ) $\tilde{N}_2$ $B_{1.4}$ यस्त्वं; $B_2$ यद्वा; $M_6$ स त्वं ( for यत्त्वं ). $M_8$ -वर्धनं ( for -नन्दनम् ). Ś $D_{8.12}$ यस्त्वं रघुविवर्धनं; $\tilde{N}_1$ $V_1$ $D_{1-5.9}$ यत्त्व( $\tilde{N}_1$ $V_1$ °स्त्व )मिक्ष्वाकुनंद( $D_{2.9}$ °वर्ध )नं; $V_3$ इक्ष्वाकुकुलनंदनं. —$D_4$ om. $8^{c}$–$9^{b}$. —$^{c}$ ) $M_8$ वह. $M_5$ शरणं ( for

G. 7. 44. 9
B. 7. 41. 9
L. 7. 43. 9

तच्छासनमहं ज्ञात्वा धनदस्य महात्मनः ।
त्वत्सकाशं पुनः प्राप्तः स एवं प्रतिगृह्ण माम् ॥ ९
बाढमित्येव काकुत्स्थः पुष्पकं समपूजयत् ।
लाजाक्षतैश्च पुष्पैश्च गन्धैश्च सुसुगन्धिभिः ॥ १०
गम्यतां च यथाकाममागच्छेस्त्वं यदा स्मरे ।
एवमस्त्विति रामेण विसृष्टः पुष्पकः पुनः ।
अभिप्रेतां दिशं प्रायात्पुष्पकः पुष्पभूषितः ॥ ११

संयानं ). Ś D8.12 वहेश्च लोकसंघानां; T3 M6 वहेथा लोककर्तारं (M6 °संयानं ). —$^{d}$) Ś D8.12 T1–3 G3 M2–4.7.9 गच्छ त्वं ( for गच्छस्व ). ※ Cv: लोकस्य संयानं लोकस्य शरणम् ।; Cg: लोकस्य संयानमिति । लोकसंचरणमित्यर्थः ।; Ck.t: लोकस्य भूराद्यशेषासिमतलोकप्रापणस्य संयानं समीचीनयानभूतस्त्वं राघवनन्दनं वहेरिति यदेव मे परमः कामः ।; ( Ct: °मः, अतस्त्वं गच्छेति संबन्धः ). ※ —For 8$^{cd}$, Ñ V1.3 B D1–3.5.6.9 T4 subst.:

780* वहेः सुप्रीतिमनसं तस्मात्त्वैव गम्यताम् ।

[ V3 वहेस्तं; D6 वहेथाः ( for वहेः सु- ). V3 D1.3.5.6 -प्रीत- ( for -प्रीति- ). V1 D1.3.5 -बुद्धिस्त्वं ( for -मनसं ). D2.9 T4 वहस्व प्रतिबुद्धस्त्वं ( T4 °ध्यस्व ) ( for the prior half ). ]

9 D4 om. 9$^{ab}$ (cf. v.l. 8 ). —$^{a}$) G3 श्रुत्वा ( for ज्ञात्वा ). Ñ V1.3 B D1–3.5–7.9.11 T4 सोऽहं शासनमाज्ञा( Ñ2 B °दा )य; M1 अथ तच्छासनं ज्ञात्वा. —$^{c}$) Ñ1 V1.3 B D1–4.6.7.9–11 अनु-; Ñ2 D5 T4 इह ( for पुनः ). T3 प्राप्तम् ( for प्राप्तः ). —$^{d}$) G1 स्वयं च; M3 सकाशं; M8 स एव ( for स एवं ). Ś V1.3 D1–5.8.9.12 T4 शाधि किं( V1 ते ) करवाणि ते( Ś D8.12 वै; V1 किं ); Ñ B D6.7.10.11 K (ed.) निर्विशंकः ( Ñ1 °कं )प्रतीच्छ( K [ ed. ] °क्ष ) मां; T1–3 G3 M1.3 स्वयं प्रति( T3 एनं परि )गृहाण मां. —After 9, Ś Ñ V1.3 B D T4 ins.:

781* अदृश्यः सर्वभूतानां सर्वेषां धनदाज्ञया ।
चराम्यहं प्रभावेन तवाज्ञां परिपालयन् ।

[ (l. 1) Ś D8.12 अदृष्टः; Ñ1 V1.3 D1–4.9 T4 अदृश्यश् ( for अधृष्यः ). Ñ1 V1.3 B1.2.4 D1–5.9.12 T4 चैव ( for सर्वे- ). —T4 damaged from तदा in the post. half up to प्र in the prior half of l. 2. —(l. 2) D5 वहामि ( for चरामि ). Ś D8.12 चानु-; Ñ2 B1.3.4 [ आ ]त्मप्र-; B2 [ अ ]थ प्र- ( for [ अ ]हं प्र- ). B3 तथा; D3 ताम् ( for तव ). Ś D2.8.12 प्रति- ( for परि- ). ]

—Thereafter, Ś Ñ1 V1.3 D1–5.8.9.12 T4 cont.:

782* यदा मे स्मरणे बुद्धिं त्वं करिष्यसि राघव ।
तदाहमीप्सितं ज्ञात्वा उपस्थास्ये तवान्तिकम् ।

[ (l. 1) V3 वीर ( for बुद्धिं ). V3 त्वं च बुद्धिं करिष्यसि ( for the post. half ). Ñ1 V1 D1–5.9 T4 यदा च मे त्वं स्मरणे बुद्धिं नृप करिष्यसि. —(l. 2) Note hiatus between the two halves. Ñ1 V1.3 D1–5.9 T4 उपस्थास्याम्यहं वीर ( V3 भूप ) ( for the prior half ). Ñ1 तदा त्वद्धिहिते श्रितं; V1.3 D1.4 तदा तद्वि( V3 ते वि )दितेंगितः( D1.4 °तैः ); D2.9 तदा त( D9 त्व )द्विहितां गतिं; D3 तदा तद्विहितेंद्रियः; D5 तदा त्वद्विहितेंगितः; T4 त्वदाज्ञाविदितेंगितः ( for the post. half ). ] while Ñ2 B D6.7.10.11 cont.:

783* एवमुक्तस्तदा रामः पुष्पकेण महाबलः ।
उवाच पुष्पकं दृष्ट्वा विमानं पुनरागतम् ।
यद्येवं स्वागतं तेऽस्तु विमानवर पुष्पक ।
आनुकूल्याद्धनेशस्य वृत्तदोषो न नो भवेत् ।

[ (l. 1) B3 तेन ( for रामः ). —D6 om. l. 4. —(l. 4) B3 आत्मकुलाकुलेशस्य ( sic ) ( for the prior half ). B3 नूनं ( for वृत्त- ). B3.4 मे ( for नो ). ]

10 For 10$^{ab}$, Ñ2 B D7.10.11 subst. and read after 10$^{cd}$; while D6 ins. after 10:

784* पूजयित्वा महाबाहू राघवः पुष्पकं तदा ।

—$^{c}$) Ñ1 V1.3 D1–5.9 लाजोत्करेण ( for लाजाक्षतैश्च ). Ś D8.12 धूपैश्च; M1.7 गंधैश्च ( for पुष्पैश्च ). Ñ2 B D6.7.10.11 लाजैश्चैव तथा पुष्पैः. —$^{d}$) Ś D8.12 M1.7 पुष्पैश्च; Ñ2 B D6.7.10.11 धूपैश्च ( for गन्धैश्च ). —T4 damaged from श्च सु up to यथा in 11$^{a}$. Ś Ñ2 B1.4 D6–12 G1.2 चैव; B2 चापि; B3 सह; D1.3–5 बहु-; T1.2 G3 M3.10 च स- ( for च सु- ).

11 T4 damaged up to यथा in $^{a}$ (cf. v.l. 10). —$^{a}$) Ñ1 V1 गच्छ त्वं ( for गम्यतां ). Ñ1 V1 वै; D1 ते ( for च ). Ñ2 B D6.7.10.11 ( all except B with hiatus ) गम्यतामिति चोवाच( B1.2.4 चावोचद् ). —$^{b}$) D10.11 G1.2 M1.3–3.10 आगच्छ ( for आगच्छेस् ). D12 T1.3 G2.3 त्वां ( for त्वं ). G1.2 M4.6.7 यथा ( for यदा ). D10.11 स्मरे यदा ( by transp. ). Ñ1 V1 D2.9 T4 आगच्छेथाः स्मृतो ( T4 °तं ) मया; Ñ2 V3 B1.2.4 D1.3–7 आगच्छेः संस्मृतो मया; B3 तदागच्छेः स्मृतो मया; T3 आगच्छाहं यथा स्मरे. ※ Cg.k.t: स्मरे स्मरामि( Ck °मीति यावत् ). ※ —After 11$^{ab}$, Ñ2 B D6.7.10.11 S ( except T4 ) ins.:

785* सिद्धानां च गतौ सौम्य मा विषादेन योजय ।

[ Ñ2 B1.3 D6 M4.6 गतिं; B2.4 M9 गतिः; T1 पथा ( for गतौ ). Ñ2 B विषातेन; D6 विघातय ( for विषादेन ). Ñ2 सं * तः ( illeg. ); B1.4 यूयुजः; B2 सत्वज; B3 पुष्पक; D6 संयते ( for योजय ). D7 T3 M4.9 मा विषादमवाप्नुहि( D7 °योजय [sic] ) ( for the post. half ). ※ Cv: 'सिद्धानां च गतौ सौम्य माविषादेन योजयेति' सिद्धानां च गतौ मार्गे मामविषादेनाश्रमेण योजय प्रापय ।; Cg: सिद्धानां च गतौ आकाशमार्गे । आत्मानं विषादेन अस्मद्वियोगदुःखेन मा योजय । विमुक्तगत्या गतदुःखः सुप्रतिष्ठितः सुखमास्स्वेत्यर्थः ।

एवमन्तर्हिते तस्मिन्पुष्पके विविधात्मनि ।
भरतः प्राञ्जलिर्वाक्यमुवाच रघुनन्दनम् ॥ १२
अत्यद्भुतानि दृश्यन्ते त्वयि राज्यं प्रशासति ।
अमानुषाणां सत्त्वानां व्याहृतानि मुहुर्मुहुः ॥ १३
अनामयाच्च मर्त्यानां साग्रो मासो गतो ह्ययम् ।
जीर्णानामपि सत्त्वानां मृत्युर्नायाति राघव ॥ १४
पुत्रान्नार्यः प्रसूयन्ते वपुष्मन्तश्च मानवाः ।
हर्षश्चाभ्यधिको राजञ्जनस्य पुरवासिनः ॥ १५
काले च वासवो वर्षं पातयत्यमृतोपमम् ।
वायवश्चापि वायन्ते स्पर्शवन्तः सुखप्रदाः ॥ १६    G. 7. 44. 20 B. 7. 41. 21 L. 7. 43. 19

सिद्धानां गतौ मा मामविषादेनाश्रमेण योजय प्रापयेति वार्थः ।; Ck : हे सौम्य सिद्धानां च गतौ व्योममार्गे आत्मानं विषादेन खेदेन मा योजय । विमुक्तगत्या गति( त ? ) दुःखः सुप्रतिष्ठः सुखमास्स्वेत्यर्थः । ; Ct : हे सौम्य, सिद्धानां गतौ व्योममार्गे । विषादेनास्मद्वियोगदुःखेन मा योजय आत्मनमिति शेषः । सुखमास्स्वेति तात्पर्यम्. ❀

—Thereafter $\tilde{N}_2$ $D_{6.7.10.11}$ cont., while Ś $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_4$ ins. after $11^{ab}$ :

786* प्रतिवातश्च ते मा भूद्यथेष्टं गच्छतो दिशः ।

[ $D_{2.9}$ $T_4$ परि- ( for प्रति- ). $V_3$ मा भूत्ते ( by transp. ); $D_{1.4}$ मा तेभूद् ( by transp. ); $D_{3.5}$ मा ते( $D_5$ ते मा ) भूर् ( for ते मा भूद् ). $D_1$ अष्टौ हि; $D_{8.12}$ यथेष्टां ( for यथेष्टं ). Ś $D_{5.8.12}$ दिशं; $V_3$ दिवं ( for दिशः ). ]

—$^{cd}$ ) $T_3$ $G_2$ $M_6$ विसृ( $G_2$ प्रहृ )ष्टं पुष्पकं पुनः ( for $^d$ ). Ś $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ एवं विस( $\tilde{N}_1$ °नि )र्जितस्ते( $V_{1.3}$ $D_{1-5.9}$ °तं ते ) न रामेणाक्लिष्टकर्मणा; $\tilde{N}_2$ B $D_{6.7.10.11}$ एवमस्त्विति रामेण पूजयित्वा विसर्जितः( $\tilde{N}_2$ $B_4$ $D_{6.7.10.11}$ °तं ). —$^e$ ) Ś $D_8$ ह्यभिप्रीतो ( for °प्रेतां ). Ś $\tilde{N}_1$ $V_{1.3}$ $B_2$ $D_{1-5.8.9.12}$ पूर्वां; $\tilde{N}_2$ $B_{1.3.4}$ $D_{6.7.10.11}$ तस्मात् ; $T_3$ $M_5$ यायात् ( for प्रायात् ). —$^f$ ) $T_3$ $G_2$ $M_{4.6}$ पुष्पकं ( for पुष्पकः ). $T_{1.2}$ $G_3$ $M_3$ -मोदितः; $T_3$ $G_{1.2}$ $M_{5.8.10}$ -पूजितः( $T_3$ $G_2$ °तं ); $T_4$ -निर्मितः; $M_{4.6}$ -भूषितं ( for -भूषितः ). Ś $\tilde{N}_1$ $D_{8.12}$ प्रयातः पुष्पकस्तथा( $\tilde{N}_1$ °दा ); $\tilde{N}_2$ $V_{1.3}$ B $D_{1-7.9-11}$ प्रयातं( $B_1$ प्रायात्स; $B_{3.4}$ $D_{7.10.11}$ प्रायात्तत् ) पुष्पकं तदा. ❀ Ct : पुष्पकं पुष्पमिव लघ्विति पुष्पकम् । संज्ञायां कन्. ❀

12 $^a$ ) $B_2$ स तु गते; $B_3$ चांतर्हिते; $T_{1.2}$ अंतर्गते ( for अन्तर्हिते ). Ś $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_4$ गते तस्मिन्विमाने तु. —$^b$ ) Ś $\tilde{N}_1$ $D_{1.3.4.8.12}$ रुचिरात्मनि; $\tilde{N}_2$ $V_1$ $D_{2.5.7.9-11}$ सु( $D_{2.9}$ तु ) कृतात्मनि; $V_3$ च सुवेश्मनि; B विदितात्मनि; $G_1$ विश्रुतात्मनि; $T_4$ $M_{1.3.10}$ विबुधात्मनि( $T_4$ damaged from धात्मनि up to $^c$ ) ( for विविधात्मनि ). —$^c$ ) Ś $V_3$ $D_{1.3-5.8.12}$ भूत्वा ( for वाक्यम् ). —$^d$ ) $M_1$ -सत्तमं ( for -नन्दनम् ). Ś $D_{8.12}$ रामं वचनमब्रवीत्; $\tilde{N}$ $V_1$ B $D_{2.6.7.9-11}$ उवाच( $B_3$ अब्रवीद् ) रघुनंदनं; $V_3$ $D_{1.3-5}$ वाक्यं प्रो( $V_3$ चो )वाच राघवं.

13 $^a$ ) $D_{10.11}$ Ck.t विबुधात्मनि; K ( ed. ) त्रिविधात्मनि. $V_3$ भूयस्ते ( for दृश्यन्ते ). ❀ Cg : विविधात्मनि नानारूपे चित्र इत्यर्थः ।; Ck.t : विबुधात्मनि देवमूर्तौ. ❀ —$^b$ ) Ś $\tilde{N}$ $V_{1.3}$ $B_{1.3.4}$ D वीर ( for राज्यं ). —$^c$ ) $D_{10.11}$ $T_1$ G $M_{1.5.9.10}$ Ck.t अमानुषाणि सत्त्वानि. —$V_3$ om. ( hapl. ) from $13^d$ up to $14^c$. —$^d$ ) Ś $B_{1.2}$ $D_{8.12}$ $T_3$ $M_1$ पुनः पुनः ( for मुहुर्मुहुः ). ❀ Cg : अमानुषाणां सत्त्वानां पुष्पकादीनामित्यर्थः ।; Ck : अमानुषाणि सत्त्वानीति पुष्पकादीनीत्यर्थः । व्याहृतानीति । मत्वर्थीयाजन्तः । व्याहारवन्ति ।; so also Ct. ❀

14 $V_3$ om. $14^{abc}$ ( cf. v.l. 13 ). —$^a$ ) $D_9$ om. from च up to हर्ष in $15^c$. Ś $\tilde{N}_1$ $V_1$ $D_{3.5.7.8.10-12}$ $T_{1.2}$ $G_3$ $M_3$ अनामयश्च; $\tilde{N}_2$ B $D_{1.2.4.6}$ $T_{3.4}$ $G_1$ $M_8$ अनामयानां ( $D_{1.4}$ $T_{3.4}$ $G_1$ $M_8$ °श्च; $D_2$ °स्तु ) ( for अनामयाच्च ). Ś $B_{1.3.4}$ $D_8$ सत्त्वानां; $B_2$ लोकानां ( for मर्त्यानां ). —$B_4$ om. ( hapl. ) $14^{bc}$. —$^b$ ) $B_1$ [ अ ]ग्र वर्तते; $T_3$ $M_6$ गत ( $M_6$ °तो )व्ययः ( for गतोह्ययम् ). $\tilde{N}$ $V_1$ $B_2$ $D_{1-6}$ $T_4$ सुखं संवत्सरा ययुः; $B_3$ संगमः सोभ्यवर्तते. ❀ Cg : साग्रो मासो गत इति । अभिषेकानन्तरं साग्रो मासो गतः । तावन्मात्रेणानामयादिगुणप्रादुर्भाव इत्याश्चर्यमित्यर्थः । अनेन पुष्पकागमनं मासाभ्यन्तर एव तत्कालवृत्तान्तो भरतेन निर्दर्शित इत्यवगम्यते । पुनः फाल्गुनमासप्राप्तेः पूर्वमुक्तत्वात् ।; Ck : तवाभिषेकानन्तरं साग्रो ह्ययं मासो गतः । तन्मध्ये तावन्मात्रेण मर्त्यानामनामयादिगुणप्रादुर्भावः ।; Ct : साग्रो मास इति जातावेकवचनम् । मासा इत्यर्थः. ❀ —$^c$ ) $T_4$ damaged from सत्त्वानां up to $^d$. $G_{1.2}$ $M_{6.7}$ मर्त्यानां ( for सत्त्वानां ). —$^d$ ) Ś $B_{1.3.4}$ $D_{8.12}$ नाभ्ये( $D_{12}$ °त्ये )ति ( for नायाति ). $\tilde{N}_1$ $V_3$ $D_{1.3-5}$ नास्ति मृत्युकृतं भयं( $\tilde{N}_1$ °भयं कृतं ).

15 $D_9$ om. up to हर्ष in $^c$ ( cf. v.l. 14 ). —$^a$ ) $\tilde{N}$ $V_{1.3}$ $D_{1-7.10.11}$ $T_4$ अरोगप्रस( $V_3$ °भ )वा नार्यो; B प्रसूयंते सुतान्नार्यो. —$^b$ ) Ś $B_{1.3.4}$ $D_{8.12}$ $M_6$ वपुः पुण्यं( $B_{1.3.4}$ $M_6$ °ण्यं )ति; $\tilde{N}_2$ $V_1$ $D_{6.7.10.11}$ $T_4$ वपुष्मंतो हि( $V_1$ °तोपि ); $G_{1.2}$ वपुमंतश्च ( for वपुष्मन्तश्च ). ❀ Cg.t : वपुष्मन्तो हृष्टपुष्टवपुर्युक्ताः ।; so also Ck. ❀ —$^c$ ) $D_{3.5}$ $G_2$ $M_{1.3.8}$ [ अ ]पि ( for [ अ ]भि- ). $V_3$ हर्षवंतस्तथा; $D_1$ प्रहृष्टश्चाधिको ( for हर्षश्चाभ्यधिको ). $V_1$ $D_2$ राम; $B_2$ जीवन् ; $D_5$ राष्ट्रे; $D_{10}$ नूनं ( for राजन् ). —$M_8$ om. $15^d$–$17^c$. —$^d$ ) Ś $D_{8.12}$ जातश्च पुरवासिनां; $V_3$ पौरजानपदांस्तथा. —After 15, $V_3$ reads $18^{ab}$.

16 $M_8$ om. 16 ( cf. v.l. 15 ). $T_{1.2}$ G $M_{5.6.10}$ om. $16^{ab}$. —$^a$ ) Ś $D_{8.12}$ कालेन ( for काले च ). $\tilde{N}$ $V_{1.3}$ B $D_{1-7.9-11}$ काले वर्षति पर्जन्यः( $D_4$ *** ). —$^b$ ) Ś $D_{8.12}$ जनयति ( for पातयति ). $\tilde{N}$ $V_1$ B $D_{1-7.9-11}$ पातयत्यमृतं पयः; $V_3$ प्रापयत्यमृतं पयः. —$^c$ ) Ś $D_{8.12}$ [ ए ]व ( for [ अ ]पि ). $T_{1.2}$ $G_3$ $M_{1.3}$ [ अ ]भितो वांति ( for [ अ ]पि वायन्ते ). $\tilde{N}$ $V_{1.3}$ B $D_{1-4.6.7.9-11}$ $T_4$ वाताश्चापि प्रवां( $D_4$

G. 7. 44. 21 B. 7. 41. 21 L. 7. 43. 20 ईदृशो नश्चिरं राजा भवत्विति नरेश्वर ।
कथयन्ति पुरे पौरा जना जनपदेषु च ॥ १७

एता वाचः सुमधुरा भरतेन समीरिताः ।
श्रुत्वा रामो मुदा युक्तः प्रमुमोद सुखी सुखम् ॥ १८

इति श्रीरामायणे उत्तरकाण्डे चत्वारिंशः सर्गः ॥ ४० ॥

°यां)त्येते( V$_3$ °वास्यंते). —$^d$) Ñ V$_{1.3}$ B$_{1.3.4}$ D$_{1-4.6.7.9-11}$ T$_4$ स्पर्शयुक्ताः; B$_2$ सुखस्पर्शाः; T$_2$ स्पर्शयंति (for स्पर्शवन्तः). Ñ$_1$ V$_3$ D$_3$ शिवाः सुखाः; Ñ$_2$ V$_1$ B$_{1.3.4}$ D$_{2.4.6.7.9-11}$ सुखाः शिवाः( D$_4$ * *); B$_2$ सदैव *; D$_1$ M$_5$ सुखावहाः (for सुखप्रदाः).

17 M$_8$ om. 17$^{abc}$ (cf. v.l. 15). T$_4$ damaged up to भवत्वि in $^b$. —$^a$) B$_2$ यादृशो (for ईदृशो). Ñ$_1$ V$_1$ D$_{1-4.9}$ नः सदा; D$_8$ निश्चितं (for नश्चिरं). G$_1$ राजन्. —$^b$) Ñ$_2$ V$_3$ B D$_{6.7.10.11}$ भवेद्; T$_1$ जीवतु (for भवतु). D$_5$ G$_1$ इह (for इति). Ñ$_1$ V$_3$ B$_{1.2}$ D$_{2.9-12}$ T$_3$ नरेश्वरः; B$_3$ नराधिपः; B$_4$ न संशयः; D$_{1.3.4}$ नरोत्तमः (for नरेश्वर). —$^c$) D$_5$ कथयंतः. Ñ V$_{1.3}$ D$_{1-4.6.7.9-11}$ T$_4$ राजन् (for पौरा). —$^d$) M$_4$ पौर- (for जना). M$_{2.4.9}$ जानपदेषु. D$_5$ [ क्ष ]पि (for च). Ñ V$_{1.3}$ D$_{1-4.6.7.9-11}$ T$_4$ पौर( Ñ$_1$ D$_7$ °रा) जानपदास्तथा( V$_1$ °दास्तदा; T$_4$ °दा जनाः).

18 V$_3$ reads 18$^{ab}$ after 15. —$^a$) D$_3$ च (for सु-). D$_4$ * * रा; G$_1$ -मनसा (for -मधुरा). V$_3$ एताश्चान्याश्च मधुरा. —$^c$) Ś D$_8$ शृण्वन् ; D$_{12}$ तत्र (for श्रुत्वा). D$_5$ राजा; M$_1$ वाचो (for रामो). —$^d$) = 1$^d$. G$_3$ सुखं सुखी (by transp.). Ñ V$_{1.3}$ B D$_{1-4.6.7.9-11}$ T$_4$ बभूव नृपसत्तमः. ❀ Cg: सुखी सुखमिति वक्ष्यमाणसर्गकथानुवादसंग्रहः. ❀ —After 18, B$_3$ ins.:

787* संपूज्य तद्धनदविमानमादरा-
द्रघूत्तमो धनदविभूषितं तदा ।
विसृज्य चैनं तदभीष्टमार्गं
प्रतिप्रविष्टः प्रमदावनं तदा ।

Colophon: D$_4$ om. (cont. the sarga). —*Kāṇḍa name*: Ś$_1$ B$_3$ D$_2$ M$_7$ om. —*Sarga name*: Ś D$_{3.12}$ पुष्पकप्रत्यानयनः( Ś$_2$ °नं); Ñ V$_3$ B D$_{1-3.6.9}$ पुष्पकप्रत्यागमनं( Ñ$_1$ D$_{2.9}$ °नः; B$_2$ °गमः); V$_1$ पुष्पकप्रस्थानं; D$_5$ पुष्पकपुनर्गमनं. —*Sarga no.* (figures, words or both): Ś Ñ$_1$ V$_3$ D$_{2.12}$ om.; Ñ$_2$ B$_{1.3}$ 45; V$_1$ 35; B$_2$ 31; B$_4$ T$_3$ 46; D$_{1.3}$ 43; D$_5$ 44; D$_{6.8.10.11}$ T$_{1.2}$ G M$_{1-5.9-10}$ 41; D$_9$ 49; T$_4$ 48; M$_6$ 39. —After colophon, T$_4$ concludes with श्रीरामार्पणमस्तु; G M$_{1.5.8}$ with श्रीरामाय नमः; M$_6$ with श्रीं; M$_{10}$ with श्रीरामचन्द्राय नमः.

# ४१

स विसृज्य ततो रामः पुष्पकं हेमभूषितम् ।
प्रविवेश महाबाहुरशोकवनिकां तदा ॥ १
चन्दनागरुचूतैश्च तुङ्गकालेयकैरपि ।
देवदारुवनैश्चापि समन्तादुपशोभिताम् ॥ २
प्रियङ्गुभिः कदम्बैश्च तथा कुरबकैरपि ।
जम्बूभिः पाटलीभिश्च कोविदारैश्च संवृताम् ॥ ३
सर्वदा कुसुमै रम्यैः फलवद्भिर्मनोरमैः ।
चारुपल्लवपुष्पाढ्यैर्मत्तभ्रमरसंकुलैः ॥ ४

G. 7. 45. 11
B. 7. 42. 7
L. 7. 44. 5

## 41

☞ V2 missing for Sarga 41 (cf. v.l. 7.12.2). D4 cont. the previous Sarga. D12 begins with ॐ.

1 $^{a}$) Ś Ñ2 V3 B D8.12 तं; Ñ1 V1 D1.2.4.9 T4 तद्; D3 प्र- (for स). T1–3 G3 M3 विसृज्य च (T3 तु); Cg.k as in text (for स विसृज्य). V1 तदा (for ततो).—$^{b}$) M1 पुष्प- (for हेम-).—D11 om. $1^{cd}$.—$^{d}$) Ś Ñ V1.3 B2–4 D1–4.8.9.12 T4 M5.6 शुभां; T2 तथा (for तदा). B1 रत्नाकरनिभां सभां. ❀ Cg: अशोकवनिकामन्तःपुरगतं लीलोद्यानम् ।; Ck: अशोकवनिकेति । सामान्यतो महाप्रभूणां शृङ्गारविहारोपवनमन्तःपुरवर्ति ।; so also Ct. ❀—After 1, Ñ2 B ins. 792* and then Ñ2 B1–3 read 9 for the first time repeating it in its proper place.

2 For 2–8, Ñ1 V1 D2.3.9 subst. 792*.—$^{a}$) Ś Ñ2 B D3.10.12 -[अ]गुरु- (for -[अ]गरु-). Ś D8.12 -गंधैश्; Ñ2 B2–4 वृक्षैश्; D1.4 -धूपांश् (sic); D5 -धूपैश्; G (ed.) -पर्णैश् (for -चूतैश्). V3 तत्राशोकान्प्रियंगश्च (sic).—$^{b}$) Ś Ñ2 V3 B D5.8.12 -कालीयकैर् (for -कालेयकैर्).—After $2^{ab}$, M1 reads 3 (transp. $^{ab}$ and $^{cd}$ [followed by first occurrence of $2^{cd}$]).—$^{c}$) Ñ2 V3 B [ए]व (for [अ]पि).—$^{d}$) V3 B2.4 -शोभिताः (for -शोभिताम्). Ś D8.12 M1(first time).5 शोभितां हेमस(Ś1 °सु)प्रभैः.—After 2, Ñ2 V3 B D1.4–7.10.11 T G M1(after $2^{cd}$ [second occurrence]).2–4.6–10 ins.; while Ś D8.12 ins. l. 3–4 only after 2:

788* चम्पकाशोकपुंनागमधूकपनसासनैः ।
शोभितां पारिजातैश्च विधूमज्वलनप्रभैः ।
लोध्रनीपार्जुनैर्नागैः सप्तपर्णातिमुक्तकैः ।
मन्दारकदलीगुल्मलताजालसमावृताम् ।

[(l. 1) D5–7.10.11 T4 -[अ]ग(D10 [अ]गु)रु- (for -[अ]शोक-). Ñ2 V3 B -पुंनागैर् (for -पुंनाग-). G1 -पवन- (for -पनस-). V3 B -पनसादिभिः (for -पनसासनैः).—After l. 1, Ñ2 V3 B ins.:

788(A)* शालैस्तालैस्तमालैश्च गगनार्धसमुच्छ्रितैः ।

[B3 सुमालैश्च (for तमालैश्च).]

—(l. 2) D1.4 M1 -ज्वलनोपमैः (for °नप्रभैः). Ñ2 V3 B वृक्षैर्बहुविधैश्चापि (B1 °श्चैव) शोभिता(Ñ2 V3 B1 °तां) हेमसप्रभैः (B2 °संनिभाः).—After l. 2, D1.4 T1–3 G2.3 M2–4.7–10 ins.; while G1 M6 cont. after 788(C)*:

788(B)* कर्णिकारवनैश्चापि शोभितां हेमसप्रभैः ।

[T1.3 M3 [ए]व (for [अ]पि). T2 -सुप्रभैः.];

while G1 M6 ins. after l. 2:

788(C)* सुरभीणि च माल्यानि जलजानि शुभानि च ।

[G1 सुगंधीनि (for च माल्यानि). G1 जलानि च सुखानि च (for the post. half).]

—T1 G M1.3.8 om. l. 3–4.—(l. 3) Ś D1.4.8.12 रोध्र- (for लोध्र-). Ś D8.12 -नीराजनैर्; B3 -नीलार्जुनैर् (for -नीपार्जुनैर्). B1 नीपैः (for नागैः). Ś D1.4.8.12 -पत्र- (for -पर्ण-). S3 D8.12 °मुक्तकैः; D6 °नक्तकैः (for -[अ]तिमुक्तकैः).—(l. 4) V3 असन- (for मन्दार-). V3 B2.4 -समावृताः; T2.3 -समाकुलां (for -समावृताम्).]

3 For subst. in Ñ1 V1 D2.3.9 cf. v.l. 2 and 8. V3 D1.4 om. (hapl.?) 3. M1 reads 3 (transp. $^{ab}$ and $^{cd}$) after $2^{ab}$.—$^{a}$) Ñ2 B कुरबकैः (for कदम्बैश्च).—After $3^{a}$, D5 reads $4^{b}$ and the prior half of l. 1 of 789* for the first time repeating them in their proper places.—$^{b}$) Ś D8.12 कारंटकैर् (D12 °कटैर्); D5–7.10.11 T4 च बकुलैर् (for कुरबकैर्). Ñ2 B कदंबैश्चोपशोभितां (B2.4 °ताः).—$^{c}$) Ś Ñ2 B4 D8.12 M5 पाटलाभिश्च; B2 कोविदारैश्च; D5–7.10.11 T4 दाडिमैश्चैव (for पाटलीभिश्च).—$^{d}$) B2 पाटलाभिश् (for कोविदारैश्). Ñ2 सु- (for च). Ś2 B D5–7.10.11 T4 शोभितां; B3 संभृतां (for संवृताम्).—After $3^{cd}$, M1 reads $2^{cd}$ for the first time repeating it in its proper place.

4 For subst. in Ñ1 V1 D2.3.9 cf. v.l. 2 and 8.—$^{a}$) Ñ2 V3 B G3 सर्वर्तु-; M5 सदा सु-; Ck.t as in text (for सर्वदा). Ñ2 V3 B दिव्यैः; T1.2 G M2–5.7–10 अन्यैः (for रम्यैः).—D5 repeats $4^{b}$ and the prior half of l. 1 of 789* here (cf. v.l. 3).—$^{b}$) Ñ2 V3 B सु(Ñ2 B3 स)पुष्पितैः; T3 M1 मनोहरैः (for मनोरमैः).—After $4^{ab}$, Ñ2 V3 B D1.4–7.10.11 S ins.:

789* दिव्यगन्धरसोपेतैस्तरुणाङ्कुरपल्लवैः ।
तथैव तरुभिर्दिव्यैः शिल्पिभिः परिकल्पितैः ।

[D5 repeats the prior half of l. 1 here (cf. v.l. 3).—(l. 1) Ñ2 -रसोपेतं; D1 -समुपेतैश्च (for -रसोपेतैस्). Ñ2

G. 7. 45. 12
B. 7. 42. 8
L. 7. 44. 6

कोकिलैर्भृङ्गराजैश्च नानावर्णैश्च पक्षिभिः ।
शोभितां शतशश्चित्रैश्चूतवृक्षावतंसकैः ॥ ५
शातकुम्भनिभाः केचित्केचिदग्निशिखोपमाः ।
नीलाञ्जननिभाश्चान्ये भान्ति तत्र स्म पादपाः ॥ ६
दीर्घिका विविधाकाराः पूर्णाः परमवारिणा ।
महार्हमणिसोपानस्फटिकान्तरकुट्टिमाः ॥ ७
फुल्लपद्मोत्पलवनाश्चक्रवाकोपशोभिताः ।
प्राकारैर्विविधाकारैः शोभिताश्च शिलातलैः ॥ ८

B -कोमलैः; D1.4 -रालैः (sic); M6 -कोरकैः (for -पल्लवैः). —(l. 2) Ñ2 V3 B D1.4 M6 शोभितां (B2.4 °तास्) (for तथैव). D6 शिलाभिः (for शिल्पिभिः). M1 चारु- (for परि-). D1.4 -कल्पितां. ❀ Cg : दिव्यैः शिल्पिभिरिति । ऋतुभिरित्यर्थः । दोहलकादिभिर्वा ।; Ck : दिव्यैः शिल्पिभिरित्यर्थः ।; Ct : दिव्यैः शिल्पिभिर्वृक्षारोपणादिशिल्पवद्भिः. ❀ ]

—c) Ś D8.12 -पुष्पाढ्यां D4–7.11 -पुष्पाद्यैर् (for -पुष्पाढ्यैर्). —d) Ś D8.12 -संकुलां; Ñ2 V3 B -कूजितैः (for -संकुलैः).

5 For subst. in Ñ1 V1 D2.3.9 cf. v.l. 2 and 8. —a) M1 बर्हिणैश्चैव (for भृङ्गराजैश्च). —Ñ2 om. (hapl ?) $5^{bc}$. D1 om. $5^{c}$–8. —c) B2 शोभिताः (for शोभितां). V3 B1.2 पत्रपुष्पैश्च; B3.4 पुष्पपत्रैश्च; D4 सचैत- श्चित्रैश्; D5–7.10.11 शतशश्चित्रां (for शतशश्चित्रैश्). —d) D6 कृत- (for चूत-). V3 -पत्र-; M1 -पुष्प-; Cv.g.t as in text (for -वृक्ष-). ❀ Cg : चूतवृक्षावतंसकैः चूतवृक्षाग्रस्थैरित्यर्थः ।; Ck : चूता(°त वृक्षा ?)वतंसकैः, चूतवृक्षपल्लवरूपावतंससंनिभैः । तत्समानवर्णैः । पक्षिविशेषणमिदम् ।; Ct : चूतवृक्षपुष्परजोऽवतंसभूतं येषां तैः पक्षिभिः. ❀

6 For subst. in Ñ1 V1 D2.3.9 cf. v.l. 2 and 8. D1 om. 6 (cf. v.l. 5). —a) Ś D8.12 शातकौंभ- (for शातकुम्भ-). D4 -निभैः कैश्चित् (for -निभाः केचित्). Ñ2 V3 B शातकुंभमयैः कै(B1 क)श्चित्. —b) Ñ2 V3 B कैश्चिद्; D4 * * द् (for केचिद्). Ñ2 V3 B -शिखोपमैः; D4.12 -शिखाप्रभैः(D12 °भाः); G2 -शिखासमाः (for -शिखोपमाः). —c) Ñ2 V3 B D4.11 -निभैश्चान्यैः; G1 M1.5 -निभाः केचिद् (for -निभाश्चान्ये). —d) Ś D8 तत्र भांति (by transp.). T3 सु- (for स्म). K (ed.) तत्रत्य- (for तत्र स्म). Ñ2 B1 पादपैः शोभितां वरां; V3 B4 शोभिता वरपादपैः; B2.3 शोभिताः(B3 °तां) सुरपादपैः; B2 (m. also) पादपैः शोभितांतरा. —After 6, D5–7.10.11 T G M1–5.7–10 ins. l. 2 of 792*.

7 For subst. in Ñ1 V1 D2.3.9 cf. v.l. 2 and 8. D1 om. 7 (cf. v.l. 5). —a) Ñ2 V3 B तत्र रुचिराः (for विविधाकाराः). —b) D11 reads परमवारिणा in marg. G2 -वारिभिः (for -वारिणा). Ś D4.8.12 वृक्षाः(D4 * *) फलसमन्विताः; Ñ2 V3 B पूर्णाश्च परमांभसा(Ñ2 B2 °माप्लुताः). —c) D5–7.10.11 T4 माणिक्यकृत- (for महार्हमणि-). Ś Ñ2 V3 B D4–8.10–12 T3 M3.5.6 -सोपानाः (for -सोपान-). —d) Ñ2 V3 B3.4 D4.10.11 T1.3 G M2–8 Cg.k स्फाटिक- (for -स्फटिक-). ❀ Cg : स्फाटिकान्तरकुट्टिमाः स्फटिकमयसोपानप्रान्तस्थानार्हा निबद्धभूमयः । अन्यथा सर्वत्रान्तरे स्फटिककुट्टिमत्वे पद्माद्युत्पत्तिविरोधात् ।; Ck : स्फाटिकेति । स्फटिकरत्ननिबद्धान्तरालवत्कुट्टिमबद्धभूमिर्यासु ताः स्थिताः ।; so also Ct. ❀

8 D1 om. 8 (cf. v.l. 5). —a) Ś D8.12 -भृतश्; M1 -युताश् (for -वनाश्). M5 -[ उ ]त्पलवती (for -[ उ ]त्पलवनाश्). B1 प्रफुल्लपद्मोपवनाश्; D4 पुष्पपद्मोत्पलावृताश्. —b) G2 -कूजिताः (for -शोभिताः). —After $8^{ab}$, B2 ins. :

790* नानापक्षिगणैर्युक्ता मधुपैः परिवारिताः ।

—Thereafter B2 cont.; while Ñ2 V3 B4 D5–7.10.11 S ins. after $8^{ab}$ :

791* दात्यूहरुतसंघुष्टा हंससारसनादिताः ।
तरुभिः पुष्पशबलैस्तीरजैरुपशोभिताः ।

[ (l. 1) T1.2 G1.3 M1.2–5.9.10 न त्यूह- (for दात्यूह-). Ñ2 B4 D5–7.10.11 -शुक-; B2 गण- (for -रुत-). Ñ2 B2 -संपूर्णा; M1 -घुष्टाश्च (for -संघुष्टा). V3 जलपक्षिगणाकीर्णा (for the prior half). D5 हिम- (for हंस-). V3 -शोभिताः; M1 -सेविताः (for -नादिताः).]

—c) Ś Ñ2 V3 B1–3 D4.8.12 T1 G3 M3.6 प्रासादैर् (for प्राकारैर्). —d) B4 शोभितैश् (for शोभिताश्). G3 शिलातलाः. —For 2–8, Ñ1 V1 D2.3.9 subst.; while Ñ2 B ins. after 1; D1 ins. after $5^{ab}$ (owing to om.); D4 ins. after $9^{ab}$ (first occurrence); D5–7.10.11 T G M1–5.7–10 ins. l. 2 after 6 and l. 5–6 after 9 (M5 l. 5–6 after 8) :

792* यत्राशोकः प्रियङ्गुश्च चम्पका नवमालिकाः ।
सुबहूनि सुगन्धीनि माल्यानि विविधानि च ।
अकालपुष्पास्तरवः शिल्पिभिः परिकल्पिताः ।
ते पुष्पिता बहुविधा बभुर्मायाकृता इव ।
संहर्षादिव जातानां वृक्षाणां पुष्पशालिनाम् । [5]
प्रस्तराः पुष्पशबला नभस्तारागणैरिव ।

[ (l. 1) Ñ1 D1.4 तत्र (for यत्र). Ñ2 B2.3 D1.4 [अ]शोकाः (for [अ]शोकः). Ñ1 रक्त-; B3 वन-; D1.4 नक्त- (for नव-). Ñ1 -मल्लिकाः; D1.4 -मालकाः (for -मालिकाः). V1 D3.9 तत्राशोकान्प्रियंगूंश्च चंपकान्न(V1 °न्न)क्तमालिकाः(V1 °मल्लिकान्; D9 °मालकान्); D2 तत्राशोकप्रियंगाश्च चंपका नक्तमालकाः. —(l. 2) D5–7.10.11 T G M1–5.7–10 सुरभीणि च पुष्पाणि (for the prior half). M1 सुरभीणि (for विविधानि). —D1 om. l. 3. —(l. 3) B2 -पुष्पस्तबकाः (for -पुष्पास्तरवः). V1 D2–4.9 अकालगा(D3.9 °जा)श्चापि(D4 °जाताश्च) नगाः (for the

तत्र तत्र वनोद्देशे वैदूर्यमणिसंनिभैः ।
शाद्वलैः परमोपेताः पुष्पितद्रुमसंयुताः ॥ ९
नन्दनं हि यथेन्द्रस्य ब्राह्मं चैत्ररथं यथा ।
तथारूपं हि रामस्य काननं तन्निवेशितम् ॥ १०
बह्वासनगृहोपेतां लतागृहसमावृताम् ।
अशोकवनिकां स्फीतां प्रविश्य रघुनन्दनः ॥ ११

G. 7. 45. 19
B. 7. 42. 17
L. 7. 44. 12

prior half). D3.4 -कीर्तिताः (for -कल्पिताः).—(l. 4) Ñ1 पुष्पवंतः सुगंधाढ्याः; V1 D1.2.4 पुष्पंते ते(D1 °ष्पितास्ते)पि गंधाढ्याः; D3.9 पुष्यंत्यति(D3 °ति ते)सुगंधाढ्याः (for the prior half). Ñ2 B4 चतुर्माया-; B3 चतुर्मुख- (for बभुर्माया-). B2 -[ आ ]वृता (for -कृता). Ñ1 V1 D2-4.9 पुष्पं मायाकृतं यथा (V1 D3 तथा); D1 पुष्पमय्यास्त्वलंकृता (sic) (for the post. half).—After l. 4, B4 reads 9cd for the first time repeating it in its proper place.—B3 repeats l. 5-6 after 793*.—(l. 5) D2.3.9 संवर्पादिव(D2 °नपि); D5-7.10.11 T G M1-5.7-10 तत्र संवर्प- (for संद्दर्पादिव). B2 -शोभिनां; B3 (first time) -मालिनां (for -शालिनाम्). ❀ Cg: संवर्पजातानां स्पर्धयैव जातानाम्, जातपुष्पाणामित्यर्थः ।; Ck: संवर्पात्स्पर्धयैव जातानां ब्जातपुष्पाणामित्यर्थः ।; so also Ct. ❀—(l. 6) B1 किंशुकाः; B3 (both times) संभाराः; D2.9 स्वास्तराः; D3 संपूर्णाः; D4 स्वस्तेशः (sic) (for प्रस्तराः). D9 -शालाश्च (for -शबला). D1 सर्वे पुष्पस्तबका (subm.) (for the prior half. B3 (second time) बभुव (for नभस्). Ñ V1 -गणा इव (for -गणैरिव). B1-3(first time).4 D1-4.9 बभुस्तारागणा इव (for the post. half).]

9 Ñ2 B1-3 read 9 for the first time after 792* repeating it here. Ñ1 D4 read 9ab twice. M5 transp. 9 and 10.—a) D5-7.10.11 तत्रैव च (for तत्र तत्र). D6 T3 G1.2 M1.2.4-7.9 वनोद्देशा(D6 G1 M5.6 °शैर्); T2 शिलोद्देशैर् (for वनोद्देशे). Ś Ñ B (Ñ1 [ both times; Ñ2 B1-3 first time ]) D1-3.4(both times).8.9.12 त(Ñ2 B1.2 य)त्रोद्देशाः सु(Ñ1 first time °शास्तु)रुचिराः; V1 तत्रोद्योगाय रुचिरा.—b) Ś D1-9(D4 both times).11 T G M1.3-6.8 वैदूर्यमणि-; B3 (first time) M2.9 वैदूर्यमाल-(M2.9 °मय-). Ś D8.12 -शोभिताः; Ñ V1.3 B D1-4.9 G2 M2.4.7(Ñ B2.3 D4 both times; B1 first time) -संनिभाः (for -संनिभैः).—After 9ab (first occurrence), D4 ins. 792*.—B4 reads 9cd for the first time after l. 4 of 792* repeating it here.—c) D2-4.7.8.10.11 T1-3 G M1.3.6.8 शाड्वलैः; Cg as in text (for शाद्वलैः). Ñ1 V1 B2(second time) D1-4.9 उपसंपन्ना(Ñ1 °लन्ना; V1 D1.4 °छन्ना); B3 (first time) T3 परमोपेतैः; D5-7 T4 परमैर्युक्ताः; D10.11 M4-6.8.10 Cg.t परमोपेतां; M1 मृदुभिर्युक्ताः; Ck as in text (for परमोपेताः). ❀ Cg.t : परमोपेतामत्यन्तसंयुक्ताम् ।; Ck: परमोपेता अत्यन्तसंयुक्ताः. ❀—d) D5-7.10.11 T4 -काननां; M1.4.5.8.10 -संयुतां (for -संयुताः). Ś Ñ V1.3 B(Ñ2 B both times) D1-4.8.9.12 M6 सीता(Ś V1 D1.4.8.12 शीता; V3 क्रीडा)र्थमुपक(B3 °शि)ल्पिताः(M6 °तां).

—After 9, Ñ2 V3 B (Ñ2 B after 9cd [second occurrence]) ins.:

793* सर्वर्तुसुखदा रम्याः पुंस्कोकिलकलारवाः ।

[ B3.4 सर्वत्र (for सर्वर्तु-). B2 -कूजन- (for -कल-).]

—Thereafter, B3 repeats l. 5-6 of 792*; while D5-7.10.11 T G M1-4.7-10 ins. l. 5-6 only of 792* after 9.

10 M5 transp. 9 and 10.—a) Ñ1 भवनं (for नन्दनं). Ś Ñ1 V1.3 D1.2.8.9.12 G3 च; T1.2 M3 तु (for हि). D4 नंदनानं (sic) (for नन्दनं हि).—b) N1 V1.3 B2-4 D1-7.9 T2.4 वनं; G2 ब्राह्मैश् (for ब्राह्मं). D7 M2 तथा (for यथा).—c) D5-7.10.11 T1.2 G3 M6 तथाभूतं (M6 °रूपां) (for तथारूपं). M3 च (for हि). Ñ1 V1.3 D1-4.9 राघवस्य(V1 °मस्य च) त(D9 य)था(D2 °दा)रूपं.—d) Ñ1 कानने (for काननं). Ś Ñ2 V1.3 D2.3.8-12 T1.2 G3 M3.10 Cg.k.t सन्-; T3 यन् (for तन्). V1.3 D1-4.9-11 T2 G3 M5 Cg.k.t -निवेशने(D3.10.11 T2 G3 M5 Cg.k.t °नं); T3 निवेदितं (for निवेशितम्). T4 काननं मुनिसेवितं; M6 कारणात्तं निवेशितां. ❀ Cg.k.t : ब्राह्मं ब्रह्मनिर्मितम्(Ct adds चैत्ररथं कुबेरस्य) संनिवेशनं समीचीनसंस्थानोपेतम्. ❀—After 10, Ñ1 V1.3 D1-4.9 T3 M2.4.7.9.10 ins.:

794* नीलजीमूतसंकाशाः पद्मिन्यो विमले जले ।
हंसकारण्डवाकीर्णाश्चक्रवाकोपशोभिताः ।

[(l. 1) T3 M2.4.7.9.10 -वैडूर्यवर्णा(M4 °र्णं)श्च (for -जीमूतसंकाशा.). Ñ1 V1.3 विमलैर्जलैः; T3 M2.4.7.9.10 बहुविस्तराः (for विमले जले).]

11 Ñ1 V1.3 D1-4.9 om. 11.—a) D5 T4 M4.7 Cv -कृतोपेतां; T1 M2.3.6.10 -कुथोपेतां; Ck.t as in text (for -गृहोपेतां).—b) D5 -वन-; D10.11 T3.4 M1.2.4.7-9 Cv.k.t -[ आ ]सन-; G1 M5 -व्रात-; Cg as in text (for -गृह-). Ś D8.12 -समन्वितां; M8 -समावृताः; Cv.g k.t as in text (for -समावृताम्). Ñ2 B D6.7 G (ed.) लतापादपशोभितां G [ ed. ] °संवृतां); T1.2 G3 M3 पुष्पितद्रुमसंयुतां; G2 संतानकसमावृतां. ❀ Cv: बह्वासनकृतोपेताम्, बहुभिस्तमालपत्रादिभिः कृतासनोपेताम् । लतासनसमावृताम्, एलालवादिभिः कृतासनयुक्ताम् ।; Cg: बह्वासनगृहोपेताम्, अनेकावस्थानयोग्यगृहोपेतामित्यर्थः । लतागृहसमावृतां लतामयगृहसमावृताम् ।; Ck : बह्वासनोचितैरनेकावस्थानयोग्यैर्गृहैरुपेताम् । तथा लतानामासनं परिक्षेपो यस्मिंस्तत्तया। तैः समावृताम्। लतागृहैरुपेतामित्यर्थः ।; Ct : बह्वासनगृहोपेतां बहूनामवस्थानोचितगृहयुतां। लतासनसमावृतां लतानामासनं परिक्षेपो येषु तैर्लतासनैर्लतागृहैः समावृतामुपेताम्. ❀—d) Ś B3 D8 विवेश (for प्रविश्य).

G. 7. 45. 20
B. 7. 42. 17
L. 7. 44. 13

आसने तु शुभाकारे पुष्पस्तबकभूषिते ।
कुथास्तरणसंवीते रामः संनिषसाद ह ॥ १२
सीतां संगृह्य बाहुभ्यां मधुमैरेयमुत्तमम् ।
पाययामास काकुत्स्थः शचीमिन्द्रो यथामृतम् ॥ १३
मांसानि च विचित्राणि फलानि विविधानि च ।
रामस्याभ्यवहारार्थं किंकरास्तूर्णमाहरन् ॥ १४
उपनृत्यन्ति राजानं नृत्यगीतविशारदाः ।
बालाश्च रूपवत्यश्च स्त्रियः पानवशंगताः ॥ १५
एवं रामो मुदा युक्तः सीतां सुरुचिराननाम् ।
रमयामास वैदेहीमहन्यहनि देववत् ॥ १६

---

12 a) Ś1.2 D8.12 सं-; Ś3 Ṅ2 B2–4 D6.7.10.11 T1.2 G3 M3.4 च; B1 M6.7.10 सु- (for तु). Ś1.2 D12 -नत-; D8 -वृत- (for -शुभ-). Ñ1 V1.3 D1–4.9 ततस्त(D3 °त्र त)त्र शुभे देशे(V3 °स्मिन्वनोद्देशे). —b) B3 om. पुष्प-. Ś1 Ñ2 B1.3.4 D7.8.10–12 -प्रक(D12 °का)र-; Ś2.3 D6 -प्राकार-; Ñ1 V1 D1–4.9 -प्रस्तर-; B2 -प्रवर-; D5 -[आ]स्तरण- (for -स्तबक-). Ś B1–3 D8.12 T1.2 G M1.3 -शोभिते; Ñ1 V1 D2 -संवृते; D1.4 -संस्तृते; D3.9 -संस्तृते; T3 -पूजिते; M4.7.10 -संयुते (for -भूषिते). V3 प्रचुरे पुष्पसंवृते. —Ñ1 om. $12^{cd}$. —c) Ś Ñ2 V3 B1 D1.3.4.6–11 G2 कुश-; D2 अथ; T3 सुख-; M1.6 तथा (for कुश-). Ś V1.3 B2.4 D8.12 M6 -संकीर्णे; Ñ2 B1.3 D1–4.6.7.9–11 -संस्तीर्णे; Cg as in text (for -संवीते). ※ Cg : कुथास्तरणसंवीते उपर्यास्तरणावृते ।; Ck. : कुथास्तरणमुपर्यास्तरणम् ; Ct कुशास्तरणं नामोपर्यास्तरणम्. ※ —d) B2 D4.5.7 M2.4.6–10 स; D2.3.9 च; G1 तन् (for सं-). Ś2.3 -विषसाद (for -निषसाद). D5 हा (for ह).

13 Ñ2 illeg. for $13^{ab}$. —a) Ś2.3 स तां (for सीतां). Ñ1 V1.3 D1.2.4.9 T4 आलंब्य; B D3.6.7.10.11 आदाय; G2 संश्लिष्य (for संगृह्य). Ñ1 V1.3 B2 D1–4.6.7.9–11 हस्तेन; T4 हस्ताभ्यां; M5 पाणिभ्यां (for बाहुभ्यां). —b) Ñ1 V1.3 D1-4.6.7.9–11 T4 मधुमैरेयकं शुचि(Ñ1 V3 D1.6 °चिः); B1 मधुपेयमनुत्तमं. —d) Ñ1 V1.3 D1.3.4.9 इव (for यथा). M1 [ऽ]मृतं यथा (by transp.). Ñ2 D6.7.10.11 शचीमिव पुरंदरः; D2(with hiatus) शची इंद्रमिवामृतं.

14 Ñ2 B1.2(m. also as in text).3.4 D6.7.10.11 सुमृष्टानि (for विचित्राणि). —b) B1.3.4 विविधानि फलानि च. —c) Ś3 D8 रामम् ; Ñ1 V1.3 D2–4 T4 रामाय (for रामस्य). D1 रामाभ्यवव्यवहारार्थं (sic). —d) Ñ1 V1.3 D1–4.9 T4 समुपानयन् ; D5 T1 M3 तूर्णमानयन् . —After 14, B1 G (ed.) ins. 795*; D4 ins. 796*.

15 D4 om. 15. B1 transp. ab and cd. K (ed.) repeats 15 (ab and cd transp.) after 795* within brackets. B2–4 D6.7.10.11 repeats $15^{ab}$ after 15. G1 reads $15^{ab}$ twice. —a) Ś D8.12 उपानृ(D8 °नृ)त्य च; Ñ1 D1.2 T3 उपनृत्यंतु; Ñ2 B1–3 D6.7.10.11 K (ed.) (B2 first time; B3 both times; D6.7.10.11 K [ed.] second time) उपानृत्यंत; B4(both times) D6.7.10.11 K (ed.) (all except B4 first time) Cg.t उपानृत्यंश्च (for उपनृत्यन्ति). Ñ2 D6.7.10.11 K (ed.) (all except Ñ2 second time) काकुत्स्थं; B1 रामस्य; D2 राजानः (for राजानं). ※ Cg : उपानृत्यन्निति । उपनृत्यन्तीति वा पाठः । राजानमिति । राजानमुप राज्ञः समीपे ।; Ct : राजानमुपानृत्यन्राजसमीपेऽनृत्यन्. ※ —b) Ś1 D6.8.12 T3.4 G M1.2.5–10 (D6 G1 second time) नृत्तगीत-; V1 D2.3.9 गीतनृत्य- (by transp.); V3 गीतवाद्य- (for नृत्यगीत-). B1 सीतायाः हर्षवर्धनाः. —After $15^{ab}$ (first occurrence), B2–4 D6.7.10.11 ins.; while B1 G (ed.) ins. after 14; K (ed.) ins. (within brackets) after 15 (first occurrence):

795* अप्सरोरगसंघाश्च किंनरीपरिवारिताः ।

[B K (ed.) -गण- (for -[उ]रग-). G (ed.) नृत्तगीतविशारदाः. $=15^{b}$ (for the post. half).]

—Ñ2 om. $15^{cd}$. —c) Ñ1 V1.3 B4 D2.3.7.10.11 T4 K (ed. [second time]) दक्षिणा; D1.6.9 दाक्षिण्यो (for बालाश्च). Ś D8.12 कामवत्यश्; D1 तपवत्यश्; D2 रूपमान्याश् (for रूपवत्यश्). —d) Ś D8.12 किं न; D6 पण- (for पान-). D5 T2 G3 M3.6.8 -वशानुगाः; T1 -विशारदाः (for -वशंगताः). Ñ1 V1.3 D1–3.9 T4 स्त्रियः सर्वगुणान्विताः; B3 राघवं पानकं गताः. —After 15, Ś Ñ1 V1.3 D1–3.4 (after 14 owing to om.).8.9.12 T4 ins.; while Ñ2 ins. after $15^{ab}$ (owing to om.); B2 D6.7.10.11 K (ed.) ins. after $15^{ab}$ (second occurrence):

796* मनोभिरामा रामास्ता रामो रमयतां वरः ।
रमयामास धर्मात्मा नित्यं परमभूषिताः ।
स तया सीतया सार्धमासीनो विरराज ह ।
अरुन्धत्या सहासीनो वसिष्ठ इव तेजसा ।

[Ś D8.12 om. l. 1. —(l. 1) V3 मनोभिरामैः; B2 रामाभिराम- (for मनोभिरामा). D6 तु (for ता). T4 ता रामा (by transp.). D2 रामाय रमतां वरं (for the post. half). —(l. 2) Ś D6–8.12 -भूषितः ; D1.4 -हर्षितः(D4 °ताः) (for -भूषिताः). Ñ1 दिव्यांबरविभूषिताः (for the post. half). —(l. 3) D4 तथा (for तया). B2 (marg. also) देववद् (for आसीनो). D6 नि- (for वि-). B2 च; D3 हा; T4 हि (for ह). V1 विजहार च; D1.4 स विराजते (for विरराज ह). —For l. 4, D1.4 subst; while D3 ins. after l. 4:

796(A)* रोहिण्या तु सहासीनश्चन्द्रमा इव तेजसा ।]

16 b) B1 D3.4 T3 शीतांशु- (for सीतां सु-). Ñ V1.3 D2.6.7.9–11 T4 सुरसुतोपमां; M1 रुचिरलोचनां (for

तथा तु रममाणस्य तस्यैवं शिशिरः शुभः ।
अत्यक्रामन्नरेन्द्रस्य राघवस्य महात्मनः ॥ १७
पूर्वाह्णे पौरकृत्यानि कृत्वा धर्मेण धर्मवित् ।
शेषं दिवसभागार्धमन्तःपुरंगतोऽभवत् ॥ १८
सीता च देवकार्याणि कृत्वा पौर्वाह्णिकानि तु ।
श्वश्रूणामविशेषेण सर्वासां प्राञ्जलिः स्थिता ॥ १९
ततो राममुपागच्छद्विचित्रबहुभूषणा ।
त्रिविष्टपे सहस्राक्षमुपविष्टं यथा शची ॥ २०
दृष्ट्वा तु राघवः पत्नीं कल्याणेन समन्विताम् ।
प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् ॥ २१  G. 7. 45. 30 B 7. 42. 30 L. 7. 44. 23

---

सुरुचिराननाम्). —$^{c}$) B1.2 कामयामास (for रमयामास). —$^{d}$) Ś3 D8 [अ]देववत्; Ñ1 V1 B2.4 D1–4.9 राघवः; G2 पूर्ववत् (for देववत्). —After 16, V3 D5 (l. 2 only) ins. 797*.

17 $^{a}$) Ś V3 D8.12 तां; B1.2.4 च (for तु). B2 तथैव (for तथा तु). ॐ Cv: तथा तु रममाणस्येत्यादिना सीतासंभोगकाङ्क्षः संवत्सर इति सूच्यते। वसन्ते प्राप्ते शिशिरात्ययेन संवत्सरपूर्तिर्भवति. ॐ —$^{b}$) Ś V3 D8.12 भार्या वै (V3 D12 तां); D1.3.4 M6 तस्यर्तुः (for तस्यैवं). D1 दिवसास्; D3–5 M3.8 Ck शैशिरः (D5 M8 °रं); Cg as in text (for शिशिरः). V3 प्रभुः; D1.4 तदा; D5 M8 शुभं; Cg.k as in text (for शुभः). B1.2.4 तस्याथ शिशिरागमः; B3 तस्यर्तुः शैशवः शुचिः. —B2 D2 om. $17^{cd}$. —$^{c}$) Ś2.3 T1 G1.3 M1.6 अतिक्रामन्; V3 अभ्यक्रामन्; D4 अव्यक्रामन् (for अत्यक्रामन्). D7.10.11 Ct शुभः कालः (for नरेन्द्रस्य). B1.4 व्यतीतः पुरुषेंद्रस्य. —$^{d}$) G2 रावणस्य (sic) (for राघवस्य). D7.10.11 Ct शैशिरो भोगदः सदा. ॐ Cg: शिशिरः शुभोऽत्यक्रामदिति । पुनश्च संवत्सरोऽतीत इत्यर्थः। वानरादिसुहृत्संलापादिना क्रीडावसराभावात्तैः सह एकसंवत्सरो गतः । तद्विसर्जनानन्तरं क्रीडया पुनरेकः संवत्सरो गतः। तथा चाभिषेकानन्तरं वर्षद्वयं जातम्।; Ck: शैशिरः शुभो(ऽ)त्यक्रामदिति । पुनश्च संवत्सरोऽतीत इत्यर्थः. ॐ —For 17, Ñ V1 D6.9 T4 subst.; while V3 D5 (l. 2 only) ins. after 16; D2.7.10.11 K (ed.) subst. l. 1 only for $17^{ab}$ and D7.10.11 K (ed.) ins. l. 2 after 17; T2.3 ins. after 20:

797* तथा तयोर्विहरतोः सीताराघवयोश्चिरम् ।
दश वर्षसहस्राणि गतानि सुमहात्मनोः ।

[(l. 1) T2.3 एवं (for तथा). Ñ1 विरहतोः (meta.) (for विहरतोः). —Ñ2 illeg. for the post. half. ॐ Ct: 'सीताराघवयोश्चिरम्' इत्यनन्तरम्, 'अत्यक्रामच्छुभः कालः शैशिरो भोगदः सदा' इत्येव श्लोकः । वानराणां गमनोत्तरं पुनश्च संवत्सरोऽतीत इति कतकव्याख्यानात् । 'दश वर्षसहस्राणि गतानि सुमहात्मनोः' इति प्रक्षिप्तमिति गम्यते । 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः' इति वाल्मीकिशापाच्च । सीतात्यागोत्तरमश्वमेधप्रवृत्त्या तदन्ते 'दश वर्षसहस्राणि वाजमेधानथाकरोत्' इति वाल्मीक्युक्तेश्च । यद्वा वर्षशब्दो दिनपरः। विवाहोत्तरं तावन्ति गतानि । द्वादशादधिकमयोध्यायां चतुर्दश वने एकं पुनरयोध्यायामित्येवं किंचिदधिकसप्तविंशतिर्गतानीति बोध्यम् । पूर्वाह्णे दिवाभागेनेदम्. ॐ —(l. 2) Ñ1 एवं (for दश). —After the prior half, V3 ins.:

797(A)* दश वर्षशतानि च ।
शतवर्षेण चैतानि.

Ñ V1 सुमहात्मनः; V3 सह सीतया (for सुमहात्मनोः).]

—Thereafter, Ñ2 D6.7.10 K (ed.) cont.:

798* प्राप्तयोर्विविधान्भोगानतीतः शिशिरागमः ।;

while D5 ins. after 17:

799* प्राप्तस्तयोर्विहरतोर्वसन्तः प्रीतियुक्तयोः ।
मैथिल्याः पतिदेवाया रामस्य च महात्मनः।

18 L (ed.) om. 18. —$^{a}$) D6 पूर्वाह्न- (for पूर्वाह्णे). Ś Ñ1 V1 B2 D1–5.8.9.12 T4 देव-; Ñ2 D6.7.10.11 धर्म-; G1 पर- (for पौर-). Ś Ñ1 V1.3 B D1–4.8–12 T4 G2 M1 -कार्याणि; Ñ2 D5–7 -कर्माणि (for -कृत्यानि). —Ś D8.9.12 om. (hapl.?) $18^{b}$–$19^{a}$. —$^{b}$) Ñ2 V1 T4 धर्माणि (for धर्मेण). —$^{c}$) V1 सोयं (for शेषं). V3 -पश्चार्धम्; B1 -भागानाम्; D2 M1 -भो(M1 -भा)गार्थम्; D5 भागं तु (with hiatus) (for -भागार्धम्). ॐ Cg: शेषं दिवसभागार्धम्, अपराह्ण इत्यर्थः।; Ck: शेषमवशिष्टं दिवसभागस्यार्धं पराह्णादिकाल इत्यर्थः।; Ct: शेषं दिवसभागार्धमिति। अवशिष्टमर्धमित्यर्थः. ॐ —$^{d}$) V1.3 D2–5 G2 M5 -चरो (for -गतो). Ñ B D6 [ऽ]नयत् (for ऽभवत्).

19 Ś D8.9.12 om. $19^{a}$ (cf. v.l. 18). —$^{a}$) Ñ V1.3 B D1–4.7.10.11 T4 [अ]पि; D5.6 T3 M6 तु (for च). —$^{b}$) Ś2.3 Ñ1 V3 D1–4.6.8.9.12 G1.2 M5 पूर्व- (for पौर्व-). Ś Ñ B2 D6–8.10–12 वै; V1.3 B1.3.4 D1–5.9 T4 M5.6.8 च (for तु). —$^{c}$) Ś Ñ V1 B D T4 अकरोत्पूजां; V3 अभव ** (lacuna); M6 भवनं विश्य (for अविशेषेण). —$^{d}$) D5 T1.4 G3 M2.4.7–10 तदा; T2.3 G2 M3 तथा (for स्थिता). Ś Ñ V3 B D1–4.6–12 M6 अ(B1 चा)विशेषतः; V1 एव सर्वदा (for प्राञ्जलिः स्थिता).

20 $^{a}$) D5 उपागम्य (for °गच्छद्). Ñ V1 B1.2.4 D1–4.6.7.9–11 T4 अभ्यगच्छत्ततो रामं. —$^{b}$) M6 विचित्रा (for विचित्र-). Ñ1 B3 D1.3–5 T4 -[अं]बर- (for -बहु-). D1.3.4 T4 -भूषिता (for -भूषणा). Ñ2 B1.2.4 D6.7.10.11 विचित्राभरणांबरा; V1 D2.9 चित्रांबरविभूषिता. —$^{d}$) D1.9 उपविष्टा (D9 °तिष्ठेत्) (for उपविष्टं). Ś V3 D5.8.12 T G M1.3.5.8 शची यथा (by transp.). —After 20, T2.3 ins. 797*.

21 $^{a}$) Ñ1 D2.9 च (for तु). D2.9 T4 सीतां (for

G. 7.45.31 B. 7.42.31 L. 7.44.24

अपत्यलाभो वैदेहि ममायं समुपस्थितः ।
किमिच्छसि हि तद्ब्रूहि कः कामः क्रियतां तव ॥ २२
प्रहसन्ती तु वैदेही रामं वाक्यमथाब्रवीत् ।
तपोवनानि पुण्यानि द्रष्टुमिच्छामि राघव ॥ २३
गङ्गातीरे निविष्टानि ऋषीणां पुण्यकर्मणाम् ।
फलमूलाशिनां वीर पादमूलेषु वर्तितुम् ॥ २४
एष मे परमः कामो यन्मूलफलभोजिषु ।
अप्येकरात्रं काकुत्स्थ वसेयं पुण्यशालिषु ॥ २५
तथेति च प्रतिज्ञातं रामेणाक्लिष्टकर्मणा ।
विस्रब्धा भव वैदेहि श्वो गमिष्यस्यसंशयम् ॥ २६
एवमुक्त्वा तु काकुत्स्थो मैथिलीं जनकात्मजाम् ।
मध्यकक्षान्तरं रामो निर्जगाम सुहृद्वृतः ॥ २७

इति श्रीरामायणे उत्तरकाण्डे एकचत्वारिंशः सर्गः ॥ ४१ ॥

---

पत्नीं ). —b) Ñ2 समप्रभां; D5 समावृतां ( for समन्वितम् ). Ś Ñ1 V1 D1–4.8.9.12 शोभमाना( V1 अंतर्वत्नी )मनिंदितां; B4 शोभया परया युतां. —After 21, Ñ B D6.7.10.11 ins.:

800* अब्रवीच्च वरारोहां सीतां सुरसुतोपमाम् ।

22 Ś om. (hapl.) 22–23b. —a) G2 अपूर्व- ( for अपत्य- ). Ñ V1 B D1–4.6–9.12 T4 M4 -कालो; Cg.k.t as in text ( for -लाभो ). —b) Ñ V1 B D1–4.6–9.12 तव; D10.11 Cg.k.t त्वयि; T4 तदा; M6 मत्तो; M8 माम् ( for मम ). M1.10 त्वय्युपस्थितः; Cg.k.t as in text ( for समुपस्थितः ). ❀ Cg : ममायमपत्यलाभस्त्वयि समुपस्थितः, तव गर्भलक्षणं दृश्यत इत्यर्थः । ; so also Ck.t. ❀ —c) T3 M2.9 च ( for हि ). Ñ V3 B1.2.4 D6–8.10–12 वरारोहे; V1 D1–4.9 T4 M6 च( D2.9 त्वं; T4 हि ) कल्याणि; D5 T1.2 G2 M3.8 च( G2 हि ) कः कामः ; G1 च कान्कामान् ; G3 च किं कामा; M5 त्वं वैदेहि; M7 हि तं ब्रूहि ( for हि तद्ब्रूहि ). B3 तत्किमिच्छसि कल्याणि. —d) Ñ1 B1.2 कामः कः ( by transp. ); Ñ2 V3 B4 D6.7.10.11 M2 कामः किं; D5 G2 M8 कर्तव्यं( D5 G2 °व्यः ) ( for कः कामः ). T4 प्रीतये; M8 प्रीयते ( for क्रियतां ). D8.12 इति ( for तव ). T1.2 G1.3 M3 ब्रूहि सर्वं वरानने. ❀ Ct : किंकामः किंविषयो मनोरथः. ❀

23 Ś om. $23^{ab}$ (cf. v.l. 22). —a) Ñ2 B1.2.4 D6.7.10.11 Ct स्मितं कृ( D6 श्रु )त्वा ( for प्रहसन्ती ). D8.12 च; G2 [ इ ]व; G3 [ इ ]ति ( for तु ). —b) D5 T4 G2 M8 राघवं वाक्यमब्रवीत्. ❀ Ct : स्मितं कृत्वा । स्वावतारकृत्यं पूर्णमिति ब्राह्मणशापस्य सत्यत्वकरणौचित्यं च हासेन सूचितम्. ❀ —For $23^{ab}$, Ñ1 V1 D1–4.9 subst. :

801* सीतापि सस्मितं वाक्यमुवाच मधुराक्षरम् ।
[ Ñ1 संमितं ( for सस्मितं ).]

—c) D5 तेषां ( for तपो- ). Ś2.3 Ñ1 V1.3 B3 D1–4.8.9.12 M7 रम्याणि ( for पुण्यानि ). B4 आश्रमाणि पवित्राणि.

24 V3 om. 24. —a) V1 T3 G2 M1.2.5.6.8.9 -तीर-; M4.7.10 -कूल- ( for -तीरे ). Ś Ñ1 V1 D1–5.8.9.12 T3.4 M7.10 निविष्टानाम् ( for निविष्टानि ). Ñ2 B1.2 D6.7.10.11 गंगातीरोपविष्टानाम् ( Ñ2 B1 D6 °नि ). —D11 reads $11^{b}$ in marg. —b) B3 D2.9 M1 मुनीनां ( for ऋषीणां ). Ś Ñ V1 B1.2.4 D1–4.6–12 T4 L (ed.) उग्र( D8 अग्नि; L [ed.] उग्य ) तेजसां; M1 भावितात्मनां ( for पुण्यकर्मणाम् ). —c) Ñ B1.2.4 D7.10.11 देव; M5 राम ( for वीर ). —d) Ñ1 समीपे परि-; B3 फलमूलैश्च; T3 पादमूले तु ( for पादमूलेषु ). B4 पादमूलमुपासितुं. —For $24^{cd}$, Ś V1 D1–4.8.9.12 T4 subst.:

802* वन्यमाहारमिच्छामि समीपे परिवर्तितुम् ।
[ V1 D1–4.9 T4 वन्याहारा( D2 °रे; D9 °नाम )हम् ( for वन्यमाहारम् ).]

25 ab) B1.2.4 पर एष हि कामो मे; G (ed.) पर एव हि मे कामो ( for a ). Ñ1 यत्पूर्वं ( for यन्मूल- ). B1 om. -फल-. Ñ B2–4 D6.7.10.11 -भोजिनां; V1 B1 D1.2 T4 -भोजनं ( D2 °नः ); D3.4.9 -भोजना ( for -भोजिषु ). Ś D8.12 एष मे नृप कामोद्य फलमूली( Ś1 D8 °ले )यभोजने. —c) V3 अप्येप; D1.4 अद्यैक-; D5 अथैक-; G2 अनेक-; M8 उष्येत ( for अप्येक- ). Ñ2 B4 D6.7.10.11 Ct -रात्रिं ( for -रात्रं ). ❀ Ct: अप्येकरात्रिमित्यनेन चिरकालवासमनोरथो ध्वनितः. ❀ —Ñ2 om. (hapl.?) $25^{d}$–$27^{a}$. —d) V3 D5 T1.2 G2.3 M1.3.6.8 -कीर्तिषु; T3 M2.4.5.7.9.10 -शीलिषु ( for -शालिषु ). Ś Ñ1 V1 B D1–4.6–12 T4 नि( B1 सं )वसेयं( B3 वसेयं वै ) तपोवने ( D9 °नं ). —After 25, B4 ins. :

803* दृष्टं पूर्वं त्वया सार्धं यद्यत्प्रियतमं विभो ।
तत्पुनर्द्रष्टुमिच्छामि मुनिपत्नीसमागमम् ।

26 Ñ2 om. 26 (cf. v.l. 25). —a) Ś D8 परिज्ञातं; V3 B4 प्रतिज्ञाय ( for प्रतिज्ञातं ). —b) D9 -कारिणा ( for -कर्मणा ). B3 राघवेण महात्मना. —c) Ś Ñ1 V1.3 B D1–5.9–11 विश्रब्धा; Cg.k.t as in text ( for विस्रब्धा ). —d) T2 G2 M3.8–10 [ अ ]संशयः ( for [ अ ]संशयम् ). Ś V1 B2 D1–4.8.9.12 T4 श्वो( D8 त्वं ) यास्यसि( B2 °स्यामि ) तपोवनं; Ñ1 B1.3 श्वो याता( Ñ1 गच्छ; B3 गंता )सि तपोवनं; B4 गमिष्यसि तपोवनं. —After 26, B2 ins. :

804* इत्येवमुक्त्वा रघुवंशवर्धनः
प्रतापवान्स्वाखिलराजनन्दिनीम् ।
जगाम कक्षां स्वगृहस्य बुद्धिमा-
न्कथाः प्रकर्तुं विविधास्तथा प्रभुः ।

27 Ñ2 om. $27^{a}$ (cf. v.l. 25). —a) B4 स ( for तु ). V3 तु वैदेहीं; D4 काकुत्स्थो हि (unmetric) ( for तु

# ४२

तत्रोपविष्टं राजानमुपासन्ते विचक्षणाः ।
कथानां बहुरूपाणां हास्यकाराः समन्ततः ॥ १
विजयो मधुमत्तश्च काश्यपः पिङ्गलः कुशः ।
सुराजिः कालियो भद्रो दन्तवक्रः समागधः ॥ २
एते कथा बहुविधाः परिहाससमन्विताः ।
कथयन्ति स्म संहृष्टा राघवस्य महात्मनः ॥ ३
ततः कथायां कस्यांचिद्राघवः समभाषत ।
काः कथा नगरे भद्र वर्तन्ते विषयेषु च ॥ ४ G. 7. 46. 4 B. 7. 43. 4 L. 7. 45. 4

काकुत्स्थो ). —b) Ñ V1 D1.3.4 वैदेहीं; V3 काकुत्स्थो; D2.9 जानकीं ( for मैथिलीं ). —c) Ñ2 अन्यत ; B1–3 अन्य-( B2 °न्यं ); D1 मेध्यां; D4 मध्यां; D9 संध्यं ( for मध्य- ). D1.4 कक्षांतरो; D8 S -कक्ष्यांतरं ( for -कक्षान्तरं ). Ñ2 B तस्मान् ( for रामो ). —d) Ñ B M6 स्व( Ñ1 B2 स; Ñ2 B1 सु; M6 [ अ ]थ )वेश्मनः ; D6 सुहृद्वृतः ( for सुहृद्वृतः ). —After 27, Ś V1 B2 D2.3.8.9.12 ins.; while D1.4 T3.4 ins. before 7.42.1 :

805* मन्त्रिभिर्मन्त्रतत्त्वज्ञैर्बलमुख्यैश्च संवृतः ।

[ V1 D2.9 -तत्त्वज्ञो; B3 -कुशलैर् ( for -तत्त्वज्ञैर् ). D2 स ( for च ). V1 सर्वशः ( for संवृतः ). ];

Colophon: Ñ1 V1 D2.3.9 om. —*Kāṇḍa name*: M7 om. —*Sarga name*: Ś V3 D1.4.8.12 सीताप्रसोदः; Ñ2 B सीतादोहदः( B3 °दं ); D5 सीतारामविलासः. —*Sarga no.* ( figures, words or both ): Ś V3 D12 om. Ñ2 B1.3 46; B2 32; B4 T3 47; D1.4 44; D5 45; D6–8.10.11 T1.2 G M1–5.7–10 42; T4 49; M6 40. —After colophon, T4 concludes with श्रीरामार्पणमस्तु; G M1.5.8 conclude with श्रीरामाय नमः ; M6 with ॐ; M10 with श्रीरामचन्द्राय नमः.

## 42

☞ V2 missing for Sarga 42 ( cf. v.l. 7.12.2 ). Ñ1 V1 D2.3.9 cont. the previous Sarga.
—Before 1, D1.4 T3.4 ins. 805*.

1 a) M5 तथा; Cg.k.t as in text ( for तत्र ). Ś1 D8 ततोपविष्टं ( archaic ). Ñ1 V1 D1–4.9 T3.4 रामं तु ( for राजानम् ). —b) M3.5 उपासंत. M6 पुरे जनाः ( for विचक्षणाः ). Ś V3 D8.12 उपासांचक्रिरे तदा; Ñ1 V1 D1–4.9 T3.4 सुहृदः पर्यु( V1 समु )पासते ( T3.4 °सिरे ). —For 1ab, Ñ2 B subst. ; while Ñ1 ins. before 1 :

806* उपविष्टस्ततो रामः सुहृद्भिः परिवारितः

—c) Ś V3 D8.12 -जल्पानां ( for -रूपाणां ). M2.4.7–10 कथाभिर्बहुरूपाभिर् . —d) Ś V3 D8.12 M6 कथा( M6 हास्य )काराः सुसं( V3 समा )हिताः ; Ñ1 V1 D1–4.9 शृण्वानं ( D1–4 °नः ) सारचित्र( V1 °त्रि )तां; Ñ2 B अशृणोत्सार ( B2.4 °णोत्स च )विस्तरं. ❀ Cg ( within brackets ): उपासन्ते उपासते। धात्वन्तरस्येदं रूपं वा।; Ck : कथानां बहुरूपाणामिति । प्रकथनद्वारेणेति शेषः । हास्यकारा इति । कर्मण्यण् ।; Ct : बहुरूपाणां कथानां प्रकथनद्वारेण हास्यकारा उपासन्ते. ❀

2 a) T3 विलयो ( for विजयो ). Ñ B [ ऽ ]थ सुमंत्रश्च; V1 D1–4.9 T3.4 मधुमांश्चैव; V3 मतियुक्तश्च G1 M2 मधुमंतश्च ( for मधुमत्तश्च ). —b) Ś1 Ñ1 V1.3 B1.2.4 D1.3–5.6 T3 कश्यपः; D2.9 विशिष्टः ( for काश्यपः ). D5.7.10.11 मंगलः ; M4 विजयः ( for पिङ्गलः ). G2 transp. काश्यपः and पिङ्गलः. Ś Ñ2 B1.2.4 D8 तथा; Ñ1 D5.7.10.11 कुलः; V3 ततः ; B3 M6 शुभः ; D1.4.12 सुतः ; D2.9 कुहुः ; D3 क्षमः; D6 T1.2 M1.3 कुटः; T3.4 कुरुः ( for कुशः ). —c) D5–7 पुराजिः( D6 °जीः ); T1.2 M3 सुराजः ( for सुराजिः ). B1 कलियो; B2.4 M6 कालि( M6 °ल )को; B3 कपिलो ( for कालियो ). Ś V3 D8.12 L ( ed. ) पशुराजी( L [ ed. ]°जिः ) कलिर्भद्रो; Ñ1 V1 D1–4.9 T3.4 सुराजी( D1 °जि; T3.4 °ज )-कश्च भद्रश्च. —d) Ñ1 V1 D1–4.9 T3.4 वज्रदंतो. Ś D8.12 दंतवज्रः स-; Ñ2 V3 B1 D5–7.10.11 T2 G2.3 दंतवक्त्रः सु- ( D5 °क्तुस्त्र ); B2 दत्तचक्रः स-; B3 दंतो रत्नः सु-; B4 दंतो वक्त्रः स- ( for दन्तवक्त्रः स- ). Ñ1 D1.3.4 [ ऽ ]थ मागधः ; V1 T3.4 [ ऽ ]थ माधवः; D2.9 च मागधः; T1 G1 M( except M3 ) सुमागधः.

3 a) Ñ B उपविष्टा; D8 एते कथां ( for एते कथा ). D5 बहुविदः ; D6 बहुविधां. ❀ Cg ( within brackets ) : कथाः अतीतवार्ताः ।; Ct : कथा वार्ताः. ❀ —b) D6 -समन्वितां. —c) Ś D8.12 स्म ते हृष्टा; Ñ1 कथां तत्र; Ñ2 B1.2.4 स्म रामस्य; V1 D1–4.9 T3.4 नरेंद्रस्य; B3 स्म हृष्टास्ते; M1.4.7.10 सुसंहृष्टा ( for स्म संहृष्टा ). —d) D11 reads स्य महात्मनः in marg. Ñ2 B1.2.4 कथास्तत्र( Ñ2 °स्य ) ( for राघवस्य ). Ñ1 V1 D1–4.9 T3.4 समीपतः ( for महात्मनः ).

4 D11 om. 4–7. —b) Ñ B1.2.4 तानभाषत; D1.4 प्रत्य° ( for समभाषत ). —B4 om. 4cd. —c) Ś Ñ1 V3 D5.8.12 T1.2 G1.3 M1.3 का कथा. Ś Ñ1 D8.12 वर्तते भद्र; Ñ2 B1–3 इह वर्तते ( for नगरे भद्र ). V1 D1–4.9 T3.4 वर्तते का कथा भद्र( V1 तत्र ). —d) Ś V3 D5.8.12 T1.2 G3 M1.3 वर्तते ( for वर्तन्ते ). T2 M5 विजयेषु; M1 नगरेषु; Cg.k.t as in text ( for विषयेषु ). Ñ V1 B1–3 D1–4.9 T3.4 पुरे ज( D2.9 जा )नपदे तथा; G1 विषयेषु च वर्तते; M6 वर्तते पुरवासिनां. ❀ For Cv cf. 5. Cg.t : विषयेषु देशेषु( Ct °ष्विति सामान्यतः प्रश्नः ) ।; Ck : विषयेषु राज्ञां विजयविषयेषु का कथा प्रवर्तते । सामान्यात्. ❀

G. 7.46.5
B. 7.43.5
L. 7.45.5

मामाश्रितानि कान्याहुः पौरजानपदा जनाः ।
किं च सीतां समाश्रित्य भरतं किं नु लक्ष्मणम् ॥ ५
किं नु शत्रुघ्नमाश्रित्य कैकेयीं मातरं च मे ।
वक्तव्यतां च राजानो नवे राज्ये व्रजन्ति हि ॥ ६
एवमुक्ते तु रामेण भद्रः प्राञ्जलिरब्रवीत् ।
स्थिताः कथाः शुभा राजन्वर्तन्ते पुरवासिनाम् ॥ ७
अयं तु विजयः सौम्य दशग्रीववधाश्रितः ।
भूयिष्ठं स्वपुरे पौरैः कथ्यते पुरुषर्षभ ॥ ८
एवमुक्तस्तु भद्रेण राघवो वाक्यमब्रवीत् ।
कथयस्व यथातथ्यं सर्वं निरवशेषतः ॥ ९
शुभाशुभानि वाक्यानि यान्याहुः पुरवासिनः ।
श्रुत्वेदानीं शुभं कुर्यां न कुर्यामशुभानि च ॥ १०

5 D11 om. 5 (cf. v.l. 4). —$^{a}$) Ś D5 G1.3 M6 मम; D8 सम-; D12 राम- (for माम्). V3 तानि (for कानि). Ñ1 V1 D1–4.9 T3.4 मय्याश्रिता(T3.4 °तां) वा किं चाहुः ; Ñ2 मदाश्रयं किं किमाह; B1 मदाश्रया कथायां तु; B2.4 G (ed.) मदाश्रया वा काश्चाहुः (B4 का आह; G [ed.] काः प्राह); B3 मदुपाश्रिता का आहुः. ❀ Cv : वर्तन्ते विषयेषु च। मामाश्रिता नीति च पाठः. ❀ —$^{b}$) Ñ1 पौरा (for पौर-). Ñ2 B1.4 -जानपदो; B3 -जानपदांस्. Ñ2 B1.4 जनः ; V1 (m. also as in text) B3 तथा; G2 नराः (for जनाः). —$^{c}$) D8 कां (for किं). B1.4 वा; G1 M10 नु (for च). B2 किं सीतां वा; D2.9 किंचित्सीतां; G2 किंचित्कथां (for किं च सीतां). —$^{d}$) Ś Ñ V3 B D5–8.10.12 M6 च (for नु). V1 D1–4.9 T3.4 भ्रातॄनाश्रित्य (D1 om. [hapl.])किं च मे(V1 किंचन; D1.3.4 वा सखे).

6 D11 om. 6 (cf. v.l. 4). V1 om. (hapl.?) $6^{ab}$. —$^{a}$) Ś V3 D8.12 M6 च (for नु). D5–7.10 उद्दिश्य (for आश्रित्य). Ñ B D1–4.9 T3.4 कैकेयीं(Ñ B शत्रुघ्नं) च(D2 किं) सुमित्रां च. —$^{b}$) D1–4.9 T3.4 कौशल्यां (for कैकेयीं). D1 भरतमेव च; (hypm.); D3.4 भरतं च मे; D5–7.10 किं नु(D5 तु) मातरं (for मातरं च मे). —$^{c}$) Ś V3 D8.12 हि (for च). V1 D1–4.9 T3.4 नृपतयो (for च राजानो). —$^{d}$) D1.4.6.7.10 T2–4 Ck.t वने(Ck °रे); M8 न वै; Cg as in text (for नवे). T3 राज्ञो (sic) (for राज्ये). D2.9 वै राज्येन; D5 न वै राज्यं (for नवे राज्ये). V1 D1–4.9 T3.4 प्रयांति; Cg.t as in text (for व्रजन्ति). Ś1 D6.7.10 Ct च; V1.3 ह; Cg as in text (for हि). ❀ Cg : किं न्विति। वक्तव्यतां च राजानो नवे राज्ये व्रजन्ति हीति च पाठः । नवे राज्ये सति राजानो वक्तव्यतां सम्यगसम्यग्वा कीर्तनीयतां व्रजन्ति हि ।; Ck: वरे राज्ये वक्तव्यतां रक्षाप्रसङ्गेन कीर्तनीयतामित्यर्थः।; Ct: वने तापसाश्रमे राज्ये च धर्मादिविचारहीना राजानो वक्तव्यतां सर्वजनकृतदुर्भाषणविषयतां व्रजन्ति. ❀ —For $6^{cd}$, Ñ B subst.:

807* कथयन्ति गुणान्यांस्तु दोषान्वा ब्रूत तन्मम।

[Ñ1 योन्ये (for यांस्तु). B1.3 ब्रूहि (for ब्रूत). B1–3 तान् (for तन्).]

—Then B3 cont.:

808* न च शङ्का त्वया कार्या सर्वं च परिकथ्यताम्।

7 D11 om. 7 (cf. v.l. 4). Ś1 D8 om. (hapl.) 7-8. —$^{a}$) Ś2 उक्त्वा (sic); B3 D1–4.9.12 T G3 M3.5 उक्तस् (for उक्ते). —$^{b}$) M1 वचनम् (for प्राञ्जलिर्). —After $7^{ab}$, D1.4 ins. a long passage relegated to App. I (No. 6). —$^{c}$) D5.10 M6 शुभाः कथा (by transp.) (for कथाः शुभा). Ś2 Ñ V1.3 B3.4 D1.3.4 T3.4 शुभाशुभाः (B3 °भ )कथा राजन् ; Ś3 B1.2 D2.9.12 शुभाः कथा राजन् ; G2 स्थिताः शुभ्राः कथा राम. —$^{d}$) T1 G3 M8 विजयं; G1.2 M1.5 विषये (for वर्तन्ते). V1 D1–4.9 T3.4 क्रियंते पुरवासिभिः.

8 Ś1 D8 om. 8 (cf. v.l. 7). M5 om. $8^{ab}$. —$^{a}$) K (ed.) अमुं (for अयं). L (ed.) च (for तु). D10.11 Ck.t विजयं (for विजयः). ❀ Ck.t : विजयमिति। उद्दिश्येति शेषः. ❀ —$^{b}$) Ñ B1.2.4 -वधाश्रयः; V1 -वधे तथा; D1 -वधस्तदा; D2.9 -वधस्तथा; D3.4 T3.4 वधः सदा; D5-7 M8 -वधार्जितः; D10.11 -वधार्जितं; G1 -समाश्रितः (for -वधाश्रितः). —$^{c}$) Ñ2 B1.2 G2 M5.6 भूयिष्ठः. Ñ1 V1 D1-4.9 T3.4 कथ्यते; D5 स्वपुरं; T2 स्वपुरैः ; L (ed.) तु पुरे (for स्वपुरे). —$^{d}$) Ñ2 V3 B3.4 D5.11.12 T1 G2 M2.4.5.8.10 Ct कथ्यंते. M1 भरताग्रज (for पुरुषर्षभ). Ñ1 V1 D1–4.9 T3.4 पुरे ज(D2.9 पौरजा )नपदे( D9 दैस् ) तथा. ❀ Ct : कथ्यन्ते। वार्ता इति शेषः. ❀

9 $^{a}$) G1 M1.2.7.8 उक्ते (for उक्तस्). —$^{b}$) D1.3.4 रामः प्राह वचस्तदा; T3.4 रामो वाक्यमथाब्रवीत्; M1 रामो वचनमब्रवीत्. —B4 om. (hapl.) $9^{c}$–10. —$^{c}$) Ñ V1 B1–3 कथय त्वं. V3 D2–4.6.7.9–11 T1.2 M1.3 यथातत्त्वं; D1 यथा वृत्तं; G2 कथास्तत्त्वं (before corr. °थ्यं); M8 कथाः कथ्यं (for यथातथ्यं). —$^{d}$) G1 श्रुतं (for सर्वं). Ś1 D8 सर्वमे(D8 °मि )व विशेषतः ; Ñ V1 B1.3 D1–4.9 T3.4 किमाहुः पुरवासिनः; D5 सर्वं निरवरोधतः.

10 B4 om. 10 (cf. v.l. 9). —$^{a}$) Ś D8.12 शुभानि वाक्यानि मयि. —$^{b}$) Ś V3 D5.8.10–12 M6.7 कान्याहुः ; Ñ1 V1 D1–4.9 T3.4 यानि मे (for यान्याहुः). Ñ V1 B1.3 D1–4.9 T3.4 गुणदोषतः. —$^{c}$) M6 श्रुत्वैतानि. D6 M7 शुभां (for शुभं). D2.9 वाक्यं (for कुर्यां). —$^{d}$) D6 अकुर्याम्. Ñ2 B1–3 अशुभं च(Ñ2 न [sic]; B1 हि) यद (for अशुभानि च). Ñ1 V1 D1–4.9 T3.4 वर्जयेयम( D4 च य )थाशुभं.

कथयस्व च विस्रब्धो निर्भयो विगतज्वरः ।
कथयन्ते यथा पौरा जना जनपदेषु च ॥ ११
राघवेणैवमुक्तस्तु भद्रः सुरुचिरं वचः ।
प्रत्युवाच महाबाहुं प्राञ्जलिः सुसमाहितः ॥ १२
शृणु राजन्यथा पौराः कथयन्ति शुभाशुभम् ।
चत्वरापणरथ्यासु वनेषूपवनेषु च ॥ १३
दुष्करं कृतवान्रामः समुद्रे सेतुबन्धनम् ।
अकृतं पूर्वकैः कैश्चिद्देवैरपि सदानवैः ॥ १४
रावणश्च दुराधर्षो हतः सबलवाहनः ।
वानराश्च वशं नीता ऋक्षाश्च सह राक्षसैः ॥ १५
हत्वा च रावणं युद्धे सीतामाहृत्य राघवः ।
अमर्षं पृष्ठतः कृत्वा स्ववेश्म पुनरानयत् ॥ १६
कीदृशं हृदये तस्य सीतासंभोगजं सुखम् ।
अङ्कमारोप्य हि पुरा रावणेन बलाद्धृताम् ॥ १७
लङ्कामपि पुनर्नीतामशोकवनिकां गताम् ।
रक्षसां वशमापन्नां कथं रामो न कुत्सते ॥ १८
अस्माकमपि दारेषु सहनीयं भविष्यति ।
यथा हि कुरुते राजा प्रजा तमनुवर्तते ॥ १९ G. 7. 46. 19 B. 7. 43. 19 L. 7. 45. 19

11 $^{a}$) Ṅ $B_{1.2.4}$ कथय त्वं; $D_4$ कथयंति. Ṅ $B_{1.2.4}$ $D_{2.9}$ सु-; $D_4$ स्व-; $M_1$ स- (for च). $V_1$ $D_{4.9}$ $T_{3.4}$ विस्रब्धं; $B_{1.2}$ $D_{6.7}$ -विश्रब्धो; $D_{1-3}$ विश्रब्धं (for विस्रब्धो). —$^{b}$) $D_{10.11}$ Ct निर्भयं. —$^{c}$) Ś Ñ $V_{1.3}$ B $D_{1.3-12}$ $T_{3.4}$ $M_{3.6}$ कथयंति. $Ñ_2$ पुरे; $B_2$ कथाः (for यथा). —$^{d}$) $Ñ_1$ B $M_6$ पुरे; $Ñ_2$ यथा; $D_{5-7}$ नाना-; $D_{10.11}$ Ct पापा (for जना). $Ñ_1$ $B_4$ वा; $D_{5-7}$ वै (for च). $V_1$ $D_{1-4.9}$ $T_{3.4}$ तथा($D_9$ $T_{3.4}$ °दा) जा($T_3$ ज)नपदा जनाः($D_{3.4}$ °दो जनः). ❀ Ct : पापाः पापानि. ❀

12 $^{a}$) $V_1$ $D_{1-4.9}$ $T_{3.4}$ काकुत्स्थेन (for राघवेण).—$^{b}$) $D_2$ तु (for सु-). Ś $V_3$ $D_{8.12}$ प्रह्वः कृतांजलिः; $D_{1.3.4}$ शुभतरं वचः (for सुरुचिरं वचः). $D_9$ सुभद्रः सुचिरं वचः. —$^{cd}$) $B_3$ -घोरं; $G_1$ -बाहुः (for -बाहुं). Ś $V_3$ $D_{8.12}$ काकुत्स्थं (for प्राञ्जलिः). Ñ $B_{1.2.4}$ वाक्यकोविदः; $G_1$ $M_{1.2.4.5.7.9.10}$ पृथिवीपतिं (for सुसमाहितः). $V_1$ $D_{1-4.9}$ $T_{3.4}$ उवाच प्रांजलिर्भूत्वा राघवं वाक्यकोविदः($V_1$ $D_3$ $T_{3.4}$ °दं).

13 $^{a}$) $B_3$ राजन्यथा कथाश्चक्रुः. —$^{b}$) $B_3$ शृणु पौरा (for कथयन्ति). Ś $D_{8.12}$ शुभं($D_8$ °भे) त्वयि; $V_{1.3}$ $B_3$ $D_5$ शुभाशुभाः. —$^{c}$) $B_{3.4}$ चत्वरांगण-; $M_2$ चत्व * * *-; G (ed.) चत्वरायन- (for चत्वरापण-). $V_1$ $T_{1.2}$ $G_3$ $M_3$ -वीथीषु; $G_2$ -मुख्यासु (for -रथ्यासु). —$^{d}$) $B_3$ प्रपासु (for वनेषु). $D_9$ om. -पवनेषु च.

14 $^{a}$) $V_3$ $B_3$ $D_{1.3.4}$ दुष्कृतं (for दुष्करं). —$^{b}$) Ś $D_{8.12}$ सागरे सेतुबंधने. —Ś $V_1$ $D_{8.12}$ $T_{3.4}$ om. 14$^{cd}$. —$^{c}$) $V_3$ $D_{1-4.9}$ $T_1$ $G_2$ $M_{10}$ न कृतं; $D_{5-7.10.11}$ Ct अश्रुतं (for अकृतं). $V_3$ $D_{1.4}$ पौर्वकैः; $D_3$ पूर्वजैः (for पूर्वकैः). $G_2$ कश्चिद् (for कैश्चिद्). $Ñ_1$ अकृतपूर्वं यैः कैश्चित्. —$^{d}$) $G_1$ सवासवैः (for सदानवैः). Ñ $V_3$ B सेंद्रै($V_3$ $B_4$ सर्वै)रपि सुरासुरैः; $D_{1.3.4}$ ईदृशं चाद्भुतं महत्; $D_{2.9}$ समुद्रे सेतुबंधनं; $M_6$ सुरैरपि सुदुष्करं.

15 $^{a}$) Ś $D_{1.3.4.8.12}$ स; $Ñ_1$ सु-; $V_3$ $M_1$ तु (for च). —$^{c}$) $D_{1.4}$ वशे (for वशं). —$^{d}$) $B_{1.2}$ राक्षसैः सह (by transp.); $M_1$ सह वानरैः. Ś $V_3$ $B_3$ $D_{8.12}$ $M_6$ हत्वा ($V_3$ $B_3$ $M_6$ ऋक्ष)रक्षांसि चैव हि; Ñ तथार्क्षा राक्षसैः सह.

16 $^{a}$) $D_5$ हत्वैव; $T_{1.2}$ $G_3$ स हत्वा; $G_1$ हत्वा तं (for हत्वा च). $D_{5-7.10.11}$ $M_1$ संख्ये (for युद्धे). $T_{3.4}$ किं नु हत्वा दशग्रीवं. —$^{b}$) $B_2$ आदाय; L (ed.) आहृत्य (for आहृत्य). —$^{d}$) $V_3$ स्वं; $D_8$ $M_3$ सु- (for स्व-). Ś $V_3$ $D_{8.12}$ पुनरागमत् ($Ś_{2.3}$ °गतं); $Ñ_1$ $V_1$ $D_{1-4.9}$ प्रत्यपादयत्; $M_{4.6.7.10}$ पुनराविशत्($M_6$ °हरत्); $M_5$ कथमानयत्; L (ed.) पुनराव्रजत् (for पुनरानयत्). $Ñ_2$ B स्वं प्रावेशयदालयं.

17 L (ed.) transp. 17$^{ab}$ and 17$^{cd}$. —$^{a}$) $Ñ_2$ $B_3$ $D_{1-4.9}$ $M_6$ हृदयं. —$^{b}$) $Ñ_1$ सीतायाः संगजं; $Ñ_2$ B सीतासंगमजं (for सीतासंभोगजं). $D_2$ $M_5$ शुभं (for सुखम्). —$^{c}$) $G_2$ अंगमारोप्य. Ś $V_3$ $D_{8.12}$ हि तदा; Ñ B या पूर्वं; $V_1$ या वश्या; $D_{1.2.4.9}$ $T_4$ यारण्याद्($D_2$ °ण्ये); $D_{5-7.10.11}$ तु पुरा; $T_3$ या वीर्याद् (for हि पुरा). $D_3$ अंकमारोपितारण्ये. —$^{d}$) Ś $V_3$ $D_{8.12}$ बलाद्धृता; Ñ $V_1$ B $D_{1-4.9}$ $T_{3.4}$ हृता बलात्; $D_6$ बलीयसा; $M_{1.6.8}$ वनाद्धृतां (for बलाद्धृताम्).

18 $^{a}$) Ñ $V_1$ B $D_{1-4.9}$ $T_{3.4}$ चापि (for अपि). $Ñ_1$ $D_{2.5-7.10.11}$ $M_{10}$ पुरा; $Ñ_2$ $V_1$ B $D_{1.3.4.9}$ T G $M_{3.8}$ पुरीं; $M_1$ पुरं (for पुनर्). Ś $V_3$ $D_{8.12}$ $M_6$(with hiatus) लंकायामवसच्चा($M_6$ °शां चा)पि. —$^{b}$) Ś $D_{1-4.8.9.12}$ $T_{3.4}$ ह्यशोक- (for अशोक-). Ś $D_{8.12}$ गता; $Ñ_1$ $V_1$ $D_{3.4}$ $T_{3.4}$ तथा; $Ñ_2$ $B_2$ $D_{2.9}$ शुभां (for गताम्). $V_3$ शोकं च विवशा गता. —$^{c}$) $D_{1.3.4}$ तां रक्षो- (for रक्षसां). Ś $V_3$ $D_{8.12}$ वशमापन्ना; $Ñ_1$ च समापन्नां; $M_1$ वशमानीतां (for वशमापन्नां). —$^{d}$) $Ñ_1$ $D_{1-4.9}$ $T_{3.4}$ दृष्ट्वा; $V_1$ दिष्ट्या (for कथं). $Ñ_1$ $V_1$ $D_{1-5.9}$ $T_{3.4}$ कुप्यति($V_1$ $D_{2.9}$ °ते); $D_{6.7.10.11}$ $T_{1.2}$ $G_{1.3}$ $M_{1.3.5.9}$ Ct कुत्स्यति; $G_2$ $M_{2.4.7.8.10}$ कुत्सति (for कुत्सते). —For 18$^{cd}$, $Ñ_2$ B subst.; while $Ñ_1$ ins. after 18 :

809* कथं रक्षोवशं प्राप्तां रामः कुत्सयते न ताम् ।

19 $D_1$ om. 19$^{ab}$. —$^{a}$) Ś $V_3$ $D_{2-4.8.9.12}$ $T_{3.4}$

G. 7. 46. 20
B. 7. 43. 20
L. 7. 45. 20

एवं बहुविधा वाचो वदन्ति पुरवासिनः ।
नगरेषु च सर्वेषु राजञ्जनपदेषु च ॥ २०
तस्यैतद्भाषितं श्रुत्वा राघवः परमार्तवत् ।
उवाच सर्वान्सुहृदः कथमेतन्निवेद्यताम् ॥ २१
सर्वे तु शिरसा भूमावभिवाद्य प्रणम्य च ।
प्रत्यूचू राघवं दीनमेवमेतन्न संशयः ॥ २२
श्रुत्वा तु वाक्यं काकुत्स्थः सर्वेषां समुदीरितम् ।
विसर्जयामास तदा सर्वांस्ताञ्शत्रुतापनः ॥ २३

इति श्रीरामायणे उत्तरकाण्डे द्विचत्वारिंशः सर्गः ॥ ४२ ॥

---

अस्माभिर्; Cg as in text (for अस्माकम्). Ñ V1 B D2-4.9 T3.4 दाराणां (for दारेषु). —$^b$) T4 महनीयं; M1.6 हसनीयं; M7 वचनीयं; Cg.k.t as in text (for सहनीयं). ❀ Cg.k : सहनीयमिति। एवं कश्मलमित्यर्थः (Ck °ति शेषः)।; so also Ct. ❀ —$^{cd}$) Ś1.2 D10.11 T1.2 G2.3 M1.3.8.9 प्रजास्तम्; V3 तदर्थम् (for प्रजा तम्). Ñ1 V1 D1-4.9 T3.4 यादृग्भवति राजा तु तादृशी (T3.4 °शा) भवति (V1 T3.4 नियतं) प्रजा (T3.4 °जाः); Ñ2 B यच्छीलो हि भवेद्राजा तच्छीला हि (B1 च; B4 तत्) प्रजा भवेत् (B2 ततः प्रजाः); M4.7.10 यद्वृत्ताः संति राजानस्तद्वृत्ताः संति हि प्रजाः. ❀ Ct : प्रजास्तमनुवर्तंतेऽनुवर्तन्ते. ❀

20 $^a$) V1 D2.3.9 T3 एता (for एवं). D3 तद्विविधा (for बहुविधा). D1.4 एतां बहुविधां वा (D4 °**) चं. —For 20$^{cd}$, Ś V3 D8.12 M6 subst.:

810* वैदेह्याश्च पुरे राजन्नानाजनपदेषु हि ।

[M6 वैदेह्यानयने. V3 M6 जना and च (for नाना- and हि respy.).];

while Ñ V1 B D1-4.9 T3.4 subst. for 20$^{cd}$:

811* वैदेह्याः कारणे राजंस्तथा जानपदो जनः ।

[T4 damaged for वैदेह्याः कारणे. D2.9 जानक्याश्; T3 वैदेह्यां (for वैदेह्याः). V1 -[आ]श्रयिनो; D1-4.9 च जनो; T3 स्वजनो (for कारणे). Ñ1 B1 जनपदो. V1 D1-4.9 T3.4 पौर (D9 °रा) जानपदा (D1.3.4 °द) स्तथा (T3.4 °दा अपि); B2 तथा जानपदा जनाः (for the post. half).]

21 $^a$) D5-7.10.11 M1 [ए]वं; M5 तद् (for [ए]तद्). Ñ V1 B D1-4.9 T3.4 तस्य श्रुत्वाप्रियं वाक्यं. —$^b$) V1 D1.4-7.9 T3.4 M1.3 परमार्थवित्; D2 T1 G3 M7 °मार्थवत्; G2 °मार्तवान् (sic); Cg.k.t as in text (for परमार्तवत्). —$^c$) Ś V3 D5-8.10-12 G2 transp. सर्वान् and सुहृदः. —$^d$) Ś V3 D8.12 ब्रवीत (Ś2 °ति; V3 °षि) मे; Ñ V1 B D1-4.9 इति प्रभुः; D5.7.10.11 T3.4 ब्रवीथ मां; D6 ब्रवीत्ययं; B (ed.) वदंतु मां (for निवेद्यताम्). ❀ Cg.k : परमार्तवत्, परमदुःखी भूत्वा । सर्वान्सुहृद इति भद्रव्यतिरिक्तानित्यर्थः। कथमेतदिति । भद्रोक्तमेतदपयशोवचनं कथं तत्त्वमतत्त्वं वेति भवद्भिश्च निवेद्यतामित्यर्थः (Ck °त्युवाच)।; Ct : परमार्तवत्, परमदुःखीवाकारं कृत्वा। वस्तुतो भगवति हर्षदुःखयोरभावादेव मुक्तिः । सर्वान्सुहृदो भद्रव्यतिरिक्तानपि कथमेतद्भद्रोक्तमेतदयशोवाक्यं तत्त्वमतत्त्वं चेति भवन्तोऽपि वदन्त्वित्युवाच. ❀

22 $^a$) Ś D8.12 T3.4 ते सर्वे; M1.3.10 सर्वे च (for सर्वे तु). V1 D1-4.9 भूमिम्. Ñ B शिरोभिस्ते ततो रामम्. —$^b$) Ñ B D1.3.4 अभिगम्य; G2 °नंद्य; M4.9 °वंद्य; M8 पादौ वंद्य (for अभिवाद्य). —$^c$) Ñ V1 B D1-4.9 T3.4 ऊचुर्नरपतिं दीनम् (V1 देवम्; D2.9 वीरम्). —$^d$) D3 वाक्यम् (for एवम्). Ñ1 B1 D1.6 एव (for एतन्). ❀ Cg : एवमेतत्, यथा भद्रेणोक्तमेतत्तत्त्वमेव ।; so also Ck.t. ❀

23 $^a$) Ś V1 D2.9 वाक्यं च; M2.7.8 [अ]थ वाक्यं (for तु वाक्यं). V1 तेषां तु; D1-4.9 तत्तेषां (for काकुत्स्थः). —$^b$) Ś Ñ V3 D8.12 M6 सर्वैस्तैः; V1 D1-4.9 काकुत्स्थः; B1.3.4 सर्वैस्तत्; B2 सर्वं तत् (for सर्वेषां). —$^c$) Ñ2 V1 B D1.3.4.9 T3.4 ततः (for तदा). —$^d$) D5-7.10.11 वयस्यान् (for सर्वांस्तान्). Ñ2 B सुहृदस्तथा (Ñ2 °दा); D5-7.10.11 G1.2 M1 शत्रुसूदनः; G (ed.) सुहृदः प्रभुः (for शत्रुतापनः). —After 23, Ñ2 B2-4 ins.:

812* इति वचनं निशम्य रामो
हृदयविदारणमप्रमेयतेजाः ।
हृदयगतमचिन्तयत्तदानीं
स्वजनजनं स विसर्जयन्महात्मा ।

[(l. 1) B2 वचनगणं; B3 वचनमिदं (for वचनं). —(l. 4) B2 च; B3.4 om. (for स). B2.4 विससर्ज तं (for विसर्जयन्).]

Colophon: *Kāṇḍa name*: Ś1 D2.9 om. —*Sarga name*: Ś1.3 D8.12 प्रजाप्रमो (Ś3 °मा) दः; Ś2 प्रमोदः; Ñ1 V1 D2.3.9 जनापवादः; Ñ2 B1.2.4 भद्रवाक्यं; V3 प्रजाप्रश्नः; B3 दूतवाक्यं; D1.4 जनवादः; D5 रामविनोदः. —*Sarga no.* (figures, words or both): Ś Ñ1 V3 B3 D2.12 om.; Ñ2 B1 47; V1 36; B2 32; B4 T3 48; D1.4 45; D3 44; D5 46; D6-8.10.11 T1.2 G M1-5.7-10 43; D9 T4 50; M6 41. —After colophon, T4 concludes with श्रीरामार्पणमस्तु; G M1.5.8 with श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

# ४३

विसृज्य तु सुहृद्वर्गं बुद्ध्या निश्चित्य राघवः ।
समीपे द्वाःस्थमासीनमिदं वचनमब्रवीत् ॥ १
शीघ्रमानय सौमित्रिं लक्ष्मणं शुभलक्षणम् ।
भरतं च महाबाहुं शत्रुघ्नं चापराजितम् ॥ २
रामस्य भाषितं श्रुत्वा द्वाःस्थो मूर्ध्नि कृताञ्जलिः ।
लक्ष्मणस्य गृहं गत्वा प्रविवेशानिवारितः ॥ ३
उवाच च तदा वाक्यं वर्धयित्वा कृताञ्जलिः ।
द्रष्टुमिच्छति राजा त्वां गम्यतां तत्र मा चिरम् ॥ ४
बाढमित्येव सौमित्रिः श्रुत्वा राघवशासनम् ।
प्राद्रवद्रथमारुह्य राघवस्य निवेशनम् ॥ ५
प्रयान्तं लक्ष्मणं दृष्ट्वा द्वाःस्थो भरतमन्तिकात् ।
उवाच प्राञ्जलिर्वाक्यं राजा त्वां द्रष्टुमिच्छति ॥ ६
भरतस्तु वचः श्रुत्वा द्वाःस्थाद्रामसमीरितम् ।
उत्पपातासनात्तूर्णं पद्भ्यामेव ततोऽगमत् ॥ ७ G. 7. 47. 8 B. 7. 44. 8 L. 7. 46. 7

## 43

☞ V2 missing for Sarga 43 (cf. v.l. 7.12.2). D12 begins with ॐ.

1 $^{a}$) Ś V3 B2 D3 G2 M1.8 च; Ñ1 B3 स; V1 D1–4.9 T4 तं; Ck.t as in text (for तु). D6.7 स विसृज्य. B1 सुहृद्वर्गान्; T4 बंधुवर्गं; M5 °द्वंशं (for सुहृद्वर्गं). —$^{b}$) Ś1 बुद्ध्या निश्चितमानसः.

2 $^{b}$) D12 लक्षणे (for लक्ष्मणं). V3 -दर्शनं; B2 D4 -लक्ष्मणं (for -लक्षणम्). —$^{c}$) G1 तं (for च). D5–7.10.11 महाभागं; D9 °वीर्यं (for महाबाहुं). —$^{d}$) D4–7.10.11 T1.2 G1 M3.5.6 अ(D4 वा)पराजितं. —After 2, D11 ins. श्रीरामाय नमः। कृष्णाय नमः। रामः.

3 $^{a}$) B4 D5–7.10.11 वचनं (for भाषितं). —$^{b}$) Ñ1 D1–3.9 कृत्वा; Ñ2 illeg.; V1 B1.3.4 क्षत्ता; B2 स च; D4 om. (hapl.) (for द्वाःस्थो). D5.6 स मूर्धनि (for द्वाःस्थो मूर्ध्नि). —V3 om. 3$^{cd}$. —For 3$^{c}$–4$^{b}$, Ñ1 (for 3$^{cd}$ only) V1 D1–4.9 T3.4 subst. 813*. —$^{d}$) Ś D8 त्वरान्वितः; Ñ2 B विनीतवत्; D12 रथान्वितः; M6 स सत्वरं; M9 [अ]-निवेदितः (for [अ]निवारितः).

4 Ñ1 reads 4$^{ab}$ in marg. —$^{a}$) Ñ B तमुवाच; D5–7.10.11 M8 उवाच सु-. Ś Ñ B3.4 D5–8.10–12 T1.2 G2.3 M3.6.8 महात्मानं; B1.2 महाबाहुं (for तदा वाक्यं). V3 गत्वा तु लक्ष्मणं प्राह. —$^{b}$) Ś D8.12 G1.2 वंदयित्वा; V3 महाप्राज्ञं; Cg.k.t as in text (for वर्धयित्वा). —For 3$^{c}$–4$^{b}$, V1 D1–4.9 T3.4 subst.; while Ñ1 subst. for 3$^{cd}$ :

813* अब्रवील्लक्ष्मणं पूर्वं सोऽभिगम्य विनीतवत् ।

[ V1 सौम्यं; T3 वाक्यं (for पूर्वं). ]

—$^{c}$) G2 राजा त्वा; M6 ते राजा (for राजा त्वां). —$^{d}$) V3 marg.; B2 भद्र; D6 M1 अत्र (for तत्र). B3 (marg. also) सत्वरं गंतुमर्हसि; B3 सौमित्रे गच्छ मा चिरं. ❀ Cg.k : वर्धयित्वेति, जयाशिषेति शेषः। मा चिरं विलम्बो मा भूत्। ; so also Ct. ❀ —After 4, Ś Ñ V1.3 B D1–4.8.9.12 T3.4 M3 ins. :

814* यावद्भरतशत्रुघ्नौ त्वरयामि नृपाज्ञया ।

5 $^{b}$) B3 D10.11 T3.4 कृत्वा (for श्रुत्वा). Ś Ñ V1.3 B1.4 D1–4.8.9.12 T3.4 रामस्य (for राघव-). Ñ1 B1 भाषितं (for -शासनम्). —After 5$^{ab}$, M1.2.4.7.9.10 ins. :

815* उत्पपातासनात्तूर्णं महाबाहुररिंदमः ।

[ The prior half = 7$^{c}$. ]

—D9 T4 om. (hapl?) 5$^{cd}$. —$^{c}$) Ñ2 B प्रस्थितो (for प्राद्रवद्). Ś V3 D8.12 M6 आस्थाय (for आरुह्य). —$^{d}$) Ś D8.12 रामस्य च (for राघवस्य).

6 $^{a}$) D5 M1 प्रयातं. —$^{b}$) Ś D8.12 M4 अंतिके(M4 °कं); M5 अभ्यगात्; Cg.k.t as in text (for अन्तिकात्). ❀ Cg.k : भरतमन्तिकात् भरतस्यान्तिकमित्यर्थः। (Ck °ति यावत्)। गत्वेति शेषः। ; so also Ct. ❀ —For 6$^{ab}$, Ñ V1.3 B D1–4.9 T3.4 subst. :

816* प्रयाते लक्ष्मणे द्वाःस्थो भरतं गृहमाश्रितम् ।

[ B3 प्रस्थिते and क्षत्ता (for प्रयाते and द्वाःस्थो). T3.4 आगतः (for आश्रितम्). Ñ B भरतं स्वगृहे(B3 भवने)स्थितं; V3 गत्वा भरतमंतिके (for the post. half). ]

—G2 om. 6$^{c}$–8$^{b}$. —$^{c}$) D5–7.10.11 उवाच भरतं(D5 वचनं) तत्र. —After 6$^{c}$, D5–7.10.11 ins. :

817* वर्धयित्वा कृताञ्जलिः ।
विनयावनतो भूत्वा.

—$^{d}$) T3.4 द्रष्टुमिच्छति राघवः.

7 G2 om. 7 (cf. v.l. 6). —$^{a}$) Ñ2 B तद्; D2 च; D9 स (for तु). —$^{b}$) Ñ1 श्रुत्वा; V1 क्षणे; D1.4 विद्वान्; D3 तत्तु (for द्वाःस्थाद्). D2.9 द्वाःस्थेन च; G1 द्वाःस्थस्यैवं (for द्वाःस्थाद्राम-). Ñ2 B1 G (ed.) क्षत्ता(G [ed.] °त्रा) यत्समुदीरितं; T3 द्वाःस्थाद्रामस्य शासनं. —$^{c}$) D1.4 उत्थाय चासनाच्छीघ्रं. ❀ Cv.g : उत्पपात उत्थाय जगाम. ❀ —$^{d}$) D11 om. after पद्भ्यां up to पुद्भ्यां in 9$^{a}$. Ñ V1 B D1–4.9 T3.4 ययौ च(D4 हि) सः; D5–7.10 T1.2 G1.3 M1.2.4.5.7–10 महाबलः; M3 ययौ बली (for ततोऽगमत्).

G. 7. 47. 8
B. 7. 44. 8
L. 7. 46. 8

दृष्ट्वा प्रयान्तं भरतं त्वरमाणः कृताञ्जलिः ।
शत्रुघ्नभवनं गत्वा ततो वाक्यं जगाद ह ॥ ८
एह्यागच्छ रघुश्रेष्ठ राजा त्वां द्रष्टुमिच्छति ।
गतो हि लक्ष्मणः पूर्वं भरतश्च महायशाः ॥ ९
श्रुत्वा तु वचनं तस्य शत्रुघ्नो रामशासनम् ।
शिरसा वन्द्य धरणीं प्रययौ यत्र राघवः ॥ १०
कुमारानागताञ्श्रुत्वा चिन्ताव्याकुलितेन्द्रियः ।
अवाक्शिरा दीनमना द्वाःस्थं वचनमब्रवीत् ॥ ११
प्रवेशय कुमारांस्त्वं मत्समीपं त्वरान्वितः ।
एतेषु जीवितं मह्यमेते प्राणा बहिश्चराः ॥ १२
आज्ञप्तास्तु नरेन्द्रेण कुमाराः शुक्लवाससः ।
प्रह्वाः प्राञ्जलयो भूत्वा विविशुस्ते समाहिताः ॥ १३
ते तु दृष्ट्वा मुखं तस्य सग्रहं शशिनं यथा ।
संध्यागतमिवादित्यं प्रभया परिवर्जितम् ॥ १४
बाष्पपूर्णे च नयने दृष्ट्वा रामस्य धीमतः ।
हतशोभं यथा पद्मं मुखं वीक्ष्य च तस्य ते ॥ १५

---

8 $G_2$ $M_8$ om. $8^{ab}$ ( for $G_2$, cf. v.l. 6 ). $D_{11}$ om. 8 ( cf. v.l. 7 ). —$^{a}$) $\tilde{N}_2$ $V_3$ B $D_{1-4.9}$ प्रयातं; $T_2$ [ अ ]भियांतं ( for प्रयान्तं ). $M_9$ प्रयांतं भरतं दृष्ट्वा. —$^{b}$) $\tilde{N}_2$ $V_1$ $M_{10}$ त्वरमाणं. $D_8$ कृतांजलिं. $B_3$ द्वाःस्थस्त्वरितविक्रमः. —$M_4$ om. $8^{cd}$. —$^{d}$) $T_1$ $M_3$ रामवाक्यं; $M_6$ ततो द्वाःस्थो ( for ततो वाक्यं ). $D_{5-7.10}$ $G_{1.2}$ $M_{5.8}$ उवाच ( for जगाद ). $G_2$ हा ( for ह ). $\tilde{N}$ $V_1$ $B_{1.2.4}$ $D_{1-4.9}$ $T_{3.4}$ शत्रुघ्नं ( $B_2$ सत्वरं; $T_{3.4}$ दूतस्तद् )वाक्य( $\tilde{N}_2$ °घ्नमिद )मब्रवीत्.

9 $D_{11}$ om. up to एह्या in $^{a}$ ( cf. v.l. 7 ). —$^{a}$) Ś $D_8$ इह ( for एहि ). —$^{b}$) Ś $B_3$ $D_{8.12}$ $T_{3.4}$ $M_6$ रामस् ( for राजा ). —$^{c}$) $V_3$ $D_5$ ततो ( sic ) ( for गतो ). —$^{d}$) $\tilde{N}_1$ $V_1$ $D_{1-4.9}$ $T_{3.4}$ महाबलः; $\tilde{N}_2$ $B_{1.2}$ °रथः ( for महायशाः ).

10 $^{a}$) B गदतस् ( for वचनं ). —$^{b}$) $Ś_3$ $\tilde{N}_1$ $V_{1.3}$ $D_{2.9}$ रामशासनात्; $B_2$ राजशासनं; $D_{5-7.10.11}$ $T_{1.2}$ G $M_{1-5.7-10}$ परमासनात् ( for रामशासनम् ). —After $10^{ab}$, $M_1$ ins. :

818* अवतीर्य तदा भूमौ राघवाय महात्मने ।

—$^{c}$) $D_6$ उत्थाय ( for शिरसा ). Ś $D_{8.12}$ [ अ ]भिनं( $D_{12}$ °वं )द्य शत्रुघ्नः ( hypm. ); $\tilde{N}_1$ $V_1$ $D_{1-4.9}$ $T_{3.4}$ प्रतिगृह्याशु; $V_3$ $M_{6.9}$ [ अ ]भिवाद्य धरणीं( $V_3$ सौमित्रिः ) ( hypm. ) ( for वन्द्य धरणीं ). $\tilde{N}_2$ B $D_5$ शिरसि( $\tilde{N}_2$ °सा ) प्रतिगृह्याज्ञां; $M_1$ प्रणम्य शिरसा तूर्णं; $M_2$ शिराभिवाद्य धरणीं; $M_{4.7.10}$ धरण्यां शिरसा वंद्य. ❀ Cg : शिरसा धरणीं प्राप्य रामाय वन्दित्वेत्यर्थः । ; Ck.t : शिरसा वन्द्य धरणीं( Ck °णीमिति । ) शिरसा धरणीं प्राप्य । रामाय वन्दित्वेत्यर्थः. ❀ —$^{d}$) $B_1$ स ययौ; $M_5$ प्रतस्थे ( for प्रययौ ). $\tilde{N}$ $V_1$ $B_{2.4}$ $D_{1-4.9}$ $T_{3.4}$ ययौ य( $\tilde{N}_1$ त )त्र स राघवः. —After 10, Ś $\tilde{N}$ $V_{1.3}$ B $D_{1-5.7-12}$ $T_{3.4}$ $M_8$ ins. :

819* द्वाःस्थस्त्वागम्य रामाय सर्वानेव कृताञ्जलिः ।
निवेदयामास तदा भ्रातॄंस्तान्समुपस्थितान् ।

[ ( l. 1 ) Ś $D_{8.12}$ चागत्य ( for त्वागम्य ). $V_3$ द्वाःस्थश्चैवाभिगम्याथ; $D_{2.9}$ तत्रागम्य स रामाय ( for the prior half ). $V_3$ $B_4$ सर्वत्रैव ( for सर्वानेव ). —( l. 2 ) $Ś_1$ $D_{10.11}$ तथा; $B_3$ भ्रातॄंस्; $D_{1.4}$ ततो ( for तदा ). $\tilde{N}_1$ $B_{3.4}$ $D_{7.10.11}$ $T_{3.4}$ $M_8$ भ्रातॄन्स्वान्; $\tilde{N}_2$ स भ्रातॄन्; $B_2$ ततस्तान् ( for भ्रातॄंस्तान् ). $B_3$ समुपागतान्. ]

11 $^{a}$) $T_1$ $G_3$ $M_5$ दृष्ट्वा ( for श्रुत्वा ). —$^{b}$) $B_3$ रामश्चिताकुलेंद्रियः; $D_5$ चिंतया व्याकुलेंद्रियः. —$^{c}$) $Ś_{1.2}$ $D_3$ अर्वाक्शिरा; $\tilde{N}$ $B_{1.2.4}$ अधःशिरा( $B_1$ °रो- ); $D_5$ $G_{1.2}$ $M_3$ अवाक्शिरो-; $D_{6.7.10.11}$ अवाङ्मुखो ( for अवाक्शिरा ).

12 $^{a}$) $D_5$ प्रविवेश ( sic ) ( for प्रवेशय ). $B_4$ तान् ( for त्वं ). —$^{b}$) $G_2$ $M_8$ मत्समीपे; $M_{4.7.10}$ मत्सकाशं. —$^{c}$) Ś $V_3$ $D_{8.12}$ चैव; $G_2$ मन्ये ( for मह्यम् ). $M_5$ एतेषु जीवितेष्वेव. ❀ Cg.k : मह्यं ममेत्यर्थः( Ck °मेति यावत् ) । ; Ct : मह्यं मम जीवितमेतेषु स्थितमिति शेषः. ❀ —$^{d}$) $G_2$ $M_5$ एतैः ( for एते ). $T_{1.3}$ $G_{2.3}$ $M_{3.5.8.10}$ प्राणैः ( for प्राणा ). $D_{6.7.10.11}$ $T_{1.2}$ G $M_{2-5.8-10}$ प्रिया मम; $M_6$ च सांप्रतं ( for बहिश्चराः ). Ś $V_3$ $D_{8.12}$ प्राणाश्च मम सांप्रतं. —For $12^{cd}$, $\tilde{N}$ $V_1$ B $D_{1-5.9}$ $T_{3.4}$ subst. :

820* मम जीवितमेते हि प्राणाश्चैव बहिश्चराः ।
[ $\tilde{N}_2$ $B_{3.4}$ एवैते; $B_{1.2}$ एते वै ( for एते हि ). $B_3$ चापि. ]

13 $^{a}$) Ś $\tilde{N}$ $V_{1.3}$ $B_{2-4}$ $D_{1-5.8.9.12}$ $T_{3.4}$ ते ( for तु ). $B_3$ वरेंद्रेण. $M_3$ आज्ञप्तास्तेन रामेण. —$^{b}$) $\tilde{N}_2$ प्रभया ( for कुमाराः ). $\tilde{N}_2$ B सूर्यवर्चसः; $D_{1-5.9}$ $T_{3.4}$ सूक्ष्मवाससः; $T_{1.3}$ $G_{1.3}$ $M_{1.3}$ श्लक्ष्ण°; K ( ed. ) शुक्रतेजसः ( for शुक्लवाससः ). —$^{c}$) $G_2$ कुमाराः ( hypm. ) ( for प्रह्वाः ). Ś $V_3$ $D_{8.12}$ सर्वे ( for भूत्वा ). —$^{d}$) $B_3$ च; $G_2$ सु- ( for ते ). $B_{1.2}$ त्वरान्विताः ( for समाहिताः ). $V_1$ $D_{1-5.9}$ $T_{3.4}$ प्राविशन्पुरुषर्षभाः.

14 $^{a}$) Ś $V_3$ $D_{8.12}$ एते ( for ते तु ). —$^{b}$) Ś $D_{8.12}$ ह्यप्रभं; $\tilde{N}_1$ सबाहुं ( sic ); $V_3$ निष्प्रभं ( for सग्रहं ). $G_1$ शशिनं सग्रहं ( by transp. ). —For $14^{ab}$, $V_1$ $D_{1-5.9}$ subst. :

821* दृष्ट्वा पूर्णं यथा चन्द्रं राहुणा समभिप्लुतम् ।
[ $D_{2.9}$ पूर्वं ( sic ) ( for पूर्णं ). $D_2$ समभिप्लुतं. ]

—$^{c}$) $D_{1.4}$ संध्याग्रांतम्; $D_6$ संध्यारामम् ( for संध्यागतम् ). $G_1$ [ आ ]दित्यः. —$^{d}$) $G_3$ प्रताप- ( for प्रभया ). $G_1$ परिवर्जितः. $\tilde{N}$ $V_1$ B $D_{1.3-5}$ $T_{3.4}$ अभ्र( $D_5$ उप )जाल( $D_{1.3-5}$ $T_{3.4}$ °राग ) समा( $B_2$ °मिवा )वृतं; $D_{2.9}$ अंतरा तमसावृतं.

15 $^{a}$) $B_2$ वारि- ( for बाष्प- ). $V_1$ om. ( subm. ); $B_3$ तु ( for च ). $M_5$ तद्बाष्पपूर्णनयनं. —$^{c}$) Ś $V_3$ $D_{8.12}$ गतशोभं.

ततोऽभिवाद्य त्वरिताः पादौ रामस्य मूर्धभिः ।
तस्थुः समाहिताः सर्वे रामश्चाश्रूण्यवर्तयत् ॥ १६
तान्परिष्वज्य बाहुभ्यामुत्थाप्य च महाभुजः ।
आसनेष्वाध्वमित्युक्त्वा ततो वाक्यं जगाद ह ॥ १७

भवन्तो मम सर्वस्वं भवन्तो मम जीवितम् ।
भवद्भिश्च कृतं राज्यं पालयामि नरेश्वराः ॥ १८
भवन्तः कृतशास्त्रार्था बुद्धौ च परिनिष्ठिताः ।
संभूय च मदर्थोऽयमन्वेष्टव्यो नरेश्वराः ॥ १९

G. 7. 47. 21
B. 7. 44. 20
L. 7. 46 20

इति श्रीरामायणे उत्तरकाण्डे त्रिचत्वारिंशः सर्गः ॥४३ ॥

M6 तथा (for यथा). —$^d$) V3 om. मुखं. M5 तु (for च). T3.4 transp. वीक्ष्य and तस्य. ❀ Cv: 'हतशोभं यथा पद्मं मुखं वीक्ष्यैव तस्य ते' इति पुनरुक्तोपन्यासः पद्मौपम्यविशेषकथनार्थः । प्रत्युपमानमुपमानस्योपमेयवत्तश्च क्रियायाश्च प्रयोगेण भाव्यते। तथाप्यर्थस्य गम्यमानत्वात्, सर्वत्रैवं प्रयुज्यते। अतोऽत्र न पुनरुक्तिदोष इति च केचिदाचक्षते. ❀ —For 15$^{cd}$, Ñ V1 B D1–5.9 subst.:

822* म्लानपत्रस्य पद्मस्य मुखं च सदृशप्रभम् ।

[V1 D1–3.9 छिद्र-; D5 छिन्न- (for म्लान-). D1 तत् (for च). D5 मुखं चंद्रसमप्रभं (for the post. half).]

16 $^a$) M5 कुमारास् (for ऽभिवाद्य). —$^b$) M5 जगृहुर् (for रामस्य). M1.6 धीमतः (for मूर्धभिः). —For 16$^{ab}$, Ñ V1 B D1–5.9 T3.4 subst.:

823* शिरोभिस्ते तदा राममभिवाद्य नृपात्मजाः ।

[D5 अभिवंद्य (for °वाद्य). B1 अधिगम्य प्रणम्य च (for the post. half).]

—$^c$) M1 ततः (for तस्थुः). Ś Ñ V1.3 B D1–5.8.9.12 T3.4 प्रांजलयः; M6 च सहिताः (for समाहिताः). M5 तत्र (for सर्वे). —$^d$) Ś V1.3 D1–4.7–12 T3.4 तु; Ñ1 [ऽ]पि; Ñ2 B हि (for च). T2 G2.3 M1 रामस्याश्रूण्यवर्तयन्.

17 $^b$) Ś V3 D8.12 स; G1 तु (for च). G2 समुत्थाप्य (for उत्थाप्य च). D6.7.10.11 T1.3.4 M3 महाबलः. Ñ V1 B2.4 D1–4.9 G (ed.) हार्देन (D1 भवने; D2.9 हर्षेण; D3.4 भावेन; G [ed.] सौहार्दं) मनुजाधिपः; D5 सौहार्देन नराधिपः; M1 उरसा पीडयन्निव. —$^c$) Ś V3 B3 D6–8.10–12 T1.2 G M1.3.10 [आ]सतेत्युक्त्वा; B4 [आ]सध्वमिति; M5 [आ]स्थितान्मुक्त्वा (for [आ]ध्वमित्युक्त्वा). Ñ1 V1 D1–5.9 T3.4 आसध्वमिति चोक्त्वा तांस्. —$^d$) T3.4 तदा (for ततो). Ś1.2 B3 D8 G1 च; D1.3–5 स: (for ह). Ñ2 उवाच ह; D2.9 अथाब्रवीत् (for जगाद ह).

18 $^a$) Ñ1 D2.9 सर्वं हि; D5 वीर्यं हि (for सर्वस्वं). —$^b$) Ñ2 D6.7.10.11 जीवितं मम (by transp.); D5 मम जीवनं. —V1 D1–5.9 om.; Ñ1 reads in marg. 18$^c$–19$^b$. —$^c$) T3.4 सु- (for च). Ś Ñ V3 B D8.12 G1.2 M6.10 भवतां च कृते (Ñ1 °तं). Ñ1 राजा; B2 वाक्यं; G (ed.) राष्ट्रं (for राज्यं). ❀ Ck: भवद्भिश्च सह कृतं व्याप्तं राज्यम् ।; Ct: भवद्भिः कृतं संपादितम्. ❀ —$^d$) Ñ B महाबलाः (Ñ2 B2 °लः) (for नरेश्वराः). T3.4 भवद्भिः पालितो ह्यहं. —After 18, T3.4 ins. 824*.

19 V1 D1–5.9 om.; Ñ1 reads in marg. 19$^{ab}$ (for both cf. v.l. 18). T3.4 om. 19. —$^a$) Ś V3 D8.12 M1.6 कृतशास्त्राश्च; Ñ B सर्वशास्त्रज्ञा; M5 कृतशास्त्रा मे; Cg.k.t as in text (for कृतशास्त्रार्था). ❀ Cg.k.t: कृतशास्त्रार्था अनुष्ठितशास्त्रार्थाः (Ck.t °र्थानुष्ठानाः). ❀ —$^b$) Ś3 B1.2 D6.7.10.11 G3 M3 बुद्ध्या; M5 बुद्धौ; M6 युद्धे (for बुद्धौ). —$^c$) B3 (with hiatus) तदान्वानो; M6 तदर्थोयम् (for मद°). Ñ V1 B1.2.4 D1–4.9 भवद्भिश्च (B1.2 [m. also as in Ñ] तद्भवद्भिः) स (Ñ1 D1.3.4 म) हार्थोयन्; V3 सत्यव्रता मदर्थे ते; D5 भवद्भिश्च सहायार्थो; M1 सर्वथा हि मदर्थोयम्. —$^d$) Ś V3 D8.12 L (ed.) ततो (V3 मन्ये; L [ed.] सर्वेश्च) चिन्त्यो; D5 ह्यन्वेष्टव्यो (for अन्वे°). Ś Ñ V1 B D1–5.8.9.12 M6 नरर्षभाः. ❀ Ck: मदर्थोऽयमिति । वक्ष्यमाण इति शेषः। अन्वेष्टव्यः अनुसरणीय इत्यर्थः।; so also Ct. ❀ —After 19, Ñ V1.3 B D1–7.9–11 T1.2 G M K (ed.) ins.; while T3.4 ins. after 18 (owing to om.):

824* तथा वदति काकुत्स्थे अवधानपरायणाः ।
उद्विग्नमनसः सर्वे किं नु राजाभिधास्यति ।

[(l. 1) Note hiatus between the two halves. V3 तदा. B1.2.4 D1.3–5 ब्रुवति (for वदति). Ñ1 B1 ते वै (B1 च) ध्यान-; Ñ2 V1 D1–5.9 T3.4 सर्वे ध्यान-; V3 पौरा राम-; B2–4 ते (B3 दे) व्ध्यान-; D6 सावधान-; M6 स्वव°; K (ed.) ह्यव° (for अवधान-). Ñ1 B2.4 D1.3.4 -परास्तदा (Ñ1 B2 °था); Ñ2 V1 D2.9 T3.4 -पराः स्थिताः (for -परायणाः). —After l. 1, Ñ2 V1 D1–5.9 T3.4 ins.:

824(A)* चिन्तयन्तोऽपि ते नैव पश्यन्त्युद्वेगकारणम् ।
[D2 पश्यंत (for पश्यन्ति).]

—D3 om l. 2. —(l. 2) V1 D1.2.4.5.9 वितर्क- (for उद्विग्न-). Ñ1 B दध्युः (for सर्वे). T3.4 वितर्कमगमन्सर्वे; M1 तस्थुरुद्विग्नमनसः (for the prior half). B नो (for नु). M1 रामो (for राजा). Ñ1 B वदिष्यति; T3.4 वदेदिति (for [अ]भिधास्यति).]

—Then, V3 cont.:

825* अपराधः कृतोऽस्माभिरथवा यो नरर्षभैः ।
while, B2–4 cont. after 824*:

## ४४

G. 7. 48. 1
B. 7. 45. 1
L. 7. 47. 1

तेषां समुपविष्टानां सर्वेषां दीनचेतसाम् ।
उवाच वाक्यं काकुत्स्थो मुखेन परिशुष्यता ॥ १
सर्वे शृणुत भद्रं वो मा कुरुध्वं मनोऽन्यथा ।
पौराणां मम सीतायां यादृशी वर्तते कथा ॥ २
पौरापवादः सुमहांस्तथा जनपदस्य च ।
वर्तते मयि बीभत्सः स मे मर्माणि कृन्तति ॥ ३
अहं किल कुले जात इक्ष्वाकूणां महात्मनाम् ।
सीतां पापसमाचारामानयेयं कथं पुरे ॥ ४
जानासि हि यथा सौम्य दण्डके विजने वने ।
रावणेन हृता सीता स च विध्वंसितो मया ॥ ५

826* इति ब्रुवन्तं मनुजेन्द्रमातुरं
समीक्ष्य ते ह्यार्ततरा व्यपीदन् ।
ब्रूयादयं किं न्विति चित्तवृत्तयो
नरेन्द्रपुत्रा ह्यभवन्सुदुःखिताः ।

[ (l. 2) $B_3$ भ्रांततरा ( for ह्यार्ततरा ). $B_4$ प्रमादयन् ( for व्यपीदन् ). —(l. 4) $B_2$ ह्य * * न्. ]

Colophon : $V_1$ $D_{2.5.9}$ om. —*Kāṇḍa name*. Ś $M_7$ om. —*Sarga name* : $Ś_1$ कुमारानयनं; $Ś_{2.3}$ Ñ $V_3$ B $D_{1.3.4.8.12}$ G (ed.) कुमारा( G [ed.] भ्रात्रा )ह्वानं. —*Sarga no.* ( figures, words or both ) : Ś $Ñ_1$ $V_3$ $B_4$ $D_{12}$ om.; $Ñ_2$ $B_{1.3}$ 48; $B_2$ 33; $D_{1.4}$ 46; $D_3$ 45; $D_{6.7.10-11}$ $T_{1.2}$ G $M_{1-5.7-10}$ 44; $T_3$ 49; $T_4$ 51; $M_6$ 42. —After colophon, $T_4$ concludes with श्रीरामार्पणमस्तु; G $M_{1.5.8}$ with श्रीरामाय नमः; $M_{10}$ with श्रीरामचन्द्राय नमः.

## 44

☞ $V_2$ missing for Sarga 44 ( cf. v.l. 7.12.2 ). $V_1$ $D_{2.5.9}$ cont. the previous Sarga.

1 $^{b}$ ) $D_{2.9}$ चैक- ( for दीन- ). $B_3$ -मानसां (sic) ( for -चेतसाम् ). —$^{c}$ ) $M_6$ राजा ( for वाक्यं ). —For $1^{cd}$, Ñ $V_1$ $B_{1.2.4}$ $D_{1-5.9}$ $T_{3.4}$ subst.; while $B_3$ wrongly ins after $1^{ab}$ :

827* अश्रुपूर्णेक्षणो राम इदं वचनमब्रवीत् ।

[ Ñ $V_1$ B -पूर्णमुखो. $B_1$ कार्यार्थमिदम् ( for इदं वचनम् ). ]

2 $Ñ_1$ $V_1$ $B_{1.2.4}$ $D_{1.3.4.5.9}$ om. 2. —$^{a}$ ) Ś $Ñ_2$ $V_3$ $B_3$ $D_{3.8.12}$ $M_6$ इदं; Cg as in text ( for सर्वे ). $D_6$ transp. भद्रं and वो. —$^{b}$ ) $Ñ_2$ $B_3$ $M_6$ कार्यांश्च; $D_{6.7}$ कुर्पीध्वं; $T_1$ $G_{2.3}$ $M_{2.4.7-9}$ कुध्वं च; $G_1$ $M_{1.5}$ कृणुध्वं; Cg.t as in text ( for कुरुध्वं ). Ś $Ñ_2$ $V_3$ $D_{6.8.12}$ $T_{3.4}$ $M_3$ मनोऽयथां; $D_3$ वचोन्यथा. ❀ Cg : मा कुरुध्वं मनोऽन्यथा, मदभिप्रायानुकूलं मा कुरुध्वमित्यर्थः ।; Ck : मनोऽन्यथा मा कुध्वमिति । मदभिप्रायानुकूलभावं मा कुरुध्वमित्यर्थः ।; Ct : अन्यथा मा कुरुध्वम् । मदभिप्रायानुकूलभावं मा कुरुध्वमित्यर्थः. ❀ —$Ñ_2$ $B_3$ $D_3$ om. ( hapl ? ) $2^{cd}$. —$^{c}$ ) $Ś_{2.3}$ $D_{8.12}$ चैव; $T_{3.4}$ इह; $M_{1.6}$ मयि ( for मम ). $V_3$ पौरवाणां च ( for पौराणां मम ). Ś $D_{12}$ $T_{1.2}$ G $M_8$ सीताया. —$^{d}$ ) $G_1$ transp. यादृशी and वर्तते.

3 $^{b}$ ) Ś $V_3$ $D_{3.12}$ जनपदेषु. —For $3^{ab}$, Ñ $V_1$ B $D_{1-5.9}$ $T_{3.4}$ subst. :

828* सीतापवादः सुमहान्पौरजानपदैः कृतः ।
[ $D_5$ अपवादो हि ( for सीतापवादः ). ]

— Thereafter, all the above MSS. cont.; while Ś $V_3$ $D_{8.12}$ ins. after $3^{ab}$ :

829* चारित्रं प्रति वैदेह्या अज्ञानान्मन्दबुद्धिभिः ।
अयशः सुमहत्प्राप्तं पुरे जनपदे तथा ।

[ $B_2$ transp. l. 1 and 2. —(l. 1) Ñ $V_{1.3}$ चरित्रं; $B_{3.4}$ $D_9$ चारित्र्यं ( for चारित्रं ). $D_9$ वैदेह्याम्. $D_{12}$ -बुद्धिषु ( for -बुद्धिभिः ). —(l. 2) $D_9$ $T_{3.4}$ तु ( for सु- ). $Ñ_2$ B वीराः ( for प्राप्तं ). $D_{2.3.5.9}$ जानपदे ( for जन° ). $D_1$ तदा ( for तथा ). ]

—$^{c}$ ) Ś $Ñ_2$ $V_{1.3}$ $B_{1.2}$ $D_{8.12}$ $M_{1.2.4.7-10}$ मम; Cg.k.t as in text ( for मयि ). Ñ $V_1$ B $D_{1-5.9}$ $G_3$ बीभत्सं; $D_{6.7.10.11}$ T $G_2$ $M_{1.3.8}$ Cg.k.t बीभत्सा. —$^{d}$ ) Ś $V_3$ $D_{8.12}$ स च; Ñ $V_1$ B $D_{1-5.9}$ तन्मे; $D_{6.7.10.11}$ $T_{3.4}$ $G_2$ $M_{6.8}$ Ct सा मे; $T_{1.2}$ $G_3$ $M_3$ मम; $M_1$ सर्व- ( for स मे ). ❀ Cg.k.t : पौरापवाद इत्यादि । ( Ct °द इति । पौराणां ) मयि मद्विषये । बीभत्सा कुत्सा वर्तते सा ( Ct सा मे ) मम मर्माणि कृन्तति. ❀

4 $D_6$ $G_2$ om. $4^{cd}$. —$^{d}$ ) $V_3$ आनयित्वा; $M_6$ आनयामि ( for आनयेयं ). Ś $Ñ_1$ $V_1$ $D_{1-5.8.9.12}$ पर( $Ñ_1$ $V_1$ $D_{12}$ परि )क्षयात्( $D_{3.5}$ °गृहात् ); $Ñ_2$ $V_3$ $B_{2-4}$ पुनः कथं; $B_1$ पुनः पुनः; $T_{1.2}$ $G_3$ $M_3$ कथं पुनः; $T_{3.4}$ $M_8$ कथं पुरं; $M_6$ पुनर्गृहान् ( for कथं पुरे ). —For $4^{cd}$, $D_{7.10.11}$ $G_1$ $M_{1.5.10}$ subst. :

830* सीतापि सत्कुले जाता जनकानां महात्मनाम् ।

5 $^{a}$ ) Ś $V_3$ $D_{8.12}$ जानीषे; $B_{1.2}$ जानामि; $B_4$ $D_6$ $T_{1.2}$ G $M_{3.5.6.8.10}$ जानीध्वं; $M_1$ ज्ञातं हि ( for जानासि ). $Ñ_2$ $V_1$ $D_{2.7.9-11}$ $T_{3.4}$ त्वं; B च; $M_1$ वो ( for हि ). $B_2$ यदा; $T_3$ कथां ( for यथा ). $B_{2.4}$ $D_6$ $T_{1.2}$ G $M_{3.5.6.8.10}$ सौम्या; $M_1$ सीता ( for सौम्य ). $V_1$ महाभाग ( for यथा सौम्य ). —$^{b}$ ) $M_8$ निर्जने ( for विजने ). Ñ $V_1$ $D_{2.3.5.9}$ $T_{3.4}$ निर्ज( $D_{2.3.5}$ विज )नाद्दंडकाद्व( $D_{2.9}$ °कान; $T_{3.4}$ °का व )नात्; $B_{1.2.4}$ दंडकाद्विजनाद्वलात् ( $B_4$ °नाद्वनात् ); $D_{1.4}$ विजने दंडकाद्वनात्. —$^{d}$ ) $T_{3.4}$ [ऽ]पि ( for च ). $B_1$ रावणो हिंसितो मया. —After 5, $D_{6.7.10.11}$ $G_{1.2}$ $M_{1.5.10}$ ins. :

प्रत्यक्षं तव सौमित्रे देवानां हव्यवाहनः ।
अपापां मैथिलीमाह वायुश्चाकाशगोचरः ॥ ६
चन्द्रादित्यौ च शंसेते सुराणां संनिधौ पुरा ।
ऋषीणां चैव सर्वेषामपापां जनकात्मजाम् ॥ ७
एवं शुद्धसमाचारा देवगन्धर्वसंनिधौ ।
लङ्काद्वीपे महेन्द्रेण मम हस्ते निवेशिता ॥ ८
अन्तरात्मा च मे वेत्ति सीतां शुद्धां यशस्विनीम् ।
ततो गृहीत्वा वैदेहीमयोध्यामहमागतः ॥ ९
अयं तु मे महान्वादः शोकश्च हृदि वर्तते ।
पौरापवादः सुमहांस्तथा जनपदस्य च ॥ १०
अकीर्तिर्यस्य गीयेत लोके भूतस्य कस्यचित् ।
पतत्येवाधमाँल्लोकान्यावच्छब्दः स कीर्त्यते ॥ ११
अकीर्तिर्निन्द्यते देवैः कीर्तिर्देवेषु पूज्यते ।
कीर्त्यर्थं च समारम्भः सर्व एव महात्मनाम् ॥ १२

G. 7. 48. 12
B. 7. 45. 14
L. 7. 47. 13

---

831* तत्र मे बुद्धिरुत्पन्ना जनकस्य सुतां प्रति ।
अत्रोषितामिमां सीतामानयेयं कथं पुरीम् ।
प्रत्ययार्थं ततः सीता विवेश ज्वलनं तदा ।

[ (l. 2) G2 तत्र ( for अत्र ). G1 इतः ( for इमां ). ]

6 a) B2 अपि ( for तव ). T4 प्रत्यक्षतश्च. —b) B1 च हुताशनः ; B3 चैव हव्यभुक्; M1 हि विभावसुः ( for हव्यवाहनः ). Ñ V1 B2.4 D1–5.9 यथा( D2 °दि; D9° च ) देवो हुताशनः.—After $6^{ab}$, B2 ins. :

832* सर्वैरुक्ता मैथिलीयं शुद्धा चैव न संशयः ।

—c) Ś Ñ1 V1 B1 D8.12 T1.2 M5 प्राह; D5 चाह ( for आह ). M1 अपापा मैथिलीत्याह. —d) G1 आकाश- ( for चाकाश- ). B1.2 -संभवः ( for -गोचरः ).

7 a) Ś Ñ V3 B D2–4.8.12 M6 श( Ñ1 प्र )शंसतुश्च चंद्रार्कौ( D2–4 °तुश्चंद्रसूर्यौ ); V1 D1.5.9 शंसतुश्चंद्रसूर्यौ च( D9 तु ).—b) Ś Ñ1 V3 D3.5.8.12 तदा; V1 यथा; D2.9 तथा ( for पुरा ). D1.4 सुराणां चेंद्रसंनिधौ. —c) Ñ2 V1 D1–5 अपि ( for चैव ). —d) T3.4 अपापा जनकात्मजा.

8 Ś2 om. $8^{c}$–$10^{b}$. V1 om. $8^{cd}$.—c) Ñ1 -देशे ( for -द्वीपे ). Ñ2 [ ऽ ]ग्निना सीता ( for महेन्द्रेण ). —d) D1 समर्पिता; D6.7.10.11 T3.4 M3 निवेदिता ( for निवेशिता ). ❀ Ct: लङ्काद्वीपे महेन्द्रेणेति । लङ्काद्वीपे तदाग्निना इति पाठान्तरम्. ❀

9 Ś2 om. 9 ( cf. v.l. 8 ). —a) Ś1 D8.12 अहमात्मा ( for अन्तरात्मा ). B2 रौतु ( for वेत्ति ). M2 corrupt ( for मे वेत्ति ). —b) Ś1.3 Ñ V1.3 B D1–5.8.9.12 M6 सीताया( Ś3 D8 °यां ) गुणविस्तरं. —c) Ñ2 B2–4 T1.2 G3 M3.5.6.10 अतो ( for ततो ). M1 इत्यतो गृह्य वैदेहीम्. —d) B2 पुनर् ( for अहम् ). Ñ2 अयोध्यायां समागतः. —For $9^{cd}$, Ś1.3 Ñ1 V1 D1–5.8.9.12 subst. :

833* ततस्तामहमादाय स्वां पुरीं पुनरागतः ।

[ Ś1.3 D8.12 पुनर् ( for अहम् ). ]

10 Ś2 om. $10^{ab}$ ( cf. v.l. 8 ). —a) Ś1.3 D8.12 जाता; V3 इयं ( for अयं ). Ñ V1 T G2.3 M3 च; Cv.g.k.t as in text ( for तु ). D5 T3.4 सु- ( for मे ). M1 मे॒तु ( by transp. ). Ñ2 D1–5.9 T3.4 शोको; M1 नादः; M6 दाहः ( for वादः ). Ś1.3 Ñ1 V1.3 D8.12 G2 महाशंका( Ñ1 V1 °शोको; G2 °वादः ); D6.7 [ ऽ ]पवादश्च; Cg.k.t as in text ( for महान्वादः ). B अयं महानधर्मो मे; M8 ततो मिथ्याभिशापेन. —b) B4 परि-; M1 मयि; Cv.t as in text ( for हृदि ). Ś1.3 V3 D8.9.12 हृदि शल्यमिवार्पितं( V3 °ता ); Ñ V1 D1–5 T3.4 हृदि शल्य इवार्पितः. —$10^{cd}$ = $3^{ab}$. —c) D1–5.9 T3.4 घोरा ( D2.5.9 घोरो; T3.4 वृथा )पवादः. Ñ V1 D1–5.9 T3.4 सीतायाः ( for सुमहांस् ). —d) D7 ततो ( for तथा ). B2 जानपदस्य. Ñ V1 D1–5.9 T3.4 पौरजा( Ñ V1 D9 °ज )नपदैः कृ( D1.4 °दैवं )तः. ❀ Cv: अयं त्वित्यादि । अयं सर्वप्रकारपरिशुद्धः सीतापरिग्रह अन्ततो गत्वापवादः संवृत्तः । ततो मिथ्याभिशापेन शोकश्च हृदि वर्तते । किमेवमपवादः संवृत्त इति चेत्, पौरापवादः सुमहान् । स्तवेनानुनयेन (?) ।; Cg: अयं त्विति । महान्वाद इति, वर्तत इति शेषः । शोकश्चेति, तच्छ्रवणादिति शेषः ।; Ck: अयं त्विति । तत्त्वार्थे प्राक्प्रतिपादितरीत्या स्थित इति शेषः । महान्वाद इति, वर्तत इति शेषः । शोकश्चेति तच्छ्रवणादिति शेषः ।; Ct: अयं स्थिति । प्राक्प्रतिपादितरीत्या तत्त्वार्थेऽन्यस्मिन्स्थितेऽपीति शेषः । महान्वादो वर्तते निन्दा वर्तते । तच्छ्रवणाच्छोकश्च हृदि वर्तते. ❀ —After 10, Ś V3 D8.9.12 ins. the line of $3^{cd}$ ( var. ).

[ Ś D8.9.12 मम; V3 स च ( for मयि ). D9 सर्वे- ( for स मे ). ]

11 a) T1.2 G3 M3 जायेत; T3.4 वर्तेत ( for गीयेत ). M1 अकीर्तिर्जायते यस्य . —b) T4 भूपस्य ( for भूतस्य ). D5 नरस्य यस्य कस्यचित्. —c) D9 तपति ( meta. ) ( for पतति ). D7 [ अ ]थ धर्मात्स; G1 समान्लोकान् ( for [ अ ]धमाँल्लोकान् ). Ś V3 D8.12 वसते ह्य( D12 [ with hiatus ] अ )धमे लोके; Ñ1 निलयं पद्यते तेन; Ñ2 B1.2.4 निरये पच्य( B2 गम्य )ते तेन( Ñ2 तावद् ). —d) Ñ1 V1 D2.9 T3.4 शब्दोस्य; Ñ2 B2–4 सा तस्य( B4 सौम्य ); B1 शास्त्रे प्र-; D7.10.11 शब्दः प्र-; T1.2 G3 M1.3 शब्दस्तु ( for शब्दः स ). Ñ V1 B1.2.4 D2.9 T3.4 गीयते ( for कीर्त्यते ). ❀ Cg: अकीर्तिरिति । भूतस्य प्राणिनः । शब्दोऽकीर्तिबोधकः ।; Ck: भूतस्येति प्राणिन इत्यर्थः । शब्द इति । अकीर्तिमतः पुरुषस्य नामेत्यर्थः ।; Ct: भूतस्य प्राणिनः । शब्दोऽकीर्तिबोधकः । अधमाँल्लोकान्निरयान्. ❀

12 D3 reads 12 twice ( var. ). —a) M4 om. ( hapl. ? ) अकीर्तिर्निन्द्यते. G1 निंदिता ( for निन्द्यते ). T3

G. 7. 48. 13
B. 7. 45. 14
L. 7. 47. 15

अप्यहं जीवितं जह्यां युष्मान्वा पुरुषर्षभाः ।
अपवादभयाद्भीतः किं पुनर्जनकात्मजाम् ॥ १३
तस्माद्भवन्तः पश्यन्तु पतितं शोकसागरे ।
न हि पश्याम्यहं भूयः किंचिद्दुःखमतोऽधिकम् ॥ १४
श्वस्त्वं प्रभाते सौमित्रे सुमन्त्राधिष्ठितं रथम् ।
आरुह्य सीतामारोप्य विषयान्ते समुत्सृज ॥ १५
गङ्गायास्तु परे पारे वाल्मीकेः सुमहात्मनः ।
आश्रमो दिव्यसंकाशस्तमसातीरमाश्रितः ॥ १६
तत्रैनां विजने कक्षे विसृज्य रघुनन्दन ।
शीघ्रमागच्छ सौमित्रे कुरुष्व वचनं मम ॥ १७
न चास्मि प्रतिवक्तव्यः सीतां प्रति कथंचन ।
अप्रीतिः परमा मह्यं भवेत्तु प्रतिवारिते ॥ १८

लोके (for देवैः). Ś $V_3$ $D_{8.12}$ कीर्तिरेवातुला लोके; Ṅ B $D_3$ (second time) अकीर्तिरधमा लोके; $V_1$ $D_{1.2.3}$ (first time)$_{-5}$ लोककीर्त्या त्वतुलया; $D_9$ लोके कीर्त्या च तुलया; $M_{2.5.7.9}$ कीर्तिर्हि कीर्त्यते देवैः. —$^b$) Ñ B $D_3$ (second time)$_{.6.7.10.11}$ $G_2$ $M_{8.10}$ लोकेषु; $T_{3.4}$ देवैश्च; $G_1$ देवेन (for देवेषु). Ñ$_1$ गीयते; $M_{2.4.5.7.9}$ पूजिता (for पूज्यते). $V_1$ $D_{1.2.3}$ (first time)$_{.4.9}$ पूज्यंते त्रिदिवे नराः; $D_5$ त्रिदिवे पूज्यते नरः. —After 12$^{ab}$ (second occurrence) $D_3$ ins.; while Ñ$_2$ ins. after 13; whereas $B_{2.3}$ ins. after 14:

834* तत्किमत्र बहूक्तेन त्यजामि जनकात्मजाम् ।
लोकापवादाद्भीतोऽहं नोत्तरं दातुमर्हथ ।

[(l. 1) $B_2$ बहून्युक्ते; $D_3$ बहूक्ते तु. $B_3$ किमत्र बहुशोक्तेन (for the prior half).]

—$^c$) $D_{6.7.10.11}$ तु; $T_{3.4}$ $M_3$ हि (for च). $M_8$ कीर्त्यशोर्थं (sic) (for कीर्त्यर्थं च). $M_1$ महारंभाः. Ś Ñ$_2$ $V_3$ $B_2$ $D_3$ (second time)$_{.8.12}$ $M_6$ कीर्तेर्धं ($D_3$ °र्त्या ध; $M_6$ °र्तौ ध)र्मः प्रभवति; Ñ$_1$ $B_{1.3.4}$ G (ed.) कीर्तिर्धर्मः (G [ed.] °र्मं) प्रभवति; $V_1$ कीर्त्या चान्वसमारंभाद्; $D_{1.2.3}$ (first time)$_{-5}$ कीर्त्यर्थाश्च ($D_2$ °र्त्या वाथ) समारंभाः; $D_9$ कीर्त्या चाप्यासमारंभः. —$^d$) Ś $V_3$ $D_{8.12}$ $M_6$ वचो ह्येतन्; $V_1$ $D_{2.3}$ (first time)$_{.5.9}$ वासः ($D_5$ कीर्तिः) स्वर्गे; $D_{1.4}$ वासश्चैषां; $D_{6.7.10.11}$ सर्वेषां सु- (for सर्वं एव). Ñ B कीर्तिर्लोके प्र($B_1$ °केषु)शस्यते; $D_3$ (second time) कीर्त्या लोके प्रशस्यते. —After 12, Ś $V_3$ $D_{8.12}$ ins.

835* सर्वारम्भाश्च कीर्त्यर्थं क्रियन्ते सुमहात्मभिः
कीर्त्या सुखमिहाप्नोति अमुत्र च महद्यशः ।

[(l. 1) $V_3$ कीर्त्यर्थे. —(l. 2) Note hiatus between the two halves. $V_3$ [आ]युषम् (for सुखम्). $V_3$ (with hiatus) युवा लोके अमुत्र च (for the post. half).]

13 $^a$) $B_4$ अपि त्वं; $D_{2.9}$ अवश्यं; $D_6$ अथाहं (for अप्यहं). —$^b$) $B_2$ च (for वा). Ś $D_8$ पुरुषर्षभ; $D_{1-5.9}$ $T_{3.4}$ [अ]पि नरर्षभाः. —After 13, Ñ$_2$ ins. 834*

14 Ś$_{2.3}$ om. 14. —$^a$) Ś$_1$ Ñ $V_{1.3}$ B $D_{1-5.8.9.12}$ $T_{3.4}$ $M_6$ ते मां (for तस्माद्). —$^c$) Ś$_1$ $D_8$ [इ]ह; $D_2$ च (for हि). Ñ $V_1$ B $D_{1-5.9}$ $T_{3.4}$ [अ]तो (for [अ]हं). $D_{6.7.10.11}$ $T_{1.2}$ $G_{1.3}$ $M_{3.5.10}$ Cg.k.t भूतं; $G_2$ पूर्वं; $M_1$ घोरं (for भूयः). —$^d$) $M_1$ इतो (for अतो). Ṅ $V_1$ B $D_{1-5.9}$ $T_{3.4}$ दुःख($B_2$ सूक्ष्म)तरं (for दुःखमतो). Ñ$_1$ B मम; Ñ$_2$ $V_1$ $D_{1-5.9}$ $T_{3.4}$ नृणां (for ऽधिकम्). ❀ Cg.k.t : भूतमुत्पन्नम्. ❀ —After 14, $B_{2.3}$ ins. 834*.

15 $^a$) Ś $V_3$ $D_{3.12}$ स (for श्वस्). $G_{1.2}$ तु; $M_{1.4.6}$ तां; Ct as in text (for त्वं). $V_1$ $D_{1-5.9}$ प्रभाते तु ($V_1$ $D_1$ °ते च; $D_{3.4}$ °तेन) (for त्वं प्रभाते). —$M_5$ om. (hapl.) 15$^b$–17$^c$. —$^b$) Ś$_3$ $D_{8.12}$ सुमित्र- (for सुमन्त्र-). Ś $V_3$ $D_{8.12}$ $M_6$ -[अ]धिष्ठिते रथे (for -[अ]धिष्ठितं रथम्). —$^c$) Ś $V_3$ $D_{3.12}$ $M_6$ चारोप्य (for आरोप्य). $V_1$ transp. आरुह्य and आरोप्य. —$^d$) Ś $V_3$ $D_{8.12}$ परित्यज (for समुत्सृज).

16 $M_5$ om. 16 (cf. v.l. 15). —$^a$) $T_{1.2}$ $G_2$ $M_{6.8}$ Ck [अ]परे; Ct as in text (for परे). $B_2$ (marg. also) पश्चिमे; $B_3$ दक्षिणे (for तु परे). $M_1$ तीरदेशेषु (for तु परे पारे). ❀ Ck : अपरे पारे, अन्यस्मिंस्तीर इत्यर्थः।; Ct : परे पारे गङ्गोल्लङ्घनलभ्ये पारे. ❀ —$^b$) Ś Ñ$_2$ $V_{1.3}$ $D_{2.6.9-12}$ $T_{3.4}$ तु; $D_{1.4}$ च (for सु-). Ñ$_1$ $D_{3.5}$ वाल्मीकस्य (for वाल्मीकेः सु-). —$^d$) Ś $V_3$ $D_{3.12}$ तपस्विजनसं(Ś$_3$ $D_{8.12}$ °सु)प्रियः; $D_5$ नदीतीरसमाश्रितः. ❀ Ct : तमसासंज्ञं नदीद्वयमयोध्यासमीपे गङ्गार्वाक्तत्परपारे च । दिव्यसंकाशो दिव्यदेशसदृशः. ❀

17 $M_5$ om. 17$^{abc}$ (cf. v.l. 15). —$^a$) Ś$_2$ [ए]तां; $B_3$ [इ]मां (for [ए]नां). Ś विजये. Ś Ñ $V_1$ $B_{2.4}$ $D_{1-5.9}$ [ऽ]रण्ये; $B_1$ वन्ये; $B_3$ $D_{6.7.10.11}$ $T_{3.4}$ $M_{3.10}$ देशे; $D_{8.12}$ रम्ये (for कक्षे). —$^b$) Ñ$_2$ $B_{1.2.4}$ (all with hiatus) उत्सृज्य; $V_1$ $D_{1-5.9}$ ह्युत्सृज्य (for विसृज्य). $B_3$ जनकात्मजां. —$^c$) $V_3$ $M_6$ भद्रं ते (for सौमित्रे). —$D_6$ $G_3$ $M_3$ om. (hapl.) from 17$^d$ up to the prior half of 836*.

18 $D_6$ $G_3$ $M_8$ om. 18$^{ab}$ (cf. v.l. 17). $M_7$ om. (hapl.) 18–20. —$^a$) $D_2$ त्वया (for न च). Ś $D_8$ [अ]स्ति; $B_1$ [अ]पि (for [अ]स्मि). Ś $D_{8.12}$ $G_1$ -वक्तव्यं (for -वक्तव्यः). —$^b$) $B_4$ कदाचन. ❀ Ct : सीतां प्रति सीतापरित्यागमुद्दिश्य. ❀ —After 18$^{ab}$, $D_{6.7.10.11}$ T G $M_{1-5.8-10}$ ins.:

836* तस्माद्गच्छस्व सौमित्रे नात्र कार्या विचारणा ।

[$D_6$ $G_3$ $M_3$ om. up to the prior half. $D_{7.10.11}$ $T_{3.4}$ त्वं गच्छ; $M_{2.4.9}$ गच्छैव (for गच्छस्व). $M_1$ भद्रं ते (for सौमित्रे).]

G. 7. 83. 7 B. 7. 76. 26 L. 7. 79. 8 त्वं मे बहुमतो राम गुणैर्बहुभिरुत्तमैः ।
अतिथिः पूजनीयश्च मम राजन्हृदि स्थितः ॥ ९
सुरा हि कथयन्ति त्वामागतं शूद्रघातिनम् ।
ब्राह्मणस्य तु धर्मेण त्वया जीवापितः सुतः ॥ १०
उष्यतां चेह रजनीं सकाशे मम राघव ।
प्रभाते पुष्पकेण त्वं गन्ता स्वपुरमेव हि ॥ ११
इदं चाभरणं सौम्य निर्मितं विश्वकर्मणा ।
दिव्यं दिव्येन वपुषा दीप्यमानं स्वतेजसा ।
प्रतिगृह्णीष्व काकुत्स्थ मत्प्रियं कुरु राघव ॥ १२
दत्तस्य हि पुनर्दानं सुमहत्फलमुच्यते ।
तस्मात्प्रदास्ये विधिवत्तत्प्रतीच्छ नरर्षभ ॥ १३

नरेश्वरं; $T_1$ $G_3$ $M_3$ महायशाः (for महातपाः). —$^c$) $\tilde{N}_1$ $D_{2.3.5.9}$ $T_3$ महाभाग; $V_3$ marg.; $B_3$ रघुश्रेष्ठ; $D_{1.4.12}$ $T_{1.2}$ $M_{3.5}$ नरव्याघ्र (for नरश्रेष्ठ).

9 Ś $V_3$ $D_{8.12}$ L (ed.) read $9^{ab}$ twice. $V_3$ reads in marg. $9^a$. —$^a$) L (ed., second time) एवं (hypm.) (for मे). Ś $V_3$ $D_{8.12}$ (all second time) वीर; $\tilde{N}_2$ $V_3$ $B_{1-3}$ नित्यं (for राम). $\tilde{N}_1$ $V_1$ $D_{1-6.9}$ $T_3$ त्वं हि ($D_6$ मे) नित्यं ($\tilde{N}_1$ °त्यो) बहुमतो ($D_{1.4}$ महाभाग); $B_4$ त्वं हि राम महाबाहो. —$^b$) $B_1$ श्चावृतः (for उत्तमैः). Ś $V_3$ $D_{8.12}$ (all first time) कर्मभिर्लोकविश्रुतैः; $D_{1.4}$ गुणैश्च बहुभिर्वृतः. ❀ Ct : उत्तमैर्बहुभिर्गुणैस्त्वं बहुमतो बहुमान्यः । अतिथित्वाच्च पूज्यः. ❀ —After $9^{ab}$ (first occurrence), Ś $V_3$ $D_{8.12}$ ins. :

1129* तथा गतिश्च सर्वेषां मुनीनां दीप्ततेजसाम् ।

—$^c$) $B_1$ श्लाघ्यश्च (for अतिथिः). $D_1$ [s]सि (for च). —$^d$) $D_5$ मे स (for मम). Ś $\tilde{N}$ V B $D_{2.3.5.8.9.12}$ $T_3$ $M_{3.6}$ नित्यं (for राजन्). $D_{1.4}$ राम नित्यं महाद्युते. ❀ Cg : हृदि स्थित इति ।, so also Ck.t. ❀

10 $^{ab}$) $D_5$ $M_7$ पुरा; Cg सुरा (as in text). Ś $D_{8.12}$ तु; $V_{1.3}$ च (for हि). $G_2$ (with hiatus) त्वा (for त्वाम्). $D_{1.4}$ सुरैश्च कथितं ह्येतच् (for $^a$). $G_{1.3}$ $M_{1.5.7.8}$ स्म त्वां गतं (for त्वामागतं). $\tilde{N}_1$ $V_1$ $D_{1-5.9}$ $T_3$ शूद्रघातिनमागतं (for $^b$). —After $10^{ab}$, $T_4$ ins. गायत्रीचतुर्विंशत्यक्षरम्. —$^c$) Ś $\tilde{N}$ $V_{1.2}$ $B_{1.3}$ $D_{2.3.5.6.8.9.12}$ $T_3$ $G_{1.2}$ $M_{6-9}$ च; $D_{1.4}$ स्त्र-; $M_5$ हि; $M_{10}$ स (for तु). —$^d$) $\tilde{N}$ $V_{1.2}$ $B_{1-3}$ $D_{1.3.4.9}$ T $M_{3.6}$ सं ($T_3$ वै) जीवितः; $D_5$ स्वनुजीवितः (hypm.); $M_8$ जीवान्वितः; Cm.g.k.t as in text (for जीवापितः). $D_{2.9}$ सुतः संजीवितस्त्वया. —For $10^{cd}$, $B_4$ subst. :

1130* ब्राह्मणार्थे पराक्रान्तं स च बालोऽपि जीवितः ।

—After 10, $\tilde{N}_2$ $V_2$ $D_7$ ins.; while $B_2$ $D_{6.10.11}$ ins. after $11^{ab}$; whereas K (ed.) ins. after 11 :

1131* त्वं हि नारायणः श्रीमाँस्त्वयि सर्वं प्रतिष्ठितम् ।
त्वं प्रभुः सर्वभूतानां पुरुषस्त्वं सनातनः ।

[(l. 2) $V_2$ सर्वदेवानां (for °भूतानां).]

—After 10, $D_{1.4}$ ins. :

1132* राजधर्मेण वर्धन्ते धनमायुर्यशोबलम् ।

11 $D_{1.4}$ om. $11^{ab}$. —$^a$) $\tilde{N}_2$ उषित्वा; $B_3$ उष्यैतां. $\tilde{N}_1$ *इ; $V_2$ अद्य; $T_{1.2}$ $G_{1.3}$ $M_1$ चैव; $M_3$ चैक- (for चेह). $V_1$ $D_{5.7.9.10}$ T $G_{2.3}$ $M_{1.2-6.8-10}$ रजनी. Ś $D_{8.12}$ रजनीं चेह (by transp.). —$^b$) Ś $B_1$ $D_{8.12}$ (except $B_1$, all with hiatus) आवासे; $B_2$ सकामो; $M_1$ सकाशं (for सकाशे). —After $11^{ab}$, $B_2$ $D_{6.10.11}$ ins. 1131*; while $D_8$ reads 13 and $12^{ab}$ (including star passage). —$D_{12}$ om. (hapl.) $11^c$–12. —$^c$) Ś $\tilde{N}$ $V_{1.2}$ (reads in marg. up to मे in $^d$).$_3$ $B_{1.3}$ $D_{1-5.8.9}$ $M_6$ [अ]सि; $B_2$ [अ]पि (for त्वं). —$^d$) $B_4$ $T_{1.2}$ $G_{1.3}$ $M_{1.3}$ गंतासि; $G_2$ गच्छ स्व-; $M_7$ गंता श्वः. $G_1$ $M_1$ पुनर् (for -पुरम्). $V_3$ च (for हि). Ś $\tilde{N}_1$ $V_1$ $D_{1-5.8.9}$ $T_3$ गंतायोध्यां महाद्यु($\tilde{N}_1$ $V_1$ $D_5$ $T_3$ °म)ते. —After 11, $D_8$ ins. a long passage relegated to App. I (No. 12); while K (ed.) ins. 1131*.

12 $D_{12}$ om. 12 (cf. v.l. 11). For sequence in $D_8$, cf. v.l. 11. —$^a$) $B_4$ राम; $T_1$ दिव्यं (for सौम्य). —$^b$) Ś $\tilde{N}$ V B $D_{1-5.8.9}$ $M_6$ सुकृतं (for निर्मितं). $D_3$ वि****; L (ed.) विश्वकर्मणः. —$D_8$ om.; $Ś_1$ reads $12^{c-f}$ in marg. —$^e$) $M_1$ भद्रं ते (for काकुत्स्थ). —$^f$) $M_7$ मे प्रियं; Ct as in text (for मत्प्रियं).

13 For sequence in $D_8$, cf. v.l. 11. —$^a$) $\tilde{N}$ $V_{1.3}$ B $D_{1-5.9}$ $T_{3.4}$ लब्धस्य; $G_1$ $M_2$ (after corr. *sec. m.* as in text).$_{10}$ युक्तस्य; Cm.g.k.t as in text (for दत्तस्य). $B_3$ $M_{2.10}$ च; $D_3$ तु (for हि). Ś $\tilde{N}_2$ $V_{2.3}$ $B_{1.2}$ $D_{6.7.10-12}$ Ct दाने; $D_8$ दानैः; $M_6$ सौम्य; Cm.g.k as in text (for दानं). —$^b$) $M_4$ अक्षयं; $M_6$ धारणं (for सुमहत्). $B_3$ पुण्यम् (for फलम्). Ś $\tilde{N}_2$ $V_2$ $B_1$ $D_{6-8.12}$ अश्नुते (for उच्यते). —After $13^{ab}$, Ś $V_{2.3}$ B $D_{6-8.10-12}$ S ins. :

1133* भरणे हि भवाञ्शक्तः सेन्द्राणां मरुतामपि ।

[Ś $V_2$ B $D_{8.12}$ तारणे; $M_6$ धारणे; Ct as above (for भरणे). $B_1$ भगवञ्; $B_3$ च भवाञ्; $T_{1.2}$ न भवाञ् (for हि भवाञ्). —$V_2$ $B_4$ om. from the post. half up to the prior half of 1134*. $G_3$ मारुताम्. $D_{6.7.10.11}$ स्नेहेन ($D_{10.11}$ फलानां) महतामपि (for the post. half) ❀ Cg : भरणेऽपि भवाञ्शक्तः फलानां महतामपि इति च पाठः. ❀ ]

—Then $V_2$ $B_4$ $D_{6.7.10.11}$ cont.; while $\tilde{N}$ $V_1$ $D_{1-5.9}$ ins. after $13^{ab}$ :

1134* त्वं हि शक्तस्तारयितुं सेन्द्रानपि दिवौकसः ।

तद्रामः प्रतिजग्राह मुनेस्तस्य महात्मनः ।
दिव्यमाभरणं चित्रं प्रदीप्तमिव भास्करम् ॥ १४
प्रतिगृह्य ततो रामस्तदाभरणमुत्तमम् ।
आगमं तस्य दिव्यस्य प्रष्टुमेवोपचक्रमे ॥ १५
अत्यद्भुतमिदं ब्रह्मन्वपुषा युक्तमुत्तमम् ।
कथं भगवता प्राप्तं कुतो वा केन वाहृतम् ॥ १६
कुतूहलतया ब्रह्मन्पृच्छामि त्वां महायशः ।
आश्चर्याणां बहूनां हि निधिः परमको भवान् ॥ १७
एवं ब्रुवति काकुत्स्थे मुनिर्वाक्यमथाब्रवीत् ।
शृणु राम यथावृत्तं पुरा त्रेतायुगे गते ॥ १८ G. 7. 83. 30 B. 7. 76. 36 L. 7. 79. 28

इति श्रीरामायणे उत्तरकाण्डे सप्तषष्टितम सर्गः ॥ ६७ ॥

[ V2 B4 om. for the prior half. ]

—$^{c}$) V3 यस्मात्. Ś3 प्रदद्ये; D7 दास्ये च; T1.2 G3 M3 दास्यामि (for प्रदास्ये). V3 तस्मात्त्वं; D2.9 विधिना (for विधिवत्).—$^{d}$) Ś Ñ1 V B1.3 D1 (before corr. as in B2).2–8.12 T1.2 G M1.2.4–10 प्रतीच्छस्व; B2.4 D9 T3.4 M3 प्रतीच्छ (B4 °च्छे) त्वं (for तत्प्रतीच्छ). Ñ V B1–3 D6.7.10.11 M6 नराधिप; G2 नरेश्वर; M7 नरोत्तम (for नरर्षभ).—After 13, Ś Ñ V B D1–7.9–12 T3 M3 G (ed.) L (ed.) ins. a long passage relegated to App. I (No. 12); while B (ed.) reads $14^{cd}$ within brackets for the first time followed by App. I [ No. 12 ] within brackets (except l. 1) repeating $14^{cd}$ (within brackets) in its proper place.

14 B (ed.) reads $14–15^{b}$ (repeating $14^{cd}$ within brackets). K (ed.) transp. $^{ab}$ and $^{cd}$ (followed by App. I [ No. 12 ]).—$^{a}$) Ś V3 D8.12 M6 स; M1.5.7.8 तं (for तद्).—$^{b}$) Ś V3 D8.12 M1.6 तस्मान् (for तस्य). V3 M6 महाद्युते: (for °त्मन:). K (ed.) मुनेराभरणं वरं.—B (ed.) repeats $14^{cd}$ here (cf. v.l. 13).—$^{c}$) V3 दीप्तम्. V3 भेष्यं (sic) (for चित्रं).—$^{d}$) D5 T4 पावकं; D6 भास्वरं (for भास्करम्). Ñ2 V2 B दीप्यमानमिवांशुभिः.—After 14, K (ed.) ins. App. I (No. 12).

15 B (ed.) reads $14–15^{b}$ (repeating $14^{cd}$ within brackets).—$^{a}$) B1 स प्रगृह्य. G2 तदा (for ततो). Ś Ñ V1.2 B D1–5.8.9.12 T3 [ऽ]गस्त्याद् (for रामस्).—$^{b}$) M3 उत्तमः (for °मम्). Ś D8.9.12 दिव्यमाभरणं ततः; Ñ1 V1 D1–5 T3 राघवस्तमृषिं ततः; Ñ2 V2 B1.2.4 राघवस्त्वृ (V2 B4 °मस्तमृ) षिसत्तमात् (B4 °मं); V3 B3 तच्च (B3 रामस्) तद्रत्नमुत्तमं.—$^{c}$) V3 अप्राप्तिस् (sic); Cm.g.k.t as in text (for आगमं). B2 द्रव्यस्य; D6.7.10.11 M4 दीप्तस्य (for दिव्यस्य).—$^{d}$) Ñ V1 B3.4 D1–5.9 T3 प्रष्टुं समु-; B1.2 प्रज्ञातुम् (for प्रष्टुमेव).—After 15, V2 reads $17^{ab}$.

16 $^{a}$) D2 इत्यद्भुतम्. D5 महाश्चर्यं; D6.7.10.11 T4 M6–8 Ct इदं दिव्यं; K (ed.) इदं दिव्य- (for इदं ब्रह्मन्).—D9 M9 om. (hapl.) $16^{b}–17^{a}$.—$^{b}$) Ñ1 D1.2.4.8 वपुष्मत्; D5 चक्षुष्मत् (for वपुषा). Ñ1 D1–5 T2.3 सु (D2 तु) मनोहरं; D6.7.10.11 T1.4 G3 M1.3 युक्तमद्भुतं; G2 °मूर्छितं (for युक्तमुत्तमम्). Ś V3 D8.12 वपुष्मंतमनुत्तमं; Ñ2 B2.4 पुष्पादिव मधुच्यु (B4 °क्रु) तं; V1 वपुष्मंतं मनोरमं; V2 B1.3 वपुर्विभ्रदनु (B3 °र्विद्रवमु) त्तमं. ❀ Ct : वपुषा संनिवेशविशेषेण युक्तम्. ❀—$^{c}$) D6.7 कदा. B4 (m. also) D3.6.7.10.11 वा (B4 हि) भवता (for भगवता). D8 प्रोक्तं (sic) (for प्राप्तं).—$^{d}$) Ñ2 V2 B वा कृतं; D4 चाहृतं; D6.7.10.11 वा हृतं. ❀ Cm.t : कथं केन प्रकारेण कुतो हेतोः केन पुरुषेणाहृतम् । दत्तम् ।; Cg : केन पुरुषेण वा हृतं उपहृतम् दत्तमिति यावत् ।; so also Ck. ❀

17 D9 M9 om. $17^{a}$ (cf. v.l. 16). V2 reads $17^{ab}$ after 15.—$^{a}$) Ñ2 V2 B1 D2.6–8.10.11 T2–4 G1 M1.2.6 कौतूहलतया. Ñ1 V1.2 B1.2 D1.3–5 T3 चैव (for ब्रह्मन्).—$^{b}$) Ś V3 D8.12 M6 तपोधन (D8 °नं); Ñ V1.2 B D1–5.9 T2.3 महा (D4 * *) मुने (Ñ2 °मते) (for महायशः).—$^{c}$) Ś D8 M1 आचार्याणां (for आश्च°). Ñ2 तु भूतानां; V3 B3.4 बहूनां वै (V3 च).—$^{d}$) M1 महान् (for भवान्). Ś Ñ V B D1–5.8.9.12 T3 M6 सन्निधिः (B3.4 निधिर्हि) परमो भवा (T3 महा) न्.—After 17, Ñ1 reads colophon of this Sarga.

18 $^{a}$) Ś B2 D1.4.6–9.12 T4 वदति (for ब्रुवति).—$^{b}$) Ñ1 V1 D1.3–5 अथाददे; Ñ2 V2 (m. also as in B3) B1.2 उदाहरत्; B3.4 उदीरयत्; D9 अब्रवीत् (subm.) (for अथाब्रवीत्). M1 महर्षिर्वाक्यमब्रवीत्.—D11 om. $18^{cd}$. G1 M10 read $18^{cd}$ before 68.1.—$^{cd}$) V2.3 B3.4 D1.4 T4 M2.5.10 राजन् (for राम). V3 पुरा-; M8 मया (for यथा-). M1 transp. यथा- and पुरा. M7 om. त्रेता. V2 D1.10 T1.2 G3 M1–9 Cm.k.t युगे; T4 शुभे; G1 वने; G2 प्रभो; M10 व्यये (for गते).—After 18, Ś Ñ1 V1.3 D1–5.7.9.12 T3 M3 ins.; while Ñ2 V2 B ins. only l. 1 after 18; whereas T2 ins. after $68.5^{ab}$ :

1135* द्वापरे समनुप्राप्ते वने यद्दृष्टवानहम् ।
आश्चर्यं सुमहाबाहो दानमाश्रित्य केवलम् ।

# ६८

G. 7.84. 1 B. 7.77. 1 L. 7.79.30

पुरा त्रेतायुगे ह्यासीदरण्यं बहुविस्तरम् ।
समन्ताद्योजनशतं निर्मृगं पक्षिवर्जितम् ॥ १
तस्मिन्निर्मानुषेऽरण्ये कुर्वाणस्तप उत्तमम् ।
अहमाक्रमितुं सौम्य तदरण्यमुपागमम् ॥ २
तस्य रूपमरण्यस्य निर्देष्टुं न शशाक ह ।
फलमूलैः सुखास्वादैर्बहुरूपैश्च पादपैः ॥ ३
तस्यारण्यस्य मध्ये तु सरो योजनमायतम् ।
पद्मोत्पलसमाकीर्णं समतिक्रान्तशैवलम् ॥ ४
तदाश्चर्यमिवात्यर्थं सुखास्वादमनुत्तमम् ।
अरजस्कं तथाक्षोभ्यं श्रीमत्पक्षिगणायुतम् ॥ ५

[ (l. 1) M3 रमणीयप्रदेशेस्मिन् ( for the prior half ). D5 वने तद्; T2 वने यं. —(l. 2) T2 तं; M3 मे ( for सु- ). Ś V3 D8.12 राम तत्रावलोकय( Ś2 °यन् ) ( for the post. half ).]

—After 18, M7 ins. :

1136* एवमुक्तवति राघवे तदा
विप्रवर्य इति तं जगाद ह ।
तच्छृणुष्व रघुवीर भूपते
वृत्तमद्भुततमं पुरातनम् ।

Colophon : Ś V1 B1 D1.3–5.8.12 om.; Ñ1 reads after 17. —*Sarga name* : Ñ1 आभरणप्रदानिकः; Ñ2 V3 B2 D9 आ( B2 स्वा )भरणप्रदानं( V3 D9 °नः ); V2 B3.4 अगस्त्यादाभरणला( B4 °लं )भः(V2 °लब्धः); D2 आभरणदानः. —*Sarga no.* ( figures, words or both ) : Ñ1 V2.3 D2 om.; Ñ2 B3 81; B4 T4 84; D6.7.10.11 T1.2 G M1–5.7.9.10 76; D9 80; T3 83; M6.8 75. —After colophon, T4 concludes with श्रीरामार्पणमस्तु । श्रीरामाय नमो नमः; G M1.5.8 with श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

## 68

Ś V1 B1 D1.3–5.8.12 cont. the previous Sarga. —Before 1, G1 M10 read $67.18^{cd}$.

1 $^{a}$) T1.4 G M वनं; Cm.g.k.t as in text ( for पुरा ). Ś D8.12 T3 कृत- ( for त्रेता- ). V2.3 B2 रम्ये; B1 [ऽ]रण्यं; B3.4 ( both with hiatus ) तात; D6.7.10.11 S ( T3 with hiatus ) राम; D8 त्वासीद् ( for ह्यासीद् ). —$^{b}$) V2.3 B2 काकुत्स्थ; B1 D6.7.10.11 T1.2.4 G M बभूव ( for अरण्यं ). M1.2.4.8.10 बहु( M1.2 भुवि ) विस्तृतं; Cg.k.t as in text ( for °विस्तरम् ). —$^{d}$) Ñ V1.2 B D1–5.9 T3 M3 मृगपक्षिवि-; D10.11 विमृगं पक्षि-; M10 निर्मितं पक्षि- ( for निर्मृगं पक्षि- ).

2 $^{a}$) Ś Ñ1 V1.3 B2 D1–5.8.9.12 M6.7 निः( Ś V3 D8.12 M6.7 निष् )पुरुषे; B4 निर्मनुजे ( for निर्मानुषे ). Ñ1 V1 M5 रम्ये; Cm.g.k.t as in text ( for ऽरण्ये ). —$^{b}$) B2 M2 ( after corr. *sec. m.* as in text ) कुर्वाणं ( for कुर्वाणस् ). —D8.12 om. ( hapl. ); Ś1 reads in marg. $2^{c}$–$5^{b}$ ( including star passage ). —$^{c}$) Ñ2 B3.4 D9 M6 च ( M6 प्र- )क्रमितुं; V2 चाक्रामितुं; T3.4 आश्रयितुं; Cv.m.g.k.t as in text ( for आक्रमितुं ). B3 सौम्यं. —$^{d}$) Ś V2.3 D3.5–7.10.11 T G M1.2.4.5.8.9 Cm.k.t तदा; M3 तथा; Cg as in text ( for तद् ). Ś Ñ V1 B3 D1–5.9 G1 M1.2.4.6–10 उपागतः ( M2.4.8.9 Cm °तं ); Cg.k.t as in text ( for उपागमम् ).

3 D8.12 om.; Ś1 reads 3 in marg. ( for both, cf. v.l. 2 ). —$^{b}$) M8 निर्देशन्; Cv.g as in text ( for निर्देष्टुं ). Ś Ñ V B D1–5.9 T3 नाशकं प्रभो ( V2.3 B तदा ); T1.2 G1 M3.5 नैव शक्नुमः; G2.3 नै न( G3 नैव ) शक्यते( G3 °∗ ); G ( ed. ) माशकं तदा ( for न शशाक ह ). ❀ Cv.g : न शशाक नाशक्नुवम् ।; Ct न शशाक न शक्तवान् । अपरोक्षे लिडार्षः. ❀ —$^{c}$) Ś2.3 फलैर्मूलैस्; V3 B1.3 फलमूल-; G2 damaged ( for फलमूलैः ). Ś Ñ V1 B2 D1–5.9 T3 तथा शा( D1.4 °थाशो )कैर्( Ś1.2 °खैर् ); B1 -सुखादैश्च ( for सुखास्वादैर् ). —$^{d}$) Ś2.3 lacuna after बहु. T1.2 M3 -मूलैश् ( for -रूपैश् ). B1 D3.6.7.10.11 T1.2.4 G M1.2.4–10 काननैः; D2.9 कांचनैः ( for पादपैः ). Ś1 बहुभिश्चैव संवृतं.

4 D8.12 om.; Ś1 reads 4 ( including star passage ) in marg. ( for both, cf. v.l. 2 ). —$^{a}$) T3 अस्य ( for तस्य ). Ñ2 B1.2 त( B2 अ )स्य मध्ये त्वरण्यस्य. —G1 transp. $4^{cd}$ and $5^{ab}$. G3 damaged for $4^{c}$ ( except पद्मो ). —For $4^{cd}$, Ś Ñ V B D1–5.9 T3.4 M1.6–8 subst.; D6.7.10.11 T1.2 G M2–5.9.10 ins. after $4^{ab}$ :

1137* हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ।
[ D1.4 -कूजितं ( for -शोभितम् ). ]

5 D8.12 om.; Ś1 reads $5^{ab}$ in marg. ( for both, cf. v.l. 2 ). T3.4 om. 5–6; M1 om. 5. G1 transp. $4^{cd}$ and $5^{ab}$. —$^{a}$) D2 तद्वा ( for तद् ). —D2 om. ( hapl. ) $5^{b}$–$6^{c}$. —$^{b}$) Ś Ñ V B1–3 D1.3.4.9 निःसत्त्वं वनमुत्तमं; B4 निःशब्दं च नरोत्तम; D5 निःसत्त्वं मुनिवर्जितं. —After $5^{ab}$, T2 ins. 1135*. —D5 om. $5^{c}$–6. —$^{c}$) M6 अक्षयं तद्; Cg as in text ( for अरजस्कं ). Ś1 V3 D6.7.10.11 M8.10 तदा; M7 तद् ( for तथा ). Ñ1 V1.2 B1.2 D1.3.4.9 T2 सरश्चाक्षोभ्य-सलिलं( Ñ1 V1 °वचनं; D1.3.4 °मचरं ); B3.4 सरस्तदक्षोभ्य-जलं. —$^{d}$) Ś V3 D8.12 M6 सरः; Ñ V1.2 B1.2 D3.9 नैक-; B3.4 बहु-; D1.4 नक्र- ( for श्रीमत् ). D1.4 -मत्स्य- ( for पक्षि- ). Ś1 V3 B1 M4.5.7 -[आ]वृतं ( for -[आ]युतम् ). T2 मृगपक्षिविवर्जितं.

तस्मिन्सरःसमीपे तु महदद्भुतमाश्रमम् ।
पुराणं पुण्यमत्यर्थं तपस्विजनवर्जितम् ॥ ६
तत्राहमवसं रात्रिं नैदाघीं पुरुषर्षभ ।
प्रभाते काल्यमुत्थाय सरस्तदुपचक्रमे ॥ ७
अथापश्यं शवं तत्र सुपुष्टमजरं क्वचित् ।
तिष्ठन्तं परया लक्ष्म्या तस्मिंस्तोयाशये नृप ॥ ८

तमर्थं चिन्तयानोऽहं मुहूर्तं तत्र राघव ।
विष्ठितोऽस्मि सरस्तीरे किं न्विदं स्यादिति प्रभो ॥ ९
अथापश्यं मुहूर्तात्तु दिव्यमद्भुतदर्शनम् ।
विमानं परमोदारं हंसयुक्तं मनोजवम् ॥ १०
अत्यर्थं स्वर्गिणं तत्र विमाने रघुनन्दन ।
उपास्तेऽप्सरसां वीर सहस्रं दिव्यभूषणम् ।
गान्ति गेयानि रम्याणि वादयन्ति तथापराः ॥ ११  G. 7. 84. 12 B. 7. 77. 12 L. 7. 79. 41

6 $D_5$ $T_{3.4}$ om. 6; $D_2$ om. $6^{abc}$ (for all, cf. v.l. 5). $V_2$ reads $6^{ab}$ in marg. —$^{a}$) Ś $V_3$ $D_{8.12}$ सरसस्तत् (for तस्मिन्सरः-). Ñ $V_{1.2}$ $B_{1.2}$ $D_{1.3.4.9}$ $M_3$ समीपे तस्य सरसो. —$^{b}$) $B_{3.4}$ (with hiatus) अपश्यमहम्; $D_{1.4}$ ददर्शाद्भुतम्. $D_6$ आश्रयं (for आश्रमम्). $Ñ_1$ $V_1$ $D_{3.9}$ ददर्शाहं महाश्रमं; $Ñ_2$ $V_3$ $B_{1.2}$ ददृशेहमथा($Ñ_2$ °शे महदा)श्रमं. —After $6^{ab}$, $B_2$ ins.:

1138* नानामृगसमाकीर्णं नानावृक्षसमाकुलम् ।

—$^{c}$) $G_3$ damaged from णं up to र्थं. —$^{d}$) $B_1$ -संवृतं; $B_3$ -संमितं (for -वर्जितम्).

7 $V_2$ reads $7^{ab}$ in marg. —$^{a}$) $M_6$ तदा (for तत्र). $Ñ_2$ $V_3$ $B_{1.2}$ तदा($V_2$ °त्रा)श्रमे वसानोहं. —$^{b}$) $T_3$ संस्मरन्; $M_7$ नैदाघे; Cm.g.k.t as in text (for नैदाघीं). Ś $V_3$ $D_{8.12}$ रघुनंदन; $Ñ_1$ $V_1$ $D_{1-5.9}$ $T_3$ $G_2$ पुरुषोत्तम; $Ñ_2$ $V_2$ $B_{1.2}$ रजनीं नृप (for पुरुषर्षभ). —$^{c}$) Ś $Ñ_1$ $V_1$ $D_{1-5.8.9.12}$ $T_3$ $M_6$ पुनर्; $Ñ_2$ $V_3$ B $D_6$ कल्यम्; Cv.k.t as in text (for काल्यम्). $M_7$ उत्थाप्य; Cv.m.g.k.t as in text (for उत्थाय). —$^{d}$) $D_{6.7}$ $T_{3.4}$ सरस्तीरमुपागमं. ❁ Cg.k.t: उपचक्रमे। अपरोक्षेऽपि लिडार्षः. ❁

8 $^{a}$) $Ñ_1$ $B_{1.3}$ तथा (for अथ). $Ñ_1$ $V_{1.2}$ B $D_2$ अहं (for शवं). $Ñ_1$ सर्वं; $Ñ_2$ $D_9$ अहं; $V_1$ $B_3$ $D_2$ श्रा($D_2$ शा)वं; $B_1$ शल्वं; $D_{1.5}$ श्वभ्रे; $D_{12}$ om. (for तत्र). $D_4$ अपश्यंस्तूयमानं तु. —$^{b}$) $M_1$ संपुष्टम् (for सुपुष्टम्). $Ś_1$ $V_3$ $D_{7.10.11}$ $M_{1.2.8.9}$ Cm.k.t अरजः; $Ñ_2$ $B_1$ $D_{3.8.12}$ $M_6$ अरुजं($D_3$ °जे); $T_4$ $G_{1.2}$ $M_{4.5.7}$ अरजं (for अजरं). $Ś_1$ $V_3$ $D_{1.5.8.12}$ शुचिः; $Ś_{2.3}$ $D_3$ शुचिं; $D_{2.9}$ शिवं (for क्वचित्). $V_2$ $B_{3.4}$ शवमुत्सृष्टमव्रणं; $B_2$ सुप्रकृष्टमरुक्कचित्; $D_4$ पुरुषं चाजरं(also च शुचिं) क्वचित्. —After $8^{ab}$, K (ed.) ins.:

1139* पङ्क्तिभेदेन पुष्टाङ्गं समाश्रितसरोवरम् ।

—$^{c}$) $V_2$ marg.; $B_1$ (m. also) विष्ठितं; $B_{3.4}$ शयानं (for तिष्ठन्तं). —$^{d}$) $M_6$ वाप्या स्थले; $M_8$ तोये तदा (for तोयाशये). Ñ $V_1$ $D_{1-5.9}$ $T_3$ सरसो नाति($D_5$ °वि)दूरतः; $V_2$ $B_{1.2}$ समीपे सरसस्तदा; $B_{3.4}$ सरसस्तत्समीपतः.

9 $^{a}$) $G_3$ damaged for तमर्थं चिन्त. $Ś_{1.2}$ $V_3$ $B_1$ $D_{8.12}$ तद् (for तम्). $B_{2-4}$ तमहं चिंतयामास. —$^{b}$) Ś $D_{8.12}$ अपि; Ñ V B $D_{1-5.9}$ $T_3$ $M_6$ इव (for तत्र). —$D_{11}$ om. $9^{cd}$. —$^{c}$) $D_{3.5}$ धिष्ठितस्तु; $D_6$ $T_{2-4}$ $G_2$ $M_{2.4.10}$ विस्मितोस्मि; $T_1$ $G_3$ $M_3$ उषितो°; $M_1$ स्थितोस्म्यहं (for विष्ठितोऽस्मि). $G_1$ विस्मितः सरसस्तीरे. —$^{d}$) $D_{3.5}$ इदं; $D_{6.7.10}$ त्विदं (for न्विदं). $M_1$ किंचिदस्यामितप्रभे. —For $9^{cd}$, Ś Ñ V ($V_2$ reads before $9^{ab}$) B $D_{1.2.4.8.9.12}$ subst.:

1140* धिष्ठितं सरसस्तीरे किमिदं त्विति चिन्तयन् ।

[ Ñ $V_{1.3}$ $B_1$ विष्ठितः; $V_2$ $B_2$ विष्ठितं; $B_{3.4}$ तिष्ठंतं; $D_{1.2.4.9}$ धिष्ठि($D_2$ तिष्ठ)तस् (for धिष्ठितं). $Ñ_1$ $V_1$ $D_{1.2.4.9}$ तु सरस् (for सरसस्). $B_{3.4}$ एतद् (for इदं). Ś $V_2$ $B_{3.4}$ $D_{8.12}$ इति; $B_1$ व्यति- (for त्विति). $B_{2-4}$ विस्मितः; $D_{1.4}$ तर्कयन् (for चिन्तयन्).] —Thereafter, $B_{3.4}$ cont.; while $V_2$ ins. after $9^{ab}$ (transp.):

1141* न तत्र मानुषाः केचित्तद्वनं हि सुदारुणम् ।
निःसंपातं समन्ताच्च सर्वथाहं कुतूहली ।

[ (l. 2) $V_2$ सर्वथा सकुतूहलः; $B_4$ सर्वसत्त्वविवर्जितं (for the post. half). ]

10 $^{a}$) $T_{1.2}$ $G_3$ तदा; $M_6$ तत्र (for अथ). Ś $Ñ_2$ $V_3$ B $D_{8.12}$ $T_{1.3}$ $G_3$ $M_3$ मुहूर्तेन; $D_{5.7}$ $M_{5.7}$ मुहूर्तं तु (for मुहूर्तात्तु). —$^{b}$) $M_2$ -विक्रमं (for -दर्शनम्). —$V_1$ om. $10^{cd}$. —$^{d}$) $M_1$ असंयुक्तं (for हंसयुक्तं). $B_4$ मनोरमं; $D_5$ मनोहरं (for मनोजवम्). —After 10, Ś $V_3$ $D_{8.12}$ ins. l. 1 of 1143*.

11 $^{a}$) $T_4$ अत्यर्थस्वग्विणं तत्र. —$^{b}$) $M_1$ विमानं (for विमाने). —$^{d}$) $M_{2.4.5.10}$ -भूषितं (for -भूषणम्). —For $11^{abcd}$, $Ñ_1$ $V_1$ $D_{1-5.9}$ subst.; while $T_2$ ins. l. 2 only after $11^{cd}$:

1142* तत्रापश्यं सहस्रं तु विमानेऽप्सरसां नृप ।
वपुष्मतीनां तत्सर्वं रमयन्ति स्म तं नरम् ।

[ (l. 1) $Ñ_1$ $V_1$ त($V_1$ अ)त्राप्यर्ध-; $D_{2.9}$ तथाध्यर्धं($D_9$ °विधं); $D_{3.5}$ तत्राध्यर्ध- (for तत्रापश्यं). $D_{2.9}$ च (for तु). $D_1$ विमानमप्सरसां (hypm.). —After l. 1, $D_{1.4.5}$ ins.:

1142(A)* तासां मध्ये स्थितः सौम्य पुरुषो देवराडिव ।

—(l. 2) $D_{2.9}$ तत्रस्थं; $D_{3.5}$ $T_2$ तत्संस्थं (for तत्सर्वं). $D_1$ वपुष्मत्यश्च ताः सर्वा (for the prior half). ]

G. 7. 84. 13
B. 7. 77. 15
L. 7. 79. 42

पश्यतो मे तदा राम विमानादवरुह्य च ।
तं शवं भक्षयामास स स्वर्गी रघुनन्दन ॥ १२
ततो भुक्त्वा यथाकामं मांसं बहु च सुष्ठु च ।
अवतीर्य सरः स्वर्गी संस्प्रष्टुमुपचक्रमे ॥ १३
उपस्पृश्य यथान्यायं स स्वर्गी पुरुषर्षभ ।
आरोढुमुपचक्राम विमानवरमुत्तमम् ॥ १४
तमहं देवसंकाशमारोहन्तमुदीक्ष्य वै ।
अथाहमब्रुवं वाक्यं तमेवं पुरुषर्षभ ॥ १५

whereas Ñ2 V2 B subst. for $11^{abcd}$; Ś V3 D8.12 ins. l. 1 after 10 and subst. l. 2 for $11^{ab}$ :

1143* अध्यर्धंस्त्रीसहस्त्रं तु श्रीमदप्सरसां तदा ।
तस्मिन्विमाने काकुत्स्थ स्वर्गिणं तमनामयम् ।

[ (l. 1) V3 अध्यास्त (for अध्यर्ध-). B2 च (for तु). Ś Ñ2 D8.12 तथा (for तदा). —(l. 2) Ñ2 B1 स्रग्विणं चापि (for स्वर्गिणं तम्). B2 मनोरमं (for अनामयम्). B3 रमयंति स तं किल (for the post. half).]

—e) Ś V3 D8.12 M2.6.10 जगुर्गेयानि; Ñ2 V1.2 B2–4 D2.3.5–7.9–11 T G2 M3.5.7.9 गायंति दिव्य- (D2.9 यानि; D5 दिव्यं; D7 T3 M9 गेयं; D10.11 काचिद्; T4 M5.7 गेय-); B1 गायंति गेयानि (hypm.); G3 * * * (damaged) दिव्य- (for गान्ति गेयानि). Ś Ñ1 V3 B1 D1.2.4.8.9.12 M6 दिव्यानि; Ñ2 V1.2 B2–4 T1.2 G2.3 M3 -गेयानि; D3 -गेयं च; D5 गेयेन (for रम्याणि). —f) T4 ताडयंति; M6 वादयंत्यस् (for वादयन्ति). Ś Ñ2 V2.3 B D8.12 स्म च (for तथा). M7 [अ]परे (for [अ]पराः). —After 11, Ś V3 D3.6–8.10–12 T G M1–6.8–10 ins.; while Ñ V1.2 B D1.2.4.5.9 M7 ins. l. 1 only after 11 :

1144* मृदङ्गवीणापणवान्नृत्यन्ति च तथापराः ।
अपराश्चन्द्ररश्म्याभैर्हेमदण्डैर्महाधनैः ।
दोधूयुर्वदनं तस्य पुण्डरीकदलेक्षणम् ।
ततः सिंहासनं हित्वा मेरुकूटमिवांशुमान् ।

[ Ś D8 om. (hapl.) l. 1. T2 reads l. 1 twice. —(l. 1) T1.2 (first time) G3 M3 क्ष्वेलयंति तथा चान्या (for the prior half). D12 G1.2 M2.4–6.10 ननृतुश्; M1 नृत्यंतश् (for नृत्यन्ति). T1 G3 M3 [अ]पि (for च). D1.4 समीपगाः; D5 M1.7 तथापरे; G1 [अ]प्सरोगणाः (for तथापराः). —(l. 2) T3 -रम्यैश्च (for -रश्म्याभैर्). ❀ Cm.t : चन्द्ररश्म्याभैः चामरैरिति शेषः. ❀ Ś D3.8.12 T1.4 G1.3 M3.5 च(Ś D8.12 स) चामरैः; M8 महायनैः (for महाधनैः). —(l. 3) Ś1 V3 D8.12 विविजुर्; Ś2.3 विव्यजुर् ; D3 वीजंति; T1.3 G2.3 M3.5.6.8.10 दुधुवुर् (for दोधूयुर्). ❀ Ct : दोधूयुरिति यङ्लुगन्तस्य. ❀ T2 transp. वदनं and तस्य. D7.11 T4 -दलेक्षणाः; D10 T1–3 G1 M1–4.10 -निभेक्षणं(D10 T3 M3 °णाः) (for -दलेक्षणम्). —D3 reads l. 4 in marg. —(l. 4) T1.2 G3 M3 त्यक्त्वा; M1 कृत्वा (for हित्वा). M2.4.10 हेम- (for मेरु-). Ś V3 D8.12 -कूटाद्; D7.10.11 M1 -कूट (for -कूटम्). ]

12 a) G3 तथा (for तदा). Ś D8 वै मम पुरो; M6.9 मम काकुत्स्थ (for मे तदा राम). ❀ Ck.t : पश्यतो मे । समक्षमिति शेषः. ❀ Ñ V1.2 B D1–5.9 T3 अथापश्यमहं तस्माद् (V1 घोरं); V3 D12 मे(D12 स) पश्यतो मम पुरो. —b) M1 विमानम् (for विमानाद्). Ś Ñ1 V3 D8.12 M7 सः; Ñ2 तत् ; V1 D1.4 ह; V2 B1–3 तं; D2.9 तु; M6.9 वै (for च). —c) Ś D8.12 भक्ष्यं(Ś1 °क्षं) च; M1.4.6 तच्छवं (for तं शवं). V2 भक्षमाणं तं (for भक्षयामास). —d) B1 स्वर्गी च; G1.2 M1.4.5 सर्वं हि (for स स्वर्गी). —For $12^{cd}$, Ñ V1 B1.2 D1–5.9 T3 subst. :

1145* स्वर्गिणं भक्षमाणं च शवं रघुकुलोद्वह ।

[ V1 B1 स्रग्विणं; T3 स्वर्गिणा (for स्वर्गिणं). Ñ V1 भक्षयानं; D2.3.5 भक्षयंतं; T3 भक्ष्यमाणं (for भक्षमाणं). Ñ1 D3 (m.) T3 तं; Ñ2 B1 तु; D3 om. (subm.); D5 तत् (for च). Ñ1 स्वं (for शवं). T3 भूमौ रघूत्तम (for रघुकुलोद्वह). ]

13 a) Ś V3 D8.12 भक्षयित्वा; T1.2 G3 M3 तथा भुक्त्वा (for ततो भुक्त्वा). —b) Ñ1 B4 च बहु (by transp.); V1 T3 सुबहु- (for बहु च). Ñ1 V1 T3 -पीवरं (for सुष्ठु च). Ñ2 D1–7.9–11 T2 -सुपीवरं; B3 -रसं बुधः (for च सुष्ठु च). —D1.4 om. $13^{c}$–14. D3 reads $13^{cd}$ after 14. —c) B1 सोवतीर्य. D8 सुरः; M6.9 ततः; M7 च स (for सरः). V3 B1 D5 ततः(D5 सरः) स्रग्वी; G1 सरस्यस्मिन्. —d) Ś V3 D8.12 तदो(V3 °तो)पस्पृष्टवान्नृपः; Ñ1 V1 D2.3.5 T3 स्पृ(D3.5 स्पृ)ष्ट्वारोहदपः(Ñ1 °त्पयः; D2 °दयं; D5 °दथो) पुनः; Ñ2 V2 B1 ततश्चा(B1 °स्ता)पोस्पृशत्तदा; B2 तदपोपस्पृशत्तदा; B3.4 (both with hiatus) उपस्प्र(B3 °स्त्र)ष्टुं प्रचक्रमे; D9 प्रवेष्टुमुपचक्रमे; M6.9 सरश्चोपास्पृशत्स्वयं.

14 Ñ1 V1 D1.2.4.5.9 T3 om. 14 (for D1.4, cf. v.l. 13). V3 om. $14^{ab}$. —a) D3 अपः (for उप-). D8.12 T1 यथान्याय्यं. —b) B1 स्रग्वी (for स्वर्गी). Ś D8 रघुसत्तम; Ñ2 V2 B1.2 D6.7.10–12 M6.7.9 रघुनंदन; K (ed.) रघुपुंगव (for पुरुषर्षभ). —D12 reads $14^{c}$–$15^{a}$ twice. —c) M6.9 प्रारोढुम् (for आरोढुम्). —d) Ñ2 V2 B तद्वि(B2 तं वि)मानमनुत्तमं. —After 14, D3 reads $13^{cd}$.

15 D12 reads $14^{c}$–$15^{a}$ twice. —a) V3 B1 तदहं; B2–4 ततोहं; M9 ततस्तं (for तमहं). —b) Ś D8.12 आरूढं सम्- (D12 तम्) (for आरोहन्तम्). V3 M6 अवेक्ष्य; G1 उपेत्य (for उदीक्ष्य). Ñ V1.2 B1 D1–5.9 आरोहंतं(D1 °हं च) श्रियान्वितं; B2–4 अवोचंतं श्रियान्वितं(B3 निशम्य तु; B4 विशांपते); G3 आरो * * समीक्ष्य वै; M9 आरोहं * * वेत्य वै. —B2–4 om. $15^{cd}$. —c) T1.2 G3 M3 अहं तदा(G3 °था);

को भवान्देवसंकाश आहारश्च विगर्हितः ।
त्वयायं भुज्यते सौम्य किमर्थं वक्तुमर्हसि ॥ १६

आश्चर्यमीदृशो भावो भास्वरो देवसंमतः ।
आहारो गर्हितः सौम्य श्रोतुमिच्छामि तत्त्वतः ॥ १७ G. 7. 84. 18 B. 7. 77. 20 L. 7. 79. 47

इति श्रीरामायणे उत्तरकाण्डे अष्टषष्टितमः सर्गः ॥ ६८ ॥

M5 यथार्हम् ; M8 यथाहम् ; M9 * * * म् ; K (ed.) विमानम् (for अथाहम्). ❀ Cg : अहमित्यस्य क्रियाभेदाद्भेदः. ❀ —d) D6.7.10.11 M4 तमेव; T1.2 G3 स्वर्गिणं; T4 ममेयं (sic) (for तमेवं). G2 पुरुषोत्तम (for पुरुषर्षभ). —For 15cd, Ś V3 D8 subst. :

1146* श्रोतुमिच्छामि कामं त्वामित्येवं वाक्यमब्रुवम् ।

[ V3 transp. श्रोतुमिच्छामि and कामं त्वाम्. V3 (with hiatus) इत्येतद्. ]

—For 15cd, Ñ V1.2 B1 D1–5.9.12 T3 M6 subst. :

1147* कथय श्रोतुमिच्छामीत्यवोचं परमं वचः ।

[ Ñ1 V1 D3.5 M6 कामया; D1.4 आश्चर्याच्; D2 निष्कामं; D9 निकामं; D12 कामं कं; T3 काम्यया (for कथय). V1 D1.4 ह्यवोचं (for [इ]त्यवोचं). B1 पुरुषर्षभं. Ñ2 V2 [इ]त्यवदं पुरुषर्षभ; D2.5.9 (all with hiatus) इत्यवोचं परं वचः (D5 °रंतप); D12 M6 (all with hiatus) इत्येतद्वाक्यमब्रवीत् (M6 °मुक्तवान्) (for the post. half).]

16 b) B3.4 कर्म चेदं विगर्हितं. —c) Ś V3 B2–4 D8.12 T1.2 G3 M3 सं-; Ñ1 D3.5 तु; V1 D2.9 च; D1.4 न; D6.7.10.11 T4 [इ]दं; T3 [अ]नु-; M7 यद्; M9 कं (for [अ]यं). B4 -भक्ष्यते; D5 भोजने (for भुज्यते). —d) V3 D7 किमिदं; B4 किमत्रं (for किमर्थं). Ś Ñ V B D1–5.8.9.12 T3 M6 क च वर्तसे (for वक्तुमर्हसि).

17 a) Ś Ñ1 V B2.4 D1–5.8.9.12 T3 कश्चा (Ñ1 क चा) यम्; Ñ2 B1.3 कस्त्वायम् ; D6.7.10.11 T4 कस्य स्याद् (for आश्चर्यम्). D1.3–5 ईश्वरो (for ईदृशो). D1.4.9 भागो; D2 भोगो (for भावो). —b) Ś V3 D8.12 भास्करो; D10.11 M9 आहारो; G2 भासा त्वं (for भास्वरो). Ś V3 D8.12 -संनिभः; Ñ V1.2 B D1–5.9 T3 M7 -नि(M7 -घ)र्मितः; D6.10.11 G1 -संमत; T4 M8 -संमितः; M6 -संभवः (for -संमतः). —c) D10.11 आश्चर्यं (for आहारो). Ñ1 पश्यते; V1 D1–4.9 T3 यस्य ते; D5 यश्च ते; D10.11 वर्तते (for गर्हितः). Ś V3 D8.12 चैव; Ñ1 V1 D2–5.9 T3 वीर; Ñ2 V2 B1 M6 चापि; B2 तस्तु (corrupt); B3.4 चायं; D1 तीरे (for सौम्य). —d) M6 सर्वशः; Cg.k.t as in text (for तत्त्वतः). —After 17, Ñ2 V2 B D7.10.11 G (ed.) ins.; while Ñ1 V1 D1.3–5.9 T2–4 M3 ins. l. 1 only after 17 :

1148* नाहमौपयिकं मन्ये तव भोज्यमिमं शवम् ।
इत्येवमुक्तः स नरेन्द्र नाकी
कौतूहलात्सूनृतया गिरा च ।
श्रुत्वा च वाक्यं मम सर्वमेत-
त्सर्वं तथा चाकथयन्ममेति । [5]

[ Ñ2 V2 B1.2.4 om. l. 1. —(l. 1) D10.11 T3.4 M3 भक्ष्यन् (for भोज्यम्). V1 D9 इदं (for इमं). B3 भोज्यं शवमिदं तव (for the post. half). —(l. 2) B4 नृपेंद्र (for नरेन्द्र). V3 (m. also) B1 स्वर्गी; B2(also as above).3 स्वर्गी; B4 सिद्धः (for नाकी). —(l. 3) B2 प्रस्तुतया; G (ed.) प्रश्रितया (for सूनृतया). V2 B1.3.4 कौ(B3 कु)तूहल(B4 °लं)प्रसृतया (for कौतूहलात्सूनृतया). V2 तदा; B1 तु (for च). —(l. 4) B तु (for च). B1 एव (for एतत्). —(l. 5) V2 तदा (for तथा). V2 विधिं मे (for ममेति). B1 सर्वं तदा कथितवान्विधि-वन्ममेति; B2.4 सर्वं तदाख्यापितवान्विधिं ने; B3 सर्वं तदासि कथित-समेति (corrupt). ];

whereas M7 ins. after 17 :

1149* श्रुत्वैवं मम वचनं सरोजनेत्रः
स स्वर्गी रघुवर मामिदं जगाद ।
श्रुत्वा तं सरसिजसंभवस्य वाक्यं
निश्वासस्खलपितमुखः प्रणम्य मूर्ध्ना ।

Colophon : Ñ1 V1 D1.4 om. —*Sarga name* : Ś Ñ2 V3 B2–4 D2.3.6.8.9 अगस्त्यवाक्यं; V2 D12 अगस्तिवाक्यं; B1 आभरणलाभः. —*Sarga no.* (figures, words or both) : Ś V2.3 B4 D2.12 om.; Ñ2 82; B1 D9 81; B2 83; D3.8 74; D5 44; D6.7.10.11 T1.2 G M1–5.7.9.10 77; T3 84; T4 85; M6 76; M8 78. —After colophon, D2 concludes with राम; D5 with श्रीगणे°; T4 with श्रीरामार्पणमस्तु । श्रीरामाय नमो नमः; G M1.2.5.8 with श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

## ६९

G. 7. 85. 1
B. 7. 78. 1
L. 7. 80. 1

श्रुत्वा तु भाषितं वाक्यं मम राम शुभाक्षरम् ।
प्राञ्जलिः प्रत्युवाचेदं स स्वर्गी रघुनन्दन ॥ १
शृणु ब्रह्मन्यथा वृत्तं ममैतत्सुखदुःखयोः ।
दुरतिक्रमणीयं हि यथा पृच्छसि मां द्विज ॥ २
पुरा वैदर्भको राजा पिता मम महायशाः ।
सुदेव इति विख्यातस्त्रिषु लोकेषु वीर्यवान् ॥ ३
तस्य पुत्रद्वयं ब्रह्मन्द्वाभ्यां स्त्रीभ्यामजायत ।
अहं श्वेत इति ख्यातो यवीयान्सुरथोऽभवत् ॥ ४
ततः पितरि स्वर्याते पौरा मामभ्यषेचयन् ।
तत्राहं कृतवान्राज्यं धर्मेण सुसमाहितः ॥ ५
एवं वर्षसहस्राणि समतीतानि सुव्रत ।
राज्यं कारयतो ब्रह्मन्प्रजा धर्मेण रक्षतः ॥ ६
सोऽहं निमित्ते कस्मिंश्चिद्विज्ञातायुर्द्विजोत्तम ।
कालधर्मं हृदि न्यस्य ततो वनमुपागमम् ॥ ७

## 69

Ñ$_1$ V$_1$ D$_{1.4}$ cont. the previous Sarga. D$_{12}$ begins with ॐ.

1 $^{a}$) B$_2$ सम्यक्; B$_4$ सर्वं; M$_6$ मह्यं (for वाक्यं). Ś$_3$ D$_{8.12}$ श्रुत्वा तु भाषितां वाचं. —$^{b}$) Ñ$_1$ V$_1$ D$_{1.3-5.9}$ मत्तो; D$_2$ स तद्; G M$_{2.4.5.10}$ इदं (for मम). Ś$_3$ D$_{8.12}$ शुभाक्षरां; Ñ$_1$ सुभास्वरं (for शुभाक्षरम्). M$_6$ वाक्यं वाक्यविशारदः. —D$_{11}$ reads from वा in $^{c}$ up to $^{d}$ in marg. —$^{c}$) B$_2$ उवाच प्रांजलिश्चेदं. —$^{d}$) B$_1$ स्रग्वी (for स्वर्गी). V$_2$ (before corr.) विस्तरेस्तदा; B$_{3.4}$ G (ed.) विस्तरेण मां (B$_4$ इ; G [ed.] हि); M$_{2.4.10}$ पुरुषर्षभ (for रघुनन्दन).

2 $^{a}$) D$_{6.7.10.11}$ पुरा (for यथा). —$^{b}$) Ś Ñ V B D$_{1-5.8.9.12}$ ममेदं (B$_{3.4}$ °इ) सुखदुःखजं; T$_{3.4}$ ममैतत्सुखदुःखदं. ❀ Cg.k : सुखदुःखयोरिति ।; so also Cm.t. ❀ —D$_{1.4}$ om. $2^{cd}$. —$^{c}$) D$_{10.11}$ अनति- (for दुरति-). D$_{6.7.10.11}$ T$_{1.3.4}$ च (for हि). Ñ$_1$ V$_1$ D$_{2.3.5.9}$ काम्या (D$_9$ °मा) हि दुरतिक्रम्या (D$_2$ °रितक्रामा). —$^{d}$) D$_2$ भो; G$_2$ मा (for मां). Ñ$_1$ D$_5$ मां पृच्छसि (by transp.); D$_3$ मा पृच्छसे (for पृच्छसि मां). V$_1$ यन्मां त्वं पृच्छसि द्विज. ❀ Cm : अनतिक्रमणीयमेतत् सुखदुःखकारणं यथा पृच्छति तथैव यथावृत्तान्तमनतिक्रम्य वक्ष्यामि तच्छृण्विति संबन्धः. ❀ —For $2^{cd}$, Ś V$_3$ D$_{8.12}$ subst. :

1150* कालो हि दुरतिक्राम्यो यत्त्वं मां पृच्छसे द्विज ।

[ D$_{12}$ कामो (for कालो). V$_3$ परिपृच्छसि (for पृच्छसे द्विज). ]; while, Ñ$_2$ V$_2$ (marg. also; before corr. as in B$_4$) B$_{1.2}$ M$_6$ subst. for $2^{cd}$ :

1151* यदिदं पृच्छसि मुने स कालो दुरतिक्रमः ।

[ V$_2$ B$_1$ यदि मां; M$_6$ यत्त्वं मां (for यदिदं). ]; whereas, B$_{3.4}$ subst. :

1152* दुरतिक्रममेतन्मे यत्पृच्छसि महामुने ।

3 $^{a}$) G$_2$ पिता (for पुरा). Ś D$_{5.8}$ वैदर्भिको; T$_{1.2}$ G$_3$ विदर्भको. —$^{b}$) D$_1$ पितामह- (for पिता मम). —$^{c}$) M$_2$ सुवेद (for सुदेव). B$_1$ T$_{1.2}$ G$_3$ व (B$_1$ वा) सुदेव इति ख्यातस्. —$^{d}$) Ś Ñ$_1$ D$_{1-4.8.9.12}$ धार्मिकः; V$_{1.3}$ B$_{1.2}$ D$_5$ G$_1$ (after corr. as in text) विश्रुतः (for वीर्यवान्).

4 $^{a}$) Ś$_{2.3}$ Ñ$_1$ B$_4$ D$_{8.12}$ राजन्; V$_2$ (before corr. as in text) B$_2$ विप्र; B$_1$ वीर; T$_{1.2}$ G$_3$ M$_3$ राज्ञो (for ब्रह्मन्). —M$_8$ om. (hapl.) $4^{b}$–$6^{c}$. —$^{b}$) Ñ$_2$ V$_2$ (before corr. as in B$_3$) B$_{1.2}$ (marg. also as in B$_3$) धर्मेण सुसमाहितं; B$_{3.4}$ स्त्रीद्वये समजायत. —$^{c}$) M$_9$ om. श्वेत. —$^{d}$) Ś D$_{8.11}$ M$_1$ वीर्यवान् ; B$_{3.4}$ M$_{6.7}$ कनीयान् (for यवीयान्).

5 M$_8$ om. 5 (cf. v.l. 4). V$_3$ damaged for $^{ab}$. —$^{a}$) Ñ$_1$ D$_{1-5.9}$ T$_3$ [उ]परते; M$_7$ निर्याते (for स्वर्याते). Ś Ñ$_2$ V$_2$ B D$_{8.12}$ दिवं यातेथ (Ś D$_{8.12}$ °ते च) पितरि; V$_1$ पितर्युपरते पौरा. —V$_2$ reads $5^{bc}$ in marg. —$^{b}$) Ś D$_{8.12}$ श्वेतं; V$_1$ राज्ये (for पौरा). B$_2$ D$_{12}$ T$_3$ M$_1$ अभिषेचयन्. D$_5$ पौरो मां समपेचयत्. —D$_9$ om. $5^{c}$–$6^{b}$. —$^{c}$) D$_{1.2.4.5}$ कारयन् (for कृतवान्). B$_{3.4}$ राज्यं चकार तत्राहं. —$^{d}$) V$_3$ D$_{10.11}$ धर्म्यं च (for धर्मेण). ❀ Cg : धर्म्यं धर्मादनपेतं यथा भवति तथा ।; so also Ck.t. ❀

6 M$_8$ om. $6^{abc}$ (cf. v.l. 4). D$_9$ om. $6^{ab}$ (cf. v.l. 5). —$^{b}$) K (ed.) ममातीतानि. Ñ V$_1$ D$_{1-4}$ बहूनि समुपाव्रजन् (Ñ$_2$ °क्रमन्; D$_2$ °द्रवन्); V$_2$ (before corr. as in B$_3$) B$_4$ बहूनि समतीयिते (B$_4$ °यिरे); B$_{1-3}$ बहूनि समति (B$_3$ °भि) क्रमन्. —$^{c}$) B$_3$ पालयते (sic); D$_{6.7.9}$ T$_3$ G$_3$ M$_3$ कारय (D$_9$ G$_3$ °यि) ता (for कारयतो). Ñ$_1$ V$_1$ B$_3$ D$_{1-4.9}$ मह्यं; B$_4$ मे वै (for ब्रह्मन्). —$^{d}$) D$_{5-7}$ T$_{1.2}$ G$_3$ M$_{1.3}$ रक्षिताः (M$_1$ °तुः); G$_2$ रंजतः (for रक्षतः). Ś V$_3$ D$_{8.12}$ M$_6$ प्रजाश्चैवा (M$_6$ °श्चाप्य) नुशासतः; Ñ$_1$ V$_1$ D$_{1.3.4}$ प्रजाः पालयतस्तथा; Ñ$_2$ V$_2$ B सम्यक्पालयतः प्रजाः; D$_{2.9}$ प्रजाश्च परिपालतः.

7 D$_2$ om. (hapl.?) 7. —$^{b}$) Ś Ñ$_1$ V$_1$ D$_{1.2.4.8.9.12}$ विज्ञातार्थो; Ñ$_2$ ज्ञात्वायुः स्वं; V$_2$ (marg.) विदितोस्मि; B$_{1.2}$ ज्ञात्वा चायुर्; B$_3$ त्रिदितास्वो (sic); B$_4$ M$_6$ विदितायुर्; Cg as in text (for विज्ञातायुर्). —V$_2$ reads from $7^{c}$ up to तपो (see var.) in $^{d}$ in marg. —$^{c}$) B$_3$ काले धर्मं; B$_4$ आत्ममृत्युं (for कालधर्मं). V$_2$ B$_{3.4}$ ततो ज्ञात्वा (for हृदि न्यस्य). Ś D$_{1.4.8}$ मरणे हृदयं कृत्वा; Ñ$_1$ V$_{1.3}$

सोऽहं वनमिदं दुर्गं मृगपक्षिविवर्जितम् ।
तपश्चर्तुं प्रविष्टोऽस्मि समीपे सरसः शुभे ॥ ८
भ्रातरं सुरथं राज्ये अभिषिच्य नराधिपम् ।
इदं सरः समासाद्य तपस्तप्तं मया चिरम् ॥ ९
सोऽहं वर्षसहस्राणि तपस्त्रीणि महामुने ।
तप्त्वा सुदुष्करं प्राप्तो ब्रह्मलोकमनुत्तमम् ॥ १०
ततो मां स्वर्गसंस्थं वै क्षुत्पिपासे द्विजोत्तम ।
बाधेते परमोदार ततोऽहं व्यथितेन्द्रियः ॥ ११
गत्वा त्रिभुवनश्रेष्ठं पितामहमुवाच ह ।
भगवन्ब्रह्मलोकोऽयं क्षुत्पिपासाविवर्जितः ॥ १२
कस्येयं कर्मणः प्राप्तिः क्षुत्पिपासावशोऽस्मि यत् ।
आहारः कश्च मे देव तन्मे ब्रूहि पितामह ॥ १३
पितामहस्तु मामाह तवाहारः सुदेवज ।
स्वादूनि स्वानि मांसानि तानि भक्षय नित्यशः ॥ १४ G. 7. 85. 14 B. 7. 78. 14 L. 7. 80. 13

D3.5.9.12 T4 मरणं हृदये कृत्वा; Ñ2 B1.2 मृत्युं कृत्वा च मनसि; M1 कामार्थधर्मान्त्रिन्यस्य. ❀ Cg : कालधर्मं हृदि न्यस्य स्वस्य मरणकालं ज्ञात्वेत्यर्थः ।; so also Ct. ❀ —$^{d}$) Ś V2 B3.4 D3.5.8.12 T G3 M5.7 तपोवनम्; B2 ध्रुवं वनम्. Ś V3 B4 D8.12 G1 M6 उपागतः (for उपागमम्).

8 $^{a}$) D5 घोरं (for दुर्गं). —$^{b}$) M4 वन- (for मृग-). Ś Ñ2 V3 B D2.3.8.9.12 M6 निर्मृगं पक्षिवर्जितं. —$^{c}$) M1 तप्तुं; M10 कर्तुं (for चर्तुं). —$^{d}$) M1 तटे (for शुभे). —For $8^{cd}$, Ś Ñ V1.2 B D1–5.8.9.12 subst.:

1153* प्रविष्टस्तप आस्थातुमस्यैव सरसोऽन्तिके ।

[B1 निविष्टस्. B2 सोस्थातुम्. V2 (aftr corr.) B1.2 अस्य व (for अस्यैव). V2 (before corr.) B3.4 सरसोस्य समीपतः (for the post. half).]

9 V2 reads from $9^{a}$ up to त्वा (see var.) in $^{b}$ in marg. Note hiatus between $^{a}$ and $^{b}$. —$^{a}$) Ñ V1.2 (before corr.) B1.2 D1–5.9 T3.4 राज्येभिषिच्य सुरथं. —$^{b}$) Ś D8.12 M3.5 ह्यभिषिच्य; Ñ V1.2 (before corr.; after corr. m. as in B2) B1.2 D1–5.9 T3.4 भ्रातरं तं (B2 तु); B3.4 स्थापयित्वा (for अभिषिच्य). D6.7.10.11 महीपतिं (for नराधिपम्). —Ñ1 om. $9^{cd}$. —$^{c}$) Ś Ñ2 V B D1.4.8.12 M6 समाश्रित्य; D2.9 समास्थाय (for समासाद्य). D5 इदं समास्थाय सरस्. —$^{d}$) Ñ2 B3.4 D1–5.9 [ऽ]तप्यं; V2.3 B1.2 D12 M6 तेपे; T3 M1.9 तप्तुं (for तप्तं). Ñ2 V B D1–5.9.12 M6 सुदारुणं (for मया चिरम्). Ś D8 ह्यतपं सुमहत्तपः.

10 $^{b}$) Ś Ñ V1 B D1.3–5.8.12 T3 त्रीणि तप्त्वा (B4 °प्तं); V3 lacuna; D2.9 तपस्तप्त्वा; M1.3.6 तपस्तीव्रं; M5 सरस्तीरे (for तपस्त्रीणि). Ś Ñ1 V3 B1 D1.4.6–8.10–12 T3 M2.4.10 महा(D12 * *)वने; B3.4 महत्तपः; D2 तपोवने; D9 द्विजोत्तम (for महामुने). V2 त्रीणि तप्यमहं तपः. D3.5 त्रीणि तप्त्वा तपो वने. —D9 om. $10^{cd}$. —$^{c}$) Ś Ñ V1.2 (before corr. तत्र) B1.2 D1–5.8.12 T3 शुभं; B3.4 काले; G3 M3.6 कृत्वा (for तप्त्वा). Ś Ñ2 V2.3 B D1.4.8.12 त्रिविष्टपं; Ñ1 V1 D2 T3 M6 त्रिभुवनं (T3 °ने); D3 तु भवनं; D5 तपोवनं (for सुदुष्करं). Ś D8.12 प्रापं; V1.3 प्राप्तं. —$^{d}$) Ś V3 D8.12 स्वर्गलोकम्; V2 (before corr. as in text) लोकालोकम् (for ब्रह्मलोकम्). V2 (before corr. as in text) B3.4 अनामयं (for अनुत्तमम्).

11 V2 reads $11^{a}$ in marg. —$^{a}$) Ñ V1.2 (before corr. as in B2) B1 D1–5.9 T4 स्वर्गं(D1.2.4.9 °र्गं)प्राप्तं तु मां तत्र(D5 मत्वा); B2–4 तस्य मे स्वर्गसंस्थस्य; D6.7.10.11 M1.8 B (ed.) तस्य (B [ed.] °स्ये)मे स्वर्गभूतस्य; T1.2 G3 M3 तस्य मे स्वर्गिभूतस्य. ❀ Cg : स्वर्गभूतस्य स्वर्गं प्राप्तस्य ।; so also Ck.t. ❀ —B3 om. (hapl.) $11^{b}$–$13^{a}$. —$^{c}$) M8 एधेते (for बाधेते). Ś B2 D8.12 परमोदारं(B2 °रे); D6.10.11 परमे वीर; D7 परमेतीव; T1 परमाचार (for परमोदार). Ñ1 V1 B4 D1–5.9 T3.4 अवाधि(D1.2.4.5.9 °धे) तां भृशं चा(B4 °शम; D4 °शं वा)हम्; V2 आराध्यतां भृशं चाहम्. —$^{d}$) Ñ1 B4 D1–5.9 T3.4 अभवं; V1 अभवद्; V2 बभूव (for ततोऽहं). Ś V3 D8.12 बाधितेंद्रियः.

12 B3 om. 12 (cf. v.l. 11). V2 reads $12^{ab}$ in marg. —$^{a}$) Ñ1 D1–5.9 तत्र; V1.2 (before corr.) B4 ततस् (for गत्वा). D7.8.12 G1 त्रिभुवनं(D8.12 °ने); Cm.k.t as in text (for त्रिभुवन-). —$^{b}$) Ś Ñ2 V2.3 B1.2 D8.12 T4 G1 M3.5.6 अथाब्रुवं (for उवाच ह). Ñ1 V1.2 (before corr.) B4 D1–5.9 T3 अवोचं वै(Ñ1 °चं प्र; D5 °चैनं) पितामहं. —$^{c}$) Ś D8.12 किमेवं (for भगवन्). Ś Ñ V B1.2.4 D1–5.8.9.12 T3.4 M6.7 स्वर्ग- (for ब्रह्म-). Ñ1 -लोकं हि. —$^{d}$) Ñ1 T1 M4 -विवर्जितं.

13 B3 om. $13^{a}$ (cf. v.l. 11). —$^{a}$) D6.7.10.11 T4 कस्यायं; T2 तस्येयं (for कस्येयं). D6.7.10.11 T4 पाकः; G3 M2 पंक्तिः; M4–6.9.10 पक्तिः (for प्राप्तिः). —$^{b}$) M1 -परो (for -वशो). T4 [अ]हं (for यत्). Ś Ñ V1.2 B1.2.4 D8.12 क्षुत्पिपासे यदाप्नुयां(V2 °प्नुवं; B1 °भुवं; B4 °भुवे); V3 क्षुत्पिपासे यथा भवेत् (sic); B3 क्षुत्पिपासो यदापहत् (sic); D1–5.9 क्षुत्पिपासे यथा(D2.3.9 °दा)सवान्; D6.7.10.11 क्षुत्पिपासानुगो ह्यहं; T3 क्षुत्पिपासापरोस्म्यहं; M6 क्षुत्पिपासावशो ह्यहं. ❀ Ct : क्षुत्पिपासे अनुगे यस्य सः. ❀ —$^{c}$) V2 B2–4 यश्च; B1 न च (for कश्च). —$^{d}$) V3 ततो (for तन्मे). Ś Ñ V1.2 B D1–5.8.9.12 ब्रूहि त्वं(V2 B1.2 तं; B3.4 तत्) प्रपितामह.

14 M8 om. $14^{ab}$. —$^{a}$) Ñ2 V2 B1.2.4 एवमुक्तस् (for पितामहस्). T3 च (for तु). V3 ततः प्राह; B3.4 तु

G. 7.85.15
B. 7.78.15
L. 7.80.14

स्वशरीरं त्वया पुष्टं कुर्वता तप उत्तमम् ।
अनुप्तं रोहते श्वेत न कदाचिन्महामते ॥ १५
दत्तं न तेऽस्ति सूक्ष्मोऽपि वने सत्त्वनिषेविते ।
तेन स्वर्गगतो वत्स बाध्यसे क्षुत्पिपासया ॥ १६
स त्वं सुपुष्टमाहारैः स्वशरीरमनुत्तमम् ।
भक्षयस्वामृतरसं सा ते तृप्तिर्भविष्यति ॥ १७

($B_4$ स) मावोचद्; $D_{1.4}$ त्वथोवाच (for तु मामाह). —$^b$) $D_{1-5.9}$ भोजनं ते (for तवाहार:). Ś $V_3$ $D_{3.8.12}$ $G_1$ $M_{2.10}$ स्वदेहज:($D_3$ °जं); $T_1$ $G_3$ सदैव च; $T_2$ तदैव च (for सुदेवज). Ñ$_1$ $V_1$ भोजनं तेस्तु देवज($V_1$ °हजं); Ñ$_2$ $V_2$ $B_{1.2}$ भोजनं पद्म(°* * *)संभव:; $B_{3.4}$ आहारस्तव कल्पित:. —For $14^{ab}$, $T_4$ subst.:

1154* पृच्छन्तमेवं मां ब्रह्मा तदा प्राह पितामहः ।
शृणु राजन्यथावृत्तं कदाचिद्धि महीतले ।

—$^c$) $B_1$ $D_9$ बहूनि (for स्वादूनि). $D_5$ स्वादु-; $T_4$ मृदु- (for स्वानि). Ś Ñ$_2$ $V_3$ $B_2$ $D_{8.12}$ स्वानि मांसानि स्वादूनि. —$^d$) $B_1$ स्वादु (for तानि). $V_1$ $G_2$ भक्षस्व (for भक्षय). $B_3$ भक्षय त्वयि नित्यश:; $D_1$ दत्तानि भक्ष नित्यश:; $T_4$ तानि भक्षयता सदा.

15 $^a$) $M_{6.7}$ त($M_7$ त्व)च्छरीरं. Ñ$_1$ $V_1$ $D_{1-4.9}$ हि ते ($D_{1.4}$ तं)पुष्टं; Ñ$_2$ $V_2$ $B_{1.2}$ हि पुष्टं ते (for त्वया पुष्टं). ❀ Cg: स्वशरीरं त्वया पुष्टमिति । मुख्यं तपो न कृतं स्वशरीरमेव केवलं त्वया पुष्टम् ।; so also Ck.t. ❀ —$^b$) Ś $V_{1.2}$ $B_2$ $D_8$ कुर्वतस्. $D_1$ उच्यते (sic) (for उत्तमम्). —After $15^{ab}$, $V_2$ (l. 1 only) $B_4$ ins.; G (ed.) subst. for $15^c$–$16^b$.:

1155* नादत्तं भवति श्वेत नापि दत्तं विनङ्क्ष्यति ।
न हि दत्तं त्वयेन्द्राभ कस्यचित्तप्यते तपः ।

[(l. 1) $V_2$ प्रणश्यति.]

—$T_4$ om. $15^{cd}$. —$^c$) Ñ $V_2$ $B_{2.4}$ नानुप्तं; $B_1$ नाभ्युप्तं; $B_3$ नान्यं ते; $D_{2.9}$ नादत्तं (for अनुप्तं). Ñ $D_{3.9}$ जायते; $B_3$ रोचते; $D_2$ ज्ञायते (for रोहते). $V_1$ नांतं प्रजायते; $D_4$ नानुपूजयते (for अनुप्तं रोहते). $B_1$ [ऽ]तेत्रि; $B_4$ काले; $D_2$ ह्येतत्; $D_9$ [ऽ]न्ये तत्; $T_2$ सस्यं; $G_3$ तेन (for श्वेत). $D_1$ न तु पूजा यतेश्चैव; $D_5$ मानुषं जातये चैव. —$^d$) Ś $D_{8.12}$ न किंचिद्धै; Ñ $V_{1.2}$ B $D_{2-5.9}$ कदाचिद्धि (for न कदाचिन्). Ñ$_1$ $D_{2-5.9}$ महीपते; $V_1$ $D_6$ $T_3$ महीतले. $D_1$ कदाचिच्च कृता त्वया. —After 15, Ś$_1$ (marg.) ins.:

1156* धनानि नैव दत्तानि वस्त्राणि सुबहून्यपि ।
मिष्टान्नं न कदाचिद्वा ब्राह्मणेभ्यो ददौ त्वया ।;

while, $T_{2.3}$ ins. 1157*.

16 B (ed. [first time within brackets]) reads $16^{ab}$ twice. —$^a$) $T_1$ $G_3$ $M_3$ उसिर्; $T_2$ गतेर्; $T_3$ दत्ता; $M_1$ तत्र; $M_9$ om.; B (ed. [first time]) तृप्तिर् (for दत्तं). $T_{1.3}$ $G_{1.3}$ $M_{2.3.5.9}$ B (ed. [first time]) सूक्ष्मापि. ❀ Ct: ते सूक्ष्मः लिङ्गव्यत्ययः. ❀ —$^b$) $D_{6.7.10.11}$ $T_2$ $G_3$ तप एव निषेवसे($D_{6.7}$ °वितं); $T_3$ कस्मैचिदत ईदृशः. —For $16^{ab}$, Ś Ñ V B $D_{1-5.8.9.12}$ $T_4$ $M_6$ subst.; $T_{2.3}$ ins. after 15; $M_3$ ins. after $16^{ab}$; B (ed. [within brackets]) ins. after $16^{ab}$ (first occurrence):

1157* अपि चेद्भिक्षमाणाय भिक्षा वै यतये पुरा ।
न हि दत्ता त्वया तत्र मोहादतिथयेऽपि वै ।

[B $M_6$ om. l. 1. —(l. 1) $D_{2.9}$ $T_2$ वै; $D_{3.5}$ ते (for चेद्). $M_3$ पुरा त्वं; B (ed.) पुरात्तुं (for अपि चेद्). $V_2$ $D_{1-3.5.9}$ भक्षमाणाय; $T_2$ याचमानाय; $T_3$ भैक्षमाणाय. $V_1$ भिक्षुमाणायातिथये; $T_4$ यत्किंचिद्भिक्षमाणाय (for the prior half). Ś$_1$ Ñ$_1$ $D_{12}$ भिक्षायै; $V_3$ भैक्षं वै; $D_{1.4}$ भिक्षापि (for भिक्षा वै). $V_2$ याचते (for यतये). $M_3$ नृप (for पुरा). —$V_3$ $T_4$ om. l. 2. —(l. 2) $T_2$ सा (for हि). $D_{1.2.4.5.9}$ $T_{2-4}$ $M_3$ भद्रम् (for तत्र). Ñ$_1$ $V_1$ त्वयेंद्राभ; $D_3$ महेंद्राभ (for त्वया तत्र). $D_1$ क्षोभाद् (for मोहाद्). Ñ$_1$ मोहादभिगताय वै; $V_1$ मोहादभिजने पुरा; $D_{2.9}$ मोहादतिथये पुरा; $T_2$ आहारोतिथयेपि च; $T_3$ महतेतिथये पुरा; $T_4$ मदादतिथयेपि वै; $M_3$ यस्मादतिथयेपि वै (for the post. half). Ñ$_2$ $V_2$ B न दत्तमन्नपानं च भवेत्तस्मिंस्त्वयानघ; $M_6$ न हि दत्तं महेंद्राभ भुवनेस्मिंस्त्वयानघ.]

—$^{cd}$) $M_3$ येन (for तेन). $B_2$ स्वर्गं (for स्वर्ग-). Ñ$_2$ ह्यद्य; $V_2$ राम (sic) (for वत्स). $V_1$ (before corr.) -गतस्यापि (for °गतो वत्स). $M_{1.7.9}$ बाध्यते. Ś $B_2$ $D_{8.12}$ क्षुत्पिपासासु ($B_2$ ग)तो ह्यसि; Ñ$_2$ $V_{2.3}$ $B_1$ $T_3$ $G_{1.2}$ $M_{2.4-6.10}$ क्षुत्पिपासावशो ह्यसि (for $^d$). Ñ$_1$ $V_1$ $B_{3.4}$ $D_{1-5.9}$ $T_4$ तेन स्वर्गं ($D_5$ °र्गं)गतस्यापि क्षुत्पिपासे तवा($D_9$ °था)नुगे($T_4$ °नघ). —After 16, $V_2$ $B_{3.4}$ G (ed.) ins.:

1158* न च दत्तं वने शून्ये निर्जने पक्षिवर्जिते ।
अतिथिर्न च वै तत्र कश्चित्संपूजितस्त्वया ।
सर्वकामफलैस्तूर्णं पूज्यन्ते पूर्वसाधवः ।
नृशंसमतिरत्यर्थं क्षुत्परीतः समन्ततः ।
नोपयुक्तानि सततं फलान्यतिथिभिः सह ।
पाद्येनार्घ्येण भोज्येन स्वागतेनासनेन च ।
वने नैव द्विजातीनां सत्क्रिया क्रियते त्वया ।
बुभुक्षितं परिश्रान्तमतिथिं गृहमागतम् ।
योऽभ्यर्चयति विश्वेशं तस्य यज्ञफलं भवेत् ।

[(l. 3) $B_4$ नित्यं (for तूर्णं). G (ed.) सर्व- (for पूर्व-). $B_4$ पूजनीयः सदातिथिः (for the post. half). —$B_4$ om. l. 4. —(l. 7) $B_3$ न कृता (for क्रियते). —(l. 9) $V_3$ $B_3$ महत् (for भवेत्).]

17 $D_6$ om. $17^{ab}$. —$^a$) $B_1$ स च; $T_4$ सर्वं (for स त्वं). $B_1$ त्वं; $B_4$ प्र-; $G_2$ $M_{1.8}$ स्व- (for सु-). $D_3$ $T_4$ आहारं. —$^b$) $D_{12}$ सु- (for स्व-). —$^c$) $V_2$ $D_{6.7.10.11}$ $T_{3.4}$ $M_{1.4}$ भक्षयित्वा; $M_6$ तद्भक्षय (for भक्षयस्व). $V_2$ (after

यदा तु तद्वनं श्वेत अगस्त्यः सुमहानृषिः ।
आक्रमिष्यति दुर्धर्षस्तदा कृच्छ्राद्विमोक्ष्यसे ॥ १८
स हि तारयितुं सौम्य शक्तः सुरगणानपि ।
किं पुनस्त्वां महाबाहो क्षुत्पिपासावशं गतम् ॥ १९
सोऽहं भगवतः श्रुत्वा देवदेवस्य निश्चयम् ।
आहारं गर्हितं कुर्मि स्वशरीरं द्विजोत्तम ॥ २०
बहून्वर्षगणान्ब्रह्मन्भुज्यमानमिदं मया ।
क्षयं नाभ्येति ब्रह्मर्षे तृप्तिश्चापि ममोत्तमा ॥ २१
तस्य मे कृच्छ्रभूतस्य कृच्छ्रादस्माद्विमोक्षय ।
अन्येषामगतिर्ह्यत्र कुम्भयोनिमृते द्विजम् ॥ २२ G. 7. 85. 26 B. 7. 78. 22 L. 7. 80. 21

corr. as in text) $B_{4}$ [आ]मिषरसं; $B_{3}$ [आ]मिषमिदं; $D_{1.4}$ [आ]मिषं स्वादु; $D_{2.9}$ [अ]मृतमयं (for [अ]मृतरसं). —$^{d}$) $V_{2}$ $B_{3.4}$ $D_{6.7.10.11}$ T G $M_{2-5.8.10}$ Ct तेन; $M_{6.7}$ येन (for सा ते). $V_{2}$ $D_{6.7.10.11}$ Ct वृत्तिर्; $B_{2}$ पुष्टिर् (for तृप्तिर्).

18 $V_{3}$ reads $18^{ab}$ (except यदा) in marg. Note hiatus between $^{a}$ and $^{b}$. —$^{ab}$) $D_{12}$ यथा (for यदा). $T_{1.2}$ $G_{3}$ घोरम् (for श्वेत). Ś $D_{8.12}$ श्वेत अगस्त्यस्ते; Ñ$_{1}$ त्वगस्त्यस्तच्छ्वेत; $V_{1}$ श्वेत अगस्त्यो वै; $V_{2}$ (before corr.) $B_{1}$ तु चेतद्धि वनं; $B_{2}$ तवैतद्विपिनम्; $B_{3}$ श्वेत त्वगस्त्यस्ते; $B_{4}$ त्वेतद्वनं श्वेत; $D_{1.4}$ त्वगस्त्यो वै श्वेत; $D_{2.3.5.9}$ त्वगस्त्यस्ते श्वेत; $T_{4}$ त्वगस्त्यः श्वेताख्य-; $M_{6}$ तु भुवनं चेदम् (for तु तद्वनं श्वेत). $G_{1.2}$ ह्यगस्त्यः. Ñ$_{2}$ $V_{2}$ $D_{10.11}$ $T_{1}$ $G_{3}$ $M_{3}$ स (for सु-). $V_{2}$ महामुनिः (for -महानृषिः). Ś Ñ$_{1}$ $V_{1}$ $B_{3}$ $D_{1-5.8.9.12}$ $T_{4}$ काननं सुमहातपाः ($D_{1.4}$ °यशाः); $B_{4}$ कुंभयोनिर्महामुनिः (for $^{b}$). $V_{3}$ तपश्चर्तुं महाराज अगस्त्यो मुनिसत्तमः. —$^{c}$) Ś Ñ V B D $T_{4}$ $M_{10}$ आगमिष्यति. $T_{2}$ दुर्धर्षं. —$^{d}$) $B_{1.4}$ ततः; $T_{1}$ $G_{3}$ $M_{1.8}$ स त्वा; $M_{7}$ स ते; $M_{9}$ स त्वां (for तदा). $V_{3}$ $B_{4}$ $D_{10.11}$ $T_{1}$ $G_{1.2}$ $M_{1.7-9}$ Ck.t विमोक्ष्यते; $D_{3-6.9.12}$ $T_{3}$ $M_{5}$ विमोक्षसे; $G_{2}$ विमोक्ष्यति (for विमोक्ष्यसे).

19 $^{a}$) Ś Ñ V B $D_{1-5.8.9.12}$ शक्तः (for सौम्य). $M_{1}$ अगस्त्यो रक्षितुं सौम्य. —$^{b}$) Ś $D_{8}$ नान्यस्त्वां वै महामते; Ñ $V_{1.2}$ B $D_{1-5.9}$ सेंद्रानपि सुरा($D_{5}$ महा)सुरान्; $V_{3}$ $D_{12}$ नान्यस्त्वां खलु($D_{12}$ °स्त्वामपि) सुव्रत. —$^{c}$) $M_{6}$ त्वा (for त्वां). —$^{d}$) $M_{7}$ -श्रमान्वितं (for -वशं गतम्). —For $19^{cd}$, Ś $V_{3}$ $D_{8.12}$ subst.:

1159* शक्तः सुरगणांस्त्रातुं किं पुनस्त्वां सुरोत्तम ।;

—For $19^{cd}$, Ñ$_{1}$ $V_{1}$ $D_{1-5.9}$ subst., while $V_{2}$ $T_{2.3}$ ins. after 19:

1160* आहारं चाजरं दातुं राजर्षे किं पुनस्तव ।

[Ñ$_{1}$ वा जने; $V_{1}$ वा चिरं; $D_{5}$ वाजरं (for चाजरं). $D_{3}$ दत्तं (for दातुं). $V_{2}$ आहारं गर्हितं चेदं (for the prior half). $V_{1}$ अलं (for पुनस्).]

20 $^{a}$) $M_{1}$ श्वेतो; Cm.g as in text (for सोऽहं). —$^{b}$) $T_{4}$ -श्रेष्ठस्य (for -देवस्य). Ś Ñ $V_{1.2}$ B $D_{1-5.8.9.12}$ $T_{3.4}$ भाषितं; $V_{3}$ $G_{1}$ $M_{1.2.4-10}$ नित्यदा; $G_{2}$ नित्यशः (for निश्चयम्). —$^{c}$) $V_{2}$ आहारे. Ś$_{1.2}$ $V_{3}$ भुंजे; Ś$_{3}$ भुक्त्वा; $T_{2}$ कुर्यां; $B_{1}$ कुर्वे; $B_{2}$ भुंक्ते; $D_{8.12}$ भुंक्ष्व (sic); Cm.g.k.t as in text (for कुर्मि). Ñ $V_{1}$ $B_{3.4}$ $D_{1-5.9}$ $T_{3.4}$ भुंजे बीभत्समाहारं. —$^{d}$) $D_{3}$ स्वं; $D_{4}$ सु-; Ck.t as in text (for स्व-). Ñ $V_{1}$ $B_{2-4}$ $D_{1-5.9}$ $T_{3.4}$ $G_{1.2}$ $M_{2.4.5.10}$ अनुत्तमं (for द्विजोत्तम).

21 $M_{1}$ om. (hapl.) $21-23^{b}$. —$^{a}$) $D_{2.4.9}$ $T_{1}$ $G_{3}$ $M_{3.5}$ Cm बहु- (for बहून्). Ñ$_{2}$ $B_{1.2}$ -गणो; $T_{1}$ $G_{3}$ -गणं (for -गणान्). $D_{6}$ गह्यं; $M_{6}$ एतद् (for ब्रह्मन्). —$^{b}$) $T_{1}$ $G_{1.2}$ $M_{2-5.10}$ भक्ष्यमाणम् (for भुज्यमानम्). Ś $V_{2}$ $D_{8.12}$ मया त्विदं; $V_{1}$ $D_{1-5.9}$ च($V_{1}$ तु) तन्मया; $T_{3.4}$ तु यन्मया (for इदं मया). Ñ$_{1}$ भुंजमानं तु तन्मया; Ñ$_{2}$ $B_{1.2}$ भक्ष($B_{2}$ °क्ष्य)माणस्य वर्तते; $T_{2}$ भक्ष्यमाणमिदं स्वयं; $M_{6}$ भक्षमाणमनुत्तमं. —$^{c}$) $D_{3}$ कृतं (for क्षयं). Ñ$_{1}$ नापैति; $B_{3.4}$ न चैतद्; $M_{7}$ नाप्नोति; Ck.t as in text (for नाभ्येति). Ś Ñ $V_{1.3}$ $B_{1.2}$ $D_{8.12}$ $T_{3.4}$ $M_{6}$ सुभृशं; $V_{3}$ सदृशं; $B_{3.4}$ आयाति; $D_{1-5.9}$ सुभृतं (for ब्रह्मर्षे). —$T_{1.2}$ $G_{3}$ $M_{3}$ read erroneously $23^{d}$ in place of $21^{d}$ repeating it in its proper place. —$^{d}$) $B_{3.4}$ [अ]भून् (for [अ]पि). $G_{1}$ महत्तमा; $M_{9}$ ममोत्तमं. Ñ$_{2}$ $V_{2}$ $B_{1}$ तृप्तिश्चोपैत्यनुत्तमा; $B_{2}$ तृप्तिर्भवत्यनुत्तमा; $D_{1.4}$ न तृप्तिश्चाप्यनुत्तमा.

22 $M_{1}$ om. 22 (cf. v.l. 21). $V_{3}$ $D_{1.4}$ om. $22-23^{b}$. $B_{3}$ reads twice $22^{ab}$. $V_{2}$ reads $22^{a}$ in marg. —$^{a}$) $T_{3}$ $M_{3}$ कृच्छ्राभि- (for मे कृच्छ्र-). $M_{8}$ -ग्रासस्य; Cm.g.k.t as in text (for -भूतस्य). Ś Ñ$_{2}$ $B_{1.2.3}$(first time)$_{.4}$ $D_{8.12}$ $M_{6}$ स मां त्वं($B_{4}$ तन्मूले; $M_{6}$ स त्वं मां) कृच्छ्रमापन्नं; Ñ$_{1}$ $V_{1}$ $B_{3}$ (second time) $D_{2.3.5.9}$ $M_{4}$ तन्मुने कृच्छ्रभूतं मां($B_{3}$ मे); $V_{2}$ (before corr. तं मुने मां महाघोरात्) स हि मां त्वं कृच्छ्रमपि. —$^{b}$) Ś $V_{1.2}$ $B_{3}$(second time)$_{.4}$ $D_{2.5.8.12}$ $T_{3.4}$ Cg विमोचय; Ñ$_{2}$ $B_{1-3}$ (first time) प्रमोचय; $M_{6}$ विमोक्ष्यसे; Cv.m.g.t as in text (for विमोक्षय). —$^{c}$) $D_{6.10.11}$ $T_{3}$ न गतिर् (for अगतिर्). $G_{1}$ योहं; $G_{2}$ चाहं; $M_{4.7}$ यत्र (for ह्यत्र). Ś $B_{4}$ $D_{8.12}$ अन्येषां न($B_{4}$ अन्यस्य हि) भवेच्छक्तिः; Ñ$_{1}$ $V_{1}$ नान्यस्य भवते शक्तिः; Ñ$_{2}$ $B_{1-3}$ अन्यस्य हि गतिर्नास्ति; $V_{2}$ अन्यथा हि ग ***; $D_{2.3.5.9}$ $T_{4}$ नान्यस्य शक्तिर्भवति; $D_{7}$ अन्येषां न गतिस्तत्र; $T_{1.2}$ $G_{3}$ $M_{3.5}$ अद्य मे न गतिर्ह्यत्र. —$^{d}$) Ñ$_{2}$ $V_{2}$ $B_{1.2}$ त्वामृते द्विजपुंगव($B_{2}$ °सत्तम); $B_{3.4}$ कुंभयोनेर्द्विजादृते.

G. 7. 85. 27
B. 7. 78. 23
L. 7. 80. 22

इदमाभरणं सौम्य तारणार्थं द्विजोत्तम ।
प्रतिगृह्णीष्व ब्रह्मर्षे प्रसादं कर्तुमर्हसि ॥ २३
तस्याहं स्वर्गिणो वाक्यं श्रुत्वा दुःखसमन्वितम् ।
तारणायोपजग्राह तदाभरणमुत्तमम् ॥ २४
मया प्रतिगृहीते तु तस्मिन्नाभरणे शुभे ।
मानुषः पूर्वको देहो राजर्षेः स ननाश ह ॥ २५
प्रनष्टे तु शरीरेऽसौ राजर्षिः परया मुदा ।
तृप्तः प्रमुदितो राजा जगाम त्रिदिवं पुनः ॥ २६
तेनेदं शक्रतुल्येन दिव्यमाभरणं मम ।
तस्मिन्निमित्ते काकुत्स्थ दत्तमद्भुतदर्शनम् ॥ २७

इति श्रीरामायणे उत्तरकाण्डे एकोनसप्ततितमः सर्गः ॥ ६९ ॥

---

23 V3 D1.4 M1 om. $23^{ab}$ (cf. v.l. 21 and 22). —$^{a}$) B2 इदश- (for इदम्). Ñ2 V2 B दिव्यं (for सौम्य). —$^{b}$) B3 T2.4 G3 तरणार्थं; D6.7.10.11 M5.6.10 धारणार्थं (for तार°). V2 (before corr. as in B3) B1.2 ममैव च; B3.4 ममो(B4 °यो)द्यतं (for द्विजोत्तम). —V3 lacuna for $23^{cd}$. —$^{c}$) Ñ2 V2 B3.4 विप्रर्षे; D6.7.10.11 T1 G2 भद्रं ते (for ब्रह्मर्षे). Ś Ñ1 V1 B1 D1–5.8.9.12 T4 M6 ब्रह्म(Ś D5.8 मह)र्षे प्रतिगृह्णीष्व. —After 23, Ś1 (marg.).2.3 Ñ V B2–4 D1–7.9–11 T1–3 G2.3 M3.7–9 ins.:

1161* इह तावत्सुवर्णं च धनं वस्त्राणि च द्विज ।
भक्ष्यं भोज्यं च ब्रह्मर्षे ददाम्याभरणानि च ।
सर्वान्कामान्प्रयच्छामि भोगांश्च मुनिपुंगव ।
तारणे भगवन्मह्यं प्रसादं कर्तुमर्हसि ।

[Ñ1 om. l. 1. —(l. 1) Ñ2 V2 B2.4 इमा; D6.7.10.11 G2 इदं (for इह). Ś Ñ2 V B2.4 D1–5.9 M7 गावः; M3 गाश्च (for तावत्). B4 सुवर्णस्य; M7 सुवर्णाश्च. —M7 om. from the post. half up to the prior half l. 2. Ñ2 V2 B4 [उ]त्तमं (for द्विज). Ś V1.3 D1–5.9 धनं वस्त्रमनुत्तमं; B2 धनं वस्त्रं तथोत्तमं (for the post. half). B3 ते ह गावो धनं धान्यं विद्यते मुनिसत्तम. —(l. 2) B3 T1 M8 भक्ष्य-; T2 ब्रह्म- (for भक्ष्यं). G3 भोक्ष्यं (for भोज्यं). Ś Ñ1 V1.3 B3 D1–5.9 T3 विप्रर्षे (for ब्रह्मर्षे). Ñ2 V2 B2.4 ब्रह्म(B4 विप्र)र्षे भक्ष्यभोज्यं च (for the prior half). V2 ददानि; M7 वस्त्राणि (for ददामि). Ñ1 V1.3 B2.3 D1–5.9 ददा(D1.4 दास्या)म्या(B2 °न्या)भरणं तथा(V3 तदा; B2.3 ततः; D2.5.9 तव) (for the post. half). —B2.3 om. l. 3. —(l. 3) D6.7 T1.2 G3 M8.9 सर्व- (for सर्वान्). D5 प्रददामि (for प्रयच्छामि). Ś V1 D2.3.5.9 T3 सर्वभो(D5 °भा)गां(D2 °ग्यां)श्च ते(D9 भो) द्विज; Ñ1 सर्वकामांश्च ते द्विज; D1.4 भोगांश्च ते द्विजर्षभ (for the post. half). —Ś om. l. 4. —(l. 4) B2 तारणो; D1.4 °णाद्; D5 °यन् (for तारणे). T3 तु भवान् (for भगवन्). Ñ1 V1 तारणं तु य(V1 त)था मह्यं; B3 तारणार्थं तथामात्यं; D2.9 तारणेन भवान्मह्यं (for the prior half). Ñ1 V1 B3 ब्रह्मंस्त्वं (for प्रसादं).]

24 V3 lacuna for $^{abc}$. —$^{a}$) V2 तस्य हि; G (ed.) अहं तु (for तस्याहं). B1 धर्मिणो (for स्वर्गिणो). M6 राम (for वाक्यं). —$^{b}$) B3 ज्ञात्वा (for श्रुत्वा). V2 (before corr.) B4 भक्ति-; D7 धर्म-; M6 शोक- (for दुःख-). Ś Ñ1 V1 B1 D1.3–5.8.12 T2 M1.2.5.8–10 -समन्वितः. —$^{c}$) D3 वारणाय. Ś1.2 D8.12 [उ]पजगृहे; Ñ1 V1 B3 D2.9 [उ]प-चक्राम (for [उ]पजग्राह). G (ed.) तारणार्थाय जग्राह. —$^{d}$) D3 तथाभरणम्. Ñ1 V1 D2.9 तदा(D2.9 °स्या)भरणसंपदा.

25 $^{a}$) Ñ1 V1 B3 D1–5.9 T3 ततो(D1.2.4.9 °दा) गृहीते तु(D5 हि) मया(Ñ1 V1 B3 तदा); B4 प्रतिगृहीते तु मया. —$^{c}$) M1 मानुषे. B4 सर्वको (for पूर्वको). —$^{d}$) D6.7.10.11 T4 Cg वि- (for स). Ñ V1.2 B D1.2.4.9 स व्य(V1 ह्य; D2 च)नश्यत; D3 स विनश्य च (sic); D5 स न दृश्यते (for स ननाश ह).

26 $^{a}$) Ś3 Ñ1 V3 D3.5.8.10–12 T1.2 G M1.3 प्रणष्टे. Ś3 D8.12 स्व-; Ñ1 B3 M3 [ऽ]थ; T1–3 G M2.4.5.7.9.10 च (for तु). Ś2.3 B4 D1.3.4.8.12 स; Ñ1 V3 B3 D2.3.9 T1.2.4 G3 M3 तु; Ñ2 om. (subm.); V1 [ऽ]थ; M1 ह (for ऽसौ). —$^{b}$) Ñ1 V1 B3 राजा परमया मुदा. —After $26^{ab}$, B3 reads $27^{cd}$ (followed by 1163*). —$^{c}$) V2.3 B4 हृष्टः; M6 तृप्तं (for तृप्तः). Ś V2.3 B4 D8.12 T1.2 G3 M3.6.7 राम (for राजा). Ñ1 V1 D1–5.9 T4 युक्तो राम वि(Ñ1 V1 T4 °जन्वि; D2 °जवि; D9 °जा वि)मानेन; Ñ2 B1–3 प्रमुक्तो हि(B3 °क्तोथ) महातेजा. —$^{d}$) Ñ1 V1 तदा; D6.7.10.11 T1–3 G M1–5.8–10 सुखं; M7 शुभं (for पुनः).

27 $^{a}$) Ñ1 V1 D2.9 T4 मे (for [इ]दं). —$^{b}$) Ś Ñ1 V B2.4 D2.8.9.12 दत्तम्; M1 दीप्तम् (for दिव्यम्). T3 (with hiatus) उत्तमाभरणं. Ñ1 V1.3 D1–5.9 T4 शुभं (for मम). —B3 reads $27^{cd}$ (followed by 1163*) after $26^{ab}$. —$^{c}$) M5 मुहूर्ते; Cm.t as in text (for निमित्ते). —$^{d}$) Ñ1 V1 B3 (all with hiatus) इदम्; V2 B2.4 D2.9 T3.4 दिव्यम् (for दत्तम्). M3 उत्तम- (for अद्भुत-). M7 दत्तमद्भुतमुत्तमं. —For 27, Ñ2 B1 subst.; while V2 B2.4 ins. after 27; whereas B3 subst. for $27^{ab}$:

# ७०

तदद्भुततमं वाक्यं श्रुत्वागस्त्यस्य राघवः ।
गौरवाद्विस्मयाच्चैव भूयः प्रष्टुं प्रचक्रमे ॥ १
भगवंस्तद्वनं घोरं तपस्तप्यति यत्र सः ।
श्वेतो वैदर्भको राजा कथं तदमृगद्विजम् ॥ २
निःसत्त्वं च वनं जातं शून्यं मनुजवर्जितम् ।
तपश्चर्तुं प्रविष्टः स श्रोतुमिच्छामि तत्त्वतः ॥ ३
रामस्य भाषितं श्रुत्वा कौतूहलसमन्वितम् ।
वाक्यं परमतेजस्वी वक्तुमेवोपचक्रमे ॥ ४
पुरा कृतयुगे राम मनुर्दण्डधरः प्रभुः ।
तस्य पुत्रो महानासीदिक्ष्वाकुः कुलवर्धनः ॥ ५
तं पुत्रं पूर्वके राज्ये निक्षिप्य भुवि दुर्जयम् ।
पृथिव्यां राजवंशानां भव कर्तेत्युवाच ह ॥ ६ G. 7. 86. 6 B. 7. 79. 6 L. 7. 81. 6

1162* एतद्धि तच्छक्रनिभेन तेन
तस्मिन्निमित्ते मम दत्तमासीत् ।
विभूषणं भूषितमात्मजैर्गुणै-
र्दत्तं मया धारय निर्विशङ्कः ।

[(l. 1) B3 तद्युक्त- (for तच्छक्र-). —(l. 3) B2.4 विभूषितं. B1.4 भूषणम् (for भूषितम्). —(l. 4) V2 B2 समाधारय (for मया धारय).]

—After 27, Ś Ñ1 V1 B3 D3.8.9.12 T2–4 ins.:

1163* श्वेतो वैदर्भको राजा तदाभूद्गतकल्मषः ।

[D9 नाम (for राजा). B3 तदासौ त्यक्तकल्मषः (for the post. half).]

Colophon. —*Sarga name*: Ś Ñ V1.3 B D1–9.12 श्वेतोपाख्यानं; V2 अगस्तिरामसंवादे श्वेतोपाख्यानं. —*Sarga no.* (figures, words or both): Ś Ñ1 V3 D2.4.12 om.; Ñ2 83; V1 61; V2 80; B1 D9 82; B3 84; B4 D3 T3 85; D5 70; D6.7.10.11 T1.2 G M1–5.7.9.10 78; D8 75; T4 86; M6.8 77. —After colophon, D2 concludes with राम; T4 with श्रीरामार्पणमस्तु; G M1.2.5.8 with श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

## 70

D12 begins with ॐ.

1 [a]) B2.3 D2.5 M1 अद्भुतमिदं; G1 अद्भुतं मया (sic) (for अद्भुततमं). —[b]) T1 G3 M3 [अ]गस्त्याच्च. G2 भाषितं (for राघवः). —After 1[ab], B2 ins.:

1164* अपूर्वं श्रूयते वाक्यं तव वक्त्रान्महामुने ।

—[c]) D3 च स्मयाच् (for विस्मयाच्). G2 [अ]पि (for [ए]व). —[d]) K (ed.) पुनः (for भूयः). Ś Ñ2 V2 (before corr.).3 B1–3 D8.12 M6 नम्रः (Ñ2 V3 B1 प्राज्ञः; V2 पुनः; B2.3 प्रभुः; M6 प्रह्वः) पुनरभाषत.

2 M2 om. (hapl.) 2–4. —[b]) Ś V3 D8.12 M6 तपस्तेपे स यत्र वै; Ñ V1.2 B D1–5.9 T3.4 य(B3 त)त्रासौ तप्तवांस्त (Ñ2 V2 [after corr.] B1.2 D2.9 °वाञ्त)पः. —[c]) Ś D8 श्वेतो वैदर्भराजापि. —[d]) M3 स्याद् (for तद्). Ś V3 D8.12 कथं तदमृगं द्विज; Ñ1 तद्भून्निमृगं कथं; Ñ2 V1.2 B D3 T4 तद्भूदग(B1 °द्राश्र)मं(T4 °मृगं) कथं; D1.2.4.9 तद्वनम(D9 °द्वनं वा)गमत्कथं; D5 तद्भूद्दंडकं कथं; G1 कथं तन्निमृगं कृतं.

3 M2 om. 3 (cf. v.l. 2). —[a]) Ñ2 स (for च). V1 निष्कारणं; D7 निस्वनं च; D10.11 तद्वनं स; T2 निर्मृगं च (for निःसत्त्वं च). Ñ2 V2 (before corr.).3 B4 D10.11 M3 कथं (for वनं). Ś D8.12 सत्त्वं; Ñ V1.2 (before corr.) B2–4 D1–5.9–11 T4 राजा; V3 ब्रह्मन् (for जातं). —[b]) Ś V3 D8.12 कथं (for शून्यं). Ś V3 B4 D8.12 मानुष-; Ñ1 V1 D1–5.9 मृगवि-; D7 मनुवि-; G1 पक्षिवि- (for मनुज-). —[c]) Ś V3 D8.12 M3.6 कर्तुं; G2 M1 तप्तुं; Cg.k.t as in text (for चर्तुं). Ś V3 D8.12 M6 [ऽ]यं; T3 [ऽ]भूत् (for स). Ñ V1.2 B D1–5.9 T4 प्रविष्टस्तप आस्थातुं. —[d]) Ś V3 D8.12 [अ]हं मुने; B3 तन्मुने; M6 [अ]हं कथां (for तत्त्वतः). Ñ V1.2 B1.2 D1–5.9 T3.4 कथं(T3 तन्मे) वद(Ñ2 V2 B1.2 °थयस्व) महामुने.

4 M2 om. 4 (cf. v.l. 2). —[a]) V1 तस्य तद् (for रामस्य). D6.7.10.11 वचनं; D12 [आ]भाषितं (for भाषितं). —[b]) B1.2 D2.9 T3.4 -समन्वितः. —V3 lacuna from [c] up to वाक्य in [d] (see var.). —[c]) Ś Ñ1 V1 B2.4 D3.8.12 T3.4 मुनिः; D1.2.4.9 ततः (for वाक्यं). —[d]) Ñ V1.2 B D1–5.9 T3.4 समुपचक्रमे. Ś V3 D8.12 वाक्य(V3 lacuna)मेतदुवाच ह.

5 [a]) Ś1.2 V3] पूर्वं; Ś3 D8.12 पूर्वं (for पुरा). D5 त्रेतायुगे. Ñ1 V1 राजन्; B4 राजा (for राम). —[b]) G1.2 M2.4–6.10 नृपः; M7 [ऽ]भवत्; Cm.g.k.t as in text (for प्रभुः). —[c]) B4 यस्य. V1 D2.9 T3.4 च(V1 हि; T4 तु) नाम्ना (for महान्). D1.3–5 तनयस्तस्य नाम्नासीद्. —[d]) Ś D6–8.10–12 T1.2 G3 M3 कुलनंदनः; Ñ V2.3 B D1.2.3(reads in marg. from मि up to पि in 7[b]).4.9 T3.4 M6.7 अमितप्रभः; V1 अभवत्सुतः; D5 इति स प्रभुः (for कुलवर्धनः).

6 D3 reads 6 in marg. (cf. v.l. 5). —[a]) M6.7 स (for तं). Ś Ñ V B2–4 D1–4.8.9.12 पूर्वजं; B1 D7.10.11 T3.4 M10 पूर्वकं (for पूर्वके). Ñ1 राजा (for राज्ये). D5 तं पुत्रं पूज्यराज्येन. —[b]) T4 मुनि- (for भुवि). Ś Ñ V

G. 7. 86. 7
B. 7. 79. 7
L. 7. 81. 7

तथेति च प्रतिज्ञातं पितुः पुत्रेण राघव ।
ततः परमसंहृष्टो मनुः पुनरुवाच ह ॥ ७
प्रीतोऽस्मि परमोदार कर्ता चासि न संशयः ।
दण्डेन च प्रजा रक्ष मा च दण्डमकारणे ॥ ८
अपराधिषु यो दण्डः पात्यते मानवेषु वै ।
स दण्डो विधिवन्मुक्तः स्वर्गं नयति पार्थिवम् ॥ ९
तस्माद्दण्डे महाबाहो यत्नवान्भव पुत्रक ।
धर्मो हि परमो लोके कुर्वतस्ते भविष्यति ॥ १०

इति तं बहु संदिश्य मनुः पुत्रं समाधिना ।
जगाम त्रिदिवं हृष्टो ब्रह्मलोकमनुत्तमम् ॥ ११
प्रयाते त्रिदिवे तस्मिन्निक्ष्वाकुरमितप्रभः ।
जनयिष्ये कथं पुत्रानिति चिन्तापरोऽभवत् ॥ १२
कर्मभिर्बहुरूपैश्च तैस्तैर्मनुसुतः सुतान् ।
जनयामास धर्मात्मा शतं देवसुतोपमान् ॥ १३
तेषामवरजस्तात सर्वेषां रघुनन्दन ।
मूढश्चाकृतविद्यश्च न शुश्रूषति पूर्वजान् ॥ १४

$B_{1.2}$ $D_{1-5.8.9.12}$ $T_{3.4}$ $M_6$ संमतं( $D_4$ °तः; $T_4$ °त ); $G_1$ दुर्जयः ( for दुर्जयम् ). $B_{3.4}$ स्थापयित्वा सुसंमतं. —$^{c}$) $V_2$ ( marg. ) $B_{1.3}$ रघु- ( for राज- ). —$^{d}$) $V_2$ B भवान् (for भव ). $Ś_3$ कांत; $B_1$ भर्ता ( for कर्ता ). $B_2$ चाहवे; $D_{10.11}$ [ उ ]वाच तं ( for [ उ ]वाच ह ). $D_2$ भवत्कीर्तिमुवाच ह (sic).

7 $D_3$ reads up to पि in $^{b}$ in marg. ( cf. v.l. 5 ). —$^{a}$) $V_2$ $D_{6.7.10.11}$ [ ए ]व ( for [ इ ]ति ). $D_5$ वै ( for च ). $V_1$ $B_1$ प्रतिज्ञाय; $V_2$ $B_{2-4}$ प्रतिज्ञाते ( for °ज्ञातं ). —$V_3$ lacuna from $^{b}$ up to र in $^{c}$. —$^{b}$) $Ñ_2$ तेन; $B_{3.4}$ मनु- ( for पितुः ). —$^{c}$) $Ñ_1$ पिता ( for ततः ). $B_1$ -संक्रुद्धो; $D_5$ -संहृष्टं; $D_{6.7.10.11}$ $T_{1.2}$ $M_3$ -संतुष्टो ( for -संहृष्टो ). —$^{d}$) $D_{6.7.10.11}$ $T_1$ $M_{1.3}$ पुत्रम् ( for पुनर् ). $Ñ_2$ $B_{1.2}$ $M_6$ अथाब्रवीत् ( for उवाच ह ). Ś $V_3$ $D_{8.12}$ प्रत्युवाच महातपाः; $Ñ_1$ $V_{1.2}$ ( before corr. as in $Ñ_2$ ) $B_{3.4}$ $D_{1-5.9}$ $T_{3.4}$ पुनस्तं ( $D_{1.4}$ पुनः सं; $D_5$ सुतं तं ) प्रत्युवाच ह.

8 $^{a}$) Ś $D_{5.8.12}$ $M_8$ परमोदारं ( $D_5$ $M_8$ °रः ). —$^{b}$) $V_1$ भर्ता; $B_4$ वक्ता ( for कर्ता ). $G_1$ om. च (subm.). $T_{1.2}$ $G_3$ $M_3$ त्वं कर्ता; $T_{3.4}$ भक्त्या ते ( for कर्ता च ). Ś $V_2$ ( before corr. as in $T_3$ ) $B_4$ $D_{3.5.8.9.12}$ [ अ ]स्मि; $B_1$ $D_2$ [ अ ]स्मिन्; $T_{3.4}$ $M_7$ [ अ ]पि ( for [ अ ]सि ). $V_2$ $B_4$ नरर्षभ ( for न संशयः ). $B_3$ कर्तासि परमर्षभ. —$^{c}$) $V_3$ इंद्रेण; Cm.g.k.t as in text ( for दण्डेन ). $V_2$ ( also as in text ) $B_{3.4}$ हि ( for च ). Ś $V_1$ $D_{2.8.12}$ रक्षन्; $V_2$ B $D_{3.5}$ $T_{3.4}$ $G_3$ रक्ष्या ( for रक्ष ). —$^{d}$) Ś Ñ $V_{1.3}$ $B_{2.3}$ $D_{1-5.8.9.12}$ $T_{3.4}$ न ( for मा ). Ñ $V_1$ $B_{2.3}$ $D_{1.5}$ दंडो; $D_2$ दंड्यो; $D_{3.4.9}$ $T_{3.4}$ दंड्या; $G_3$ रक्षम् (corrupt) ( for दण्डम् ). Ś $V_3$ $D_{8.12}$ $T_{3.4}$ $M_5$ अकारणं; $Ñ_1$ ह्यकारणात्; $Ñ_2$ $V_1$ $B_{2.3}$ $D_{1.2.4.5.9}$ ह्यकारणे( $D_2$ °णं ); $D_3$ स्वकारणे ( for अकारणे ). $V_2$ ( before corr.; after corr. as in $V_1$ ) $B_4$ स च पात्यः कृतागसि; $B_1$ दंडो न ह्यस्त्यकारणे.

9 $^{a}$) Ś Ñ V $B_{3.4}$ $D_{5.8.12}$ अपराधेषु; $D_{6.7}$ अपकारिषु ( for अपराधिषु ). $B_1$ पात्यते चापराधेन. —$^{b}$) $B_1$ यो दंडो; $B_3$ पश्यते ( for पात्यते ). $Ñ_1$ $D_{6.7}$ $M_{7-9}$ च ( for वै ). Ś $V_3$ $D_{8.12}$ $M_6$ पुरुषर्षभ; $Ñ_2$ मनुजाधिप; $V_1$ $D_{2.5.9}$ मानुषेषु वै; $V_2$ B $T_{1.2}$ G $M_{1-5.10}$ मानवाग्रज ( for मानवेषु वै ). —$^{c}$) $V_2$ $B_{3.4}$ विधिना ( for विधिवन् ). Ś $Ñ_2$ V $B_{3.4}$ $D_{1.3-5.8.9.12}$ युक्तः ( for मुक्तः ).

10 $^{a}$) Ś $D_{8.12}$ तस्मिन् ( for तस्माद् ). $D_{11}$ दंड. —$^{b}$) $M_7$ पार्थिव ( for पुत्रक ). —$Ñ_2$ $B_1$ om. 10$^{cd}$. —$^{c}$) Ś $Ñ_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ ते ( for हि ). $M_5$ दंडं ( for लोके ). $G_1$ धर्मो हि परलोकेषु. —$^{d}$) Ś $V_{1.3}$ $D_{1-5.8.9.12}$ कृत एव ( $V_1$ $D_{2-4.9}$ °वं ); $Ñ_1$ कृतमेवं; $V_2$ $B_4$ कुर्वन्नेव( $B_4$ °वं ); $B_3$ कुर्वंत्येवं ( for कुर्वतस्ते ).

11 $^{a}$) $T_{1.2}$ [ इ ]दं; $M_6$ तद् ( for तं ). Ś $D_{8.12}$ चैव ( for बहु ). $B_1$ इति संदिश्य बहुधा; $B_4$ ( with hiatus ) बहुधा इति संदिश्य. —$^{b}$) $Ñ_2$ $V_2$ ( before corr. ) $B_{1.2}$ पुनः ( for मनुः ). —$^{d}$) $D_{6.7.10.11}$ $T_{3.4}$ $M_3$ सनातनं ( for अनुत्तमम् ).

12 $^{a}$) $D_6$ $T_{1.2}$ $G_{2.3}$ M त्रिदिवं. Ś Ñ V B $D_{1-5.8.9.12}$ $T_{3.4}$ तस्मिन्प्रयाते त्रि( $Ñ_2$ $B_{1.2}$ तु )दिवम्. —$^{c}$) $Ñ_1$ $V_1$ पुत्रम् ( for पुत्रान् ). —$^{d}$) $B_{3.4}$ इति चिंतामगात्प्रभुः.

13 $^{a}$) $D_6$ ब्रह्म- ( for बहु- ). $B_1$ -तापैस्; $D_{11}$ -रूपश् ( for -रूपैश् ). Ś Ñ ( $Ñ_2$ marg. also ) $V_3$ $B_{1.3}$ $D_{1-5.8.12}$ $M_6$ तु; $D_9$ om. (subm.) ( for च ). ❀ Cm.t : बहुरूपैः यज्ञदानतपोलक्षणैः ।; so also Cg.k. ❀ —$^{b}$) $M_7$ स मनुजः ( for मनुसुतः ). $Ñ_1$ $V_1$ $D_{6.7.10.11}$ तदा; $D_{1.3.4}$ ततः; $D_9$ स्थितान् ( for सुतान् ). —$^{c}$) $Ñ_1$ $V_1$ $D_{1-5.9}$ पुत्राणां; $T_{1.2}$ $G_3$ $M_3$ तेजस्वी ( for धर्मात्मा ). —$^{d}$) Ś $D_{8.12}$ तदा; $Ñ_2$ $V_{2.3}$ B सुतान् ( for शतं ). $Ñ_1$ $V_1$ $D_{1-5.9}$ $M_{7.8}$ -सुतोपमं; $M_6$ -सुतानिव.

14 For 14$^{ab}$, Ś Ñ V B $D_{1-5.8.9.12}$ $M_6$ subst. :

1165* सर्वेषामभवत्तेषां कनीयान्रघुनन्दन ।

[ $Ñ_2$ $V_1$ $D_{1.4}$ अधमस्; $B_4$ अंतरे; $D_{2.3.5.9}$ $M_6$ अवरस् ( for अभवत् ). $V_1$ रघुसत्तम. ]

—$^{c}$) $T_{1.2}$ $G_3$ $M_3$ मूर्खश् ( for मूढश् ). —$V_2$ reads $^{d}$ in marg. —$^{d}$) Ś $V_3$ $B_2$ $D_{8.12}$ न शुश्रूषुश्च; Ñ $V_1$ $D_{1-5.9}$ शुश्रूषुर्न च; $V_2$ शुश्रूषुर्नापि; $B_1$ [ अ ]शुश्रूषुश्चैव; $M_6$ ( with hiatus ) अवजज्ञे च ( for न शुश्रूषति ). $B_3$ ( with hiatus ) अशुश्रूषुर्द्विजातिषु; $B_4$ न शुश्रूषुर्द्विजातिषु.

नाम तस्य च दण्डेति पिता चक्रेऽल्पतेजसः ।
अवश्यं दण्डपतनं शरीरेऽस्य भविष्यति ॥ १५
स पश्यमानस्तं दोषं घोरं पुत्रस्य राघव ।
विन्ध्यशैवलयोर्मध्ये राज्यं प्रादादरिंदम ॥ १६
स दण्डस्तत्र राजाभूद्रम्ये पर्वतरोधसि ।
पुरं चाप्रतिमं राम न्यवेशयदनुत्तमम् ॥ १७
पुरस्य चाकरोन्नाम मधुमन्तमिति प्रभो ।
पुरोहितं चोशनसं वरयामास सुव्रतम् ॥ १८
एवं स राजा तद्राज्यं कारयत्सपुरोहितः ।
प्रहृष्टमनुजाकीर्णं देवराज्यं यथा दिवि ॥ १९　G. 7. 86. 19 B. 7. 79. 19 L. 7. 81. 19

इति श्रीरामायणे उत्तरकाण्डे सप्ततितमः सर्गः ॥ ७० ॥

15 $^{a}$) T$_{4}$ [ अ ]स्य स ( for तस्य ). Ñ$_{1}$ [ इ ]ति; D$_{1.4}$ T$_{1.2.4}$ G$_{3}$ M$_{8}$ तु ( for च ). —$^{b}$) M$_{7}$ तस्य ( for चक्रे ). V$_{3}$ [ ऽ ]ति- ( for ऽल्प- ). Ś V$_{1}$ D$_{8.12}$ स बुद्धिमान् ; Ñ D$_{1-5.9}$ [ ऽ ]ति( D$_{9}$ च )बुद्धिमान् ; T$_{1.2}$ G$_{3}$ M$_{3}$ [ ऽ ]ल्पमेधसः; M$_{6}$ °चेतसः ( for ऽल्पतेजसः ). —For 15$^{ab}$, V$_{2}$ B subst. :

1166* चक्रे नाम पिता तस्य दुर्बुद्धेर्दण्ड इत्युत ।

[ V$_{2}$ B$_{1.2}$ transp. चक्रे and नाम. B$_{1}$ बुबुद्धेर्. V$_{2}$ B$_{4}$ इत्यथ. ]

—$^{c}$) Ś B$_{2.3}$ D$_{8.9.12}$ भविष्यं; Ñ$_{1}$ V B$_{1.4}$ D$_{1-5}$ M$_{6}$ भविष्यद्; G$_{3}$ अवश्य-; Cg.k.t as in text ( for अवश्यं ). —$^{d}$) Ś V$_{3}$ D$_{8.12}$ ह्यस्य पश्यति; Ñ$_{1}$ V$_{1}$ तस्य कथ्यते; Ñ$_{2}$ B$_{1.3.4}$ तस्य दृष्टवान् ; V$_{2}$ ( before corr. as in Ñ$_{2}$) B$_{2}$ M$_{6}$ तस्य पार्थिव; D$_{1.3.4}$ तस्य वीक्ष्य सः; D$_{2.9}$ तस्य पश्यतः; D$_{5}$ वीक्ष्य तस्य सः; M$_{1}$ [ ऽ ]स्य पतिष्यति ( for ऽस्य भविष्यति ).

16 $^{ab}$) Ś V$_{3}$ D$_{8.12}$ सं- ( for स ). Ñ$_{1}$ तप्यमानस्तु; D$_{1.3-5}$ स वीक्ष्यमाणस् ; D$_{7.10.11}$ T$_{3.4}$ M$_{3.5}$ Ct अपश्यमानस् ( for स पश्यमानस् ). D$_{7.10.11}$ Ct देशं ( for दोषं ). Ñ$_{2}$ B$_{1.2.4}$ पश्यन्नथ( B$_{2}$ °मानस् ) तदा रोषाद् ( B$_{4}$ समं दंडं ); V$_{2}$ G ( ed. ) पश्यन्न( G [ ed. ] °न्त्व )थ स तं दंडं; B$_{3}$ पश्यन्नृपयुतं दंडं ( for $^{a}$). V$_{3}$ transp. दोषं and घोरं. V$_{2}$ B पुत्रं तु ( for पुत्रस्य ). —V$_{2}$ reads $^{cd}$ in marg. —$^{c}$) Ś$_{1.2}$ V$_{3}$ D$_{8.12}$ स विंध्यमलयोर् ; Ñ$_{1}$ B$_{2}$ ( m. also as in text ) D$_{1.4.5}$ T$_{3.4}$ विंध्यस्य शृंग( Ñ$_{1}$ सह्य )योर् ; V$_{1}$ माल्यवद्विंध्ययोर् ( for विन्ध्यशैवलयोर् ). B$_{3}$ पार्श्वे ( for मध्ये ). D$_{2.3.9}$ विंध्यशैलवनात्पार्श्वे. —$^{d}$) Ś D$_{8.12}$ राष्ट्रं; G$_{3}$ damaged ( for राज्यं ). Ś$_{1.3}$ V$_{3}$ D$_{8.12}$ M$_{5.6}$ अरिंदमः. Ñ V$_{1}$ B$_{3.4}$ D$_{1-5.9}$ T$_{3.4}$ G ( ed. ) राज्यम( Ñ$_{2}$ °ज्यं त )स्य ( B$_{3.4}$ D$_{5}$ °स्मै ) ददौ प्रभुः( G [ ed. ] पिता ); B$_{1.2}$ तस्य राज्यमदात्पिता.

17 $^{a}$) Ś$_{1}$ [ आ ]सीद् ( for [ अ ]भूद् ). —$^{b}$) V$_{2}$ रम्य-; M$_{5}$ राज्ये ( for रम्ये ). B$_{4}$ सागर- ( for पर्वत- ). M$_{7}$ -मूर्धनि. —$^{c}$) V$_{1}$ नाम; D$_{3.9}$ राजन् ; M$_{1}$ रम्यं ( for राम ). —$^{d}$) Ś Ñ$_{1}$ V$_{1}$ B$_{3.4}$ D$_{1-5.8.9.12}$ न्यवेशयत संम( D$_{5}$ °भृ )तं( Ñ$_{1}$ °तः ); Ñ$_{2}$ V$_{2}$ B$_{2}$ स ( B$_{2}$ सं )न्यवेशयदुत्तमं( V$_{3}$ °यदात्मनः ). —After 17, V$_{3}$ ins. :

1167* तथा हि सकला राजन्भवे*वाभिसंमतम् । ( sic )

18 $^{c}$) T$_{1.2}$ G$_{3}$ M$_{2.3}$ पुरोधसं ( for °हितं ). D$_{6.7.10.11}$ M$_{3.4.10}$ तु ( for च ). —$^{d}$) V$_{3}$ सुव्रतः; M$_{6}$ सत्तमं ( for सुव्रतम् ). —For 18, Ś Ñ V$_{1.2}$ B D$_{1-5.8.9.12}$ subst.; while V$_{3}$ subst. l. 1 only for 18$^{ab}$; whereas T$_{3.4}$ subst. l. 2 only for 18$^{cd}$ :

1168* नाम तस्य पुरस्याथ मधुमत्तेति चाकरोत् ।
तथा चोशनसं विप्रं पुरोधसमथाकरोत् ।

[ ( l. 1 ) B$_{1}$ तस्य नाम ( by transp. ). V$_{2}$ ( before corr. as above; after corr. marg. ) B$_{4}$ च ( B$_{4}$ [ अ ]थ ) चक्रे स ( for पुरस्याथ ). D$_{1}$ मधुमद् ; D$_{3}$ °मंत; D$_{4.5}$ °मान् ( for मधुमत्त ). Ñ$_{1}$ V$_{1.2}$ ( before corr. as above; after corr. marg. ) B$_{4}$ D$_{2.9}$ मधुमत्त इति( V$_{2}$ °मंत इव; D$_{2.9}$ °मंतमिति ) स्वयं ( for the post. half ). —( l. 2 ) Ñ$_{1}$ अथ; Ñ$_{2}$ V$_{2}$ B वव्रे ( for तथा ). D$_{5}$ पुत्रं ( for विप्रं ). Ñ$_{2}$ V$_{2}$ B अनुत्तमं; D$_{5}$ इवा° ( for अथाकरोत् ). ]

19 $^{a}$) V$_{3}$ राजा च ( for स राजा ). V$_{2}$ lacuna from तद् up to $^{b}$. —$^{b}$) Ś Ñ V$_{1.2}$ B D$_{1-5.8.9.12}$ T$_{1.3.4}$ M$_{3}$ चकार; D$_{6.7.10.11}$ G$_{3}$ M$_{5.8}$ अकरोत् ; T$_{2}$ G$_{1.2}$ M$_{2.4.6.10}$ कारयन् ( for कारयत् ). B$_{3.4}$ सुसमाहितः; M$_{5}$ स महीपतिः ( sic ); M$_{6}$ सपुरोहितं. M$_{7}$ कारयामास सुव्रतः. —$^{c}$) V$_{2}$ ( m. also as in text ) संहृष्ट-; M$_{9}$ प्रहृष्टं. Ś V$_{3}$ D$_{8.12}$ -जनसंकीर्णं ( for -मनुजाकीर्णं ). —$^{d}$) Ś Ñ V B D T M$_{6}$ -राजो ( for -राज्यं ). D$_{2}$ T$_{1.2}$ -दिवं; M$_{1.5}$ -विधि; M$_{3}$ वृषा ( for दिवि ). —After 19, Ñ$_{2}$ V$_{2}$ B D$_{6.7.10.11}$ ins. :

1169* ततः स राजा मनुजेन्द्रपुत्रः
साधं च तेनोशनसा तदानीम् ।
चकार राज्यं सुमहान्महात्मा
शक्रो दिवीवोशनसा समेतः ।

[ ( l. 1 ) V$_{2}$ ( before corr. as above ) B$_{4}$ -सूनुः ( for -पुत्रः ). —( l. 2 ) V$_{2}$ B हि ( for च ). —( l. 3 ) Ñ$_{2}$ B$_{1.2.4}$ D$_{6.7}$ सुमहन् ( for °महान् ). —( l. 4 ) V$_{2}$ B$_{3.4}$ [ आं ]गिरसा ( for [ उ ]शनसा ). ]

# ७१

G. 7. 87. 1
B. 7. 80. 1
L. 7. 82. 1

एतदाख्याय रामाय महर्षिः कुम्भसंभवः ।
अस्यामेवापरं वाक्यं कथायामुपचक्रमे ॥ १
ततः स दण्डः काकुत्स्थ बहुवर्षगणायुतम् ।
अकरोत्तत्र मन्दात्मा राज्यं निहतकण्टकम् ॥ २
अथ काले तु कस्मिंश्चिद्राजा भार्गवमाश्रमम् ।
रमणीयमुपाक्रामच्चैत्रे मासि मनोरमे ॥ ३
तत्र भार्गवकन्यां स रूपेणाप्रतिमां भुवि ।
विचरन्तीं वनोद्देशे दण्डोऽपश्यदनुत्तमाम् ॥ ४
स दृष्ट्वा तां सुदुर्मेधा अनङ्गशरपीडितः ।
अभिगम्य सुसंविग्नः कन्यां वचनमब्रवीत् ॥ ५
कुतस्त्वमसि सुश्रोणि कस्य वासि सुता शुभे ।
पीडितोऽहमनङ्गेन पृच्छामि त्वां सुमध्यमे ॥ ६
तस्य त्वेवं ब्रुवाणस्य मोहोन्मत्तस्य कामिनः ।
भार्गवी प्रत्युवाचेदं वचः सानुनयं नृपम् ॥ ७

Colophon. *Sarga name*: Ś V3 D8.12 मधुमत्तनिवेशनं (V3 °नः); Ñ1 V1 D2 मधुसंनिवेशः; Ñ2 B1 D6 दण्डोपाख्यानं; V2 मधुमत्पुरनिवेशः; B3.4 मधुमन्तःपुरनिवेशनं (B4 °वेशः); B2 दण्डकोपाख्यानं; D1 मधुमत्तिदेशः; D3 मधुमन्निवासः; D4.5 मधुवन्निवेशः; D9 मधुमत्संनिवेशः. —*Sarga no.* (figures, words or both): Ś Ñ1 V2.3 D2.12 om.; Ñ2 84; V1 62; B1 D9 83; B3 85; B4 T4 87; D3.8 76; D5–7.10.11 T1.2 G M1–5.7.9.10 79; T3 86; M6.8 78. —After colophon, T4 concludes with श्रीरामार्पणमस्तु । श्रीरामाय नमो नमः; G M5.8 with श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

## 71

D12 begins with ॐ.

1 $^a$) Ñ1 V1 D1–5.9 T3.4 एवम्; Cm.g.k.t as in text (for एतद्). Ś Ñ V B D1–5.8.9.12 M6 रामस्य (for रामाय). —$^b$) V1 भगवांस्तदा; D11 कुल° (for कुम्भसंभवः). —$^c$) Ś V3 D8.12 रामम्; Ñ1 D1–5 तस्याम्; Ñ2 V2 B1.2 D9 तस्य; V1 तस्माद्; B3.4 पुनर् (for अस्याम्). Ñ1 D9 चैव; Ñ2 V2 B1.2 [ए]व च; T3 एवं (for एव). T3 परं; M6 चापरं (hypm.) (for [अ]परं). Cg.k cite $^c$ as in text. —V3 lacuna from 1$^d$ up to 2$^b$. —$^d$) Ñ2 वक्तुं सम्-; V2 B3.4 व्याहर्तुम्; B1.2 कथितुम् (for कथायाम्). ❀ Cm: अस्यामेव उपक्रान्तायामेव कथायाम् ।; Ct: अस्यामेवापरं वाक्यमुपक्रान्तकथायामेव संबद्धम् . ❀

2 V3 lacuna for 2$^{ab}$ (cf. v.l. 1). —$^a$) G3 damaged for ततः स. Ś Ñ1 D2.8.12 T3 G2 काकुत्स्थो. —$^b$) Ś1.2 Ñ1 D1–5.8.9.12 बहून् (for बहु-). Ś Ñ1 D1–4.8.12 -गणायुतान्; V1 -गणान्वितान्; M6 -गुणायुतं. —$^c$) V2 D6.7.10.11 Ct दांतात्मा; T3.4 धर्मात्मा (for मन्दात्मा). Ś V3 D8.12 कारयंस्तत्र धर्मात्मा; Ñ1 V1 B3.4 D1–5.9 अकारयत (D5 °यत्स) धर्मात्मा. —$^d$) D5 -दंडकं (for -कण्टकम्).

3 $^a$) D2.9 च (for तु). V2 B कस्यचित्त्वथ कालस्य. —$^b$) Ñ2 राजा तं भार्गवाश्रमं; B2–4 भार्गवस्याश्रमं शुभं (B3 प्रभुः). ❀ Cg.k भार्गवः शुक्रः तस्यायमपि भार्गवः तम्।; Ct भार्गवः शुक्रः तत्संबन्धिनमाश्रमम्. ❀ —$^c$) D2.3 उपाक्रामच्; T3.4 जगामाथ; Ct as in text (for उपाक्रामच्). —$^d$) Ś V3 D8.12 मासि चैत्रे (by transp.); Ñ1 V1 D1–4.9 चैत्रे (V1 D3 °त्र) मासे; V2 B मासे चैत्रे (for चैत्रे मासि). D13 om.; G1 मनोहरे; M7 °रमं (for मनोरमे).

4 $^a$) M7 तस्य; M10 अत्र (for तत्र). Ñ V1 D1–11 T3 तु; B3 च; T4 वै; G1 तां (for स). B1 भार्गवस्य च कन्यां स. —V3 lacuna from व in $^c$ up to $^d$. —$^d$) Ś D12 अनिंदितां; Ñ1 V1 तदोत्तमां; V2 (before corr. as in text) B2.4 नराधिपः; D8 अनिर्मितां (for अनुत्तमाम्).

5 $^a$) B2 दृष्ट्वैव तां; T1.2 G3 दृष्ट्वा तां स (by transp.) (for स दृष्ट्वा तां). Ñ1 B1 तु (for सु-). Ś V2.3 D8.12 तां स दृष्ट्वैव दुर्मेधाः; B3.4 तां दृष्ट्वैव (B4 °वं) सुदुर्बुद्धिर्. —$^b$) Ś Ñ2 V2.3 B1.2 D1.3–5.8.12 M4 कंदर्प-; Ñ1 V1 D2.9 हृदंग- (for अनङ्ग-). —$^c$) D7 अधिगम्य. Ś Ñ V1 B1.2 D2.3.5.12 समुद्विग्नः; T1 G2 M3.4.9 सुसंविग्नां (for सुसंविग्नः). G1 अभिगच्छन्सुसंपन्नः.

6 $^a$) M3 अपि (for असि). —$^b$) D3.9 कुतो (for कस्य). Ś B1 D1.3–5.8.12 M1 चासि; B2 वा त्वं; T3.4 चैव (for वासि). Ñ2 M3 (before corr.) सुमध्यमे; V3 D12 शुभानने (for सुता शुभे). —$^d$) D9 *च्छामि; K (ed.) गच्छामि (for पृच्छामि). Ñ2 B1 D3.6.7.10.11 T4 (also as in text) शुभानने; V2 (before corr.) B4 सुशोभने (for सुमध्यमे).

7 $^a$) V1 [ए]व तद्; V2 B1.2 D1–4.9 [ए]वं (D4 °व) तु (V2 B1.2 प्र-); K (ed.) चैवं (for त्वेवं). T3.4 एवं तस्य (for तस्य त्वेवं). Ñ1 D5 तस्यैवं भाष (D5 ब्रुव)-माणस्य. —V3 lacuna for $^b$. —$^b$) Ś1.3 D6–8.13 M4.5 मोहान्मत्तस्य; Ś2 Ñ1 V1 D1–5.9 T2–4 मदोन्मत्तस्य; Ñ2 V1 B1–3 मोहाविष्टस्य; Cg.k.t as in text (for मोहोन्मत्तस्य). —$^d$) Ś D8.12 परं; V2.3 B2 T1 G1 M5 नृप; B4 प्रियं; D6.7.10.11 त्विदं (for नृपम्).

भार्गवस्य सुतां विद्धि देवस्याक्लिष्टकर्मणः ।
अरजां नाम राजेन्द्र ज्येष्ठामाश्रमवासिनीम् ॥ ८
गुरुः पिता मे राजेन्द्र त्वं च शिष्यो महात्मनः ।
व्यसनं सुमहत्क्रुद्धः स ते दद्यान्महातपाः ॥ ९
यदि वात्र मया कार्यं धर्मदृष्टेन सत्पथा ।
वरयस्व नृपश्रेष्ठ पितरं मे महाद्युतिम् ॥ १०
अन्यथा तु फलं तुभ्यं भवेद्घोराभिसंहितम् ।
क्रोधेन हि पिता मेऽसौ त्रैलोक्यमपि निर्दहेत् ॥ ११
एवं ब्रुवाणामरजां दण्डः कामशरार्दितः ।
प्रत्युवाच मदोन्मत्तः शिरस्याधाय सोऽञ्जलिम् ॥ १२
प्रसादं कुरु सुश्रोणि न कालं क्षेप्तुमर्हसि ।
त्वत्कृते हि मम प्राणा विदीर्यन्ते शुभानने ॥ १३
त्वां प्राप्य हि वधो वापि पापं वापि सुदारुणम् ।
भक्तं भजस्व मां भीरु भजमानं सुविह्वलम् ॥ १४　G. 7. 87. 14 B. 7. 80. 15 L. 7. 82. 14

8 b) Ś Ñ V1 D1.3–5.8.12 T3.4 शुक्रस्य; V3 द्विजस्य; D2.9 विप्रस्य (for देवस्य). —c) Ñ1 अजरां; B1 सुरजां (for अरजां). D12 om. नाम. —d) D1.4 श्रेष्ठाम् (for ज्येष्ठाम्). V2 B1 आश्रमवासिनः. —After 8, D6.7.10.11 T G M1–5.7–10 ins. :

1170* मा मा स्पृश बलाद्राजन्कन्या पितृवशा ह्यहम् ।

[ T2 M5.10 मां (for first मा). D6.10.11 मां (for second मा). M8 तामस्पृशत् (for मा मा स्पृश). —G3 damaged for तृवशा ह्यहम्. G1.2 M2.10 [अ]स्मि (for हि).]

9 a) Ś Ñ1 V1.3 D1–5.8.9.12 वृद्धः (for गुरुः). M8 च (for मे). V2 (before corr.; after corr. m. as in text) B3.4 उशना मे पिता राजंस्. —b) B4 तु (for च). T1.2 G3 M3 शिष्योसि (for च शिष्यो). V2 B3.4 पितुर्मम (for महात्मनः). —c) M7 च (for सु-). Ñ1 om. -महत्. D2 प्राप्तं; D5 प्राप्तः (for क्रुद्धः). B3 स दद्याद्व्यसनं क्रुद्धस्. —d) Ś V3 D8.12 मा; B1 M6 न (for स). B3 G2 M2.3.10 तव; G3 स वै (for स ते). B3 तातो (for दद्यान्). Ś Ñ V B D1–5.8.9.12 M6 महायशाः; T1 महत्पिता (for महातपाः).

10 a) B1 D1 ते (for वा). Ś Ñ V B2–4 D2–4.6.8.9.12 T3.4 M6 ते; B1 D1 वा; D5.10.11 [अ]न्यन्; T1.2 G1 M3 [अ]द्य; G3 स्यान् (for [अ]त्र). ※ Cg.k : यदि वान्यदिति ।; Ct यदि वान्यत् कामभोगानुकूल्यम्. ※ —b) D1.2.4.9 विधि- (for धर्म-). B3 -जुष्टेन; D4 -दृष्टे च (for -दृष्टेन). Ś Ñ V1.3 D1–5.8.9.12 T2–4 कर्मणा; B3.4 वै पथा; D7 सर्वथा; T1 G3 M1.3 वर्त्मना; M10 सत्पथे; Ct as in text (for सत्पथा). V2 B1.2 संपदा धर्मयुक्तया. —c) Ś Ñ2 V B D6–8.10–12 T3.4 G2 M1.5–7 नरश्रेष्ठ (D12 °व्याघ्र); L (ed.) नरश्रेष्ठं (for नृपश्रेष्ठ). —d) D5 मां (for मे). V2 (before corr.) B3.4 महाप्रभं; B1 °मतिं; B2 °द्युवत् (sic); D1–4 °द्युते; D5 °मुनिं (for महाद्युतिम्).

11 V2 om. 11. —ab) M2.4.10 भवेत् (for फलं). Ś Ñ V1.2 B D1–5.8.9.12 विपुलं दुःखं; T3.4 M6 विविधं (M6 ह्यफलं) घोरं (for तु फलं तुभ्यं). M2.4.10 भयं (for भवेद्). —G1.2 M1.5 transp. फलं and भवेद्. M6 क्रोध- (for घोर-). Ñ1 V1 T3.4 -[अ]भि(Ñ1 °ति)संज्ञितं; B1 D5–7 -[अ]भिसंधि (B1 °श्रि; D5 °ह)तं (for -[अ]भिसंहितम्). ※ Cm.g.k : घोराभिसंहितं महानर्थसंबद्धम् ।; so also Ct. ※ —V2 reads c in marg. —c) D1.3–5 तु (for हि). Ś Ñ V1.2 B1 D1–5.8.9.12 T3.4 मह्यं; B2 मे वै; T1.2 G3 M3.10 सौम्य (for मेऽसौ). B3.4 G (ed.) पिता मम हि सक्रोधस् (G [ed.] स क्रोधात्). —After 11, D6.7.10.11 T G M1–5.7–10 ins. :

1171* दास्यते चानवद्याङ्गि तव मां याचितः पिता ।

[ G2.3 वा (for च). M1 [अ]नवद्यांगीं. T2 त्वर (for तव). D10.11 Ct मा (for मां). T3 G1 M1.4.8–10 याचतः. ※ Ct : याचितः पिता मा मां तव दास्यते इत्यन्वयः. ※ ]

12 Ñ1 om. 12–14. —a) M1 एवं ब्रुवाणां राजा तु. —b) T3 काल- (for काम-). D6.7.10.11 -वशं गतः; T2 G1 M1 -वशार्दितः (for -शरार्दितः). —For 12ab, Ś Ñ2 V B D1–5.8.9.12 T3.4 subst. :

1172* एवं स राजा तां कन्यां ब्रुवन्तीं भार्गवीं तदा ।

[ V1 राजा स (by transp.). B3.4 D5 कन्यां तां (by transp.). V3 स तत्तदा तथाश्रित्य (for the prior half). V2 भार्गवीं; B2–4 D2.9.12 T3.4 ब्रुवतीं; D8 युवतीं (for ब्रुवन्तीं). V2 ब्रुवतीं (for भार्गवीं). B3 तथा (for तदा).]

—Ñ2 damaged for cd. —c) D2.9 तदो(D9 **)न्मत्तः. —d) D6 [आ]दाय (for [आ]धाय). D6.7.10.11 T1.2 G3 M3.5 चां(D10 प्रां)जलिं. Ś V1.3 D1–5.8.9.12 T3.4 शिरसाभिन (D5 °सा प्रण)तः प्रभुः; V2 B M6 प्रां(B4 M6 सां)जलिः प्रग्रहो नृपः.

13 Ñ1 om. 13 (cf. v.l. 12). —b) M8 कथं (for कालं). Ñ2 B3.4 कर्तुम्; V2 B1.2 वक्तुम्; Cm.g.k.t as in text (for क्षेप्तुम्). Ś V1.3 D1–5.8.9.12 T3.4 कामो (D2.9 मदो)न्मत्तस्य भार्गवि(Ś V2 D8.12 °सिनि). —d) Ñ2 V1 B2 D1–5.9 T1.2 M2.4.7.8 विशी(M8 °दा)र्यंते (Ñ2 B2 °ति); V2 B4 विदीर्यंति; B1 विपीदंति; T3.4 वितप्यं (T4 °पद्यं)ते (for विदीर्यन्ते). Ś V3 D8.12 सुमध्यमे; D5 सुशोभने; D6.7.10.11 वरानने (for शुभानने).

14 Ñ1 om. 14 (cf. v.l. 12). T4 om. 14ab. —a) B3 तं; G2.3 तां; M8 त्वा (for त्वां). Ś Ñ2 V1.2 B D6–8.10.11 M2.5.6.9 तु; V3 मां; D1–5.9 T3 मे (for हि). D12 प्राप्स्यसे (for प्राप्य हि). ※ Cg.k : त्वां प्राप्य मे यदि वधादिर्भवेत् भवतु नामेति शेषः ।; so also Ct. ※ Ś1 Ñ2 V1

G. 7. 87. 15 B. 7. 80. 16 L. 7. 82. 15 एवमुक्त्वा तु तां कन्यां दोर्भ्यां गृह्य बलाद्बली ।
विस्फुरन्तीं यथाकामं मैथुनायोपचक्रमे ॥ १५
तमनर्थं महाघोरं दण्डः कृत्वा सुदारुणम् ।
नगरं प्रययौ चाशु मधुमन्तमनुत्तमम् ॥ १६
अरजापि रुदन्ती सा आश्रमस्याविदूरतः ।
प्रतीक्षते सुसंत्रस्ता पितरं देवसंनिभम् ॥ १७

इति श्रीरामायणे उत्तरकाण्डे एकसप्ततितमः सर्गः ॥ ७१ ॥

B1.2 D1–6(marg.).9.12 T3 M1.3.6 वास्तु; V2 B3.4 मेस्तु; K (ed.) वा स्याच् (for वापि). —Ñ2 damaged for ᵇ. —ᵇ) M3 शापो (for पापं). T1.2 च (for वा). K (ed.) यदि (for [अ]पि सु-). M3 -दारुणः. Ś V1.3 D1–4.8.9.12 T3 वधाद्वापि यदु(Ś V3 D8.12 तथो)त्तरं; V2 B4 वधाद्वा यत्परं भवेत्; B1 M6 पापी ये वोपि(M6 °यो चास्ति) तद्ध(M6 ताम)धात् (corrupt); B2 (m. also as in V2) मेपाचो वास्तु यः शुभे; B3 वधात्किमपरं भवेत्; D5 बंधनं च यदुत्तरं. —ᶜ) T1.2 G3 भवेद् (for भक्तं). B3.4 M8 हि भज (for भजस्व). V1 भजस्व त्वं स्वयं देवि. —ᵈ) Ś Ñ2 V B1.2 D1–5.8.9.12 त्वयि भ(D9 स)क्तिर्हि(D5 °क्तयस्ति) मे प(D3 पु)रा(Ñ2 * * * *); B3.4 भक्तत्यागो न संमतः; M6 भक्तिर्हि परमा शुभा.

15 ᵃ) D4 om. तु. V2 (*sup. lin.* also) शुभां कन्यां; D8.9 तु कन्यां तु(D9 स) (for तु तां कन्यां). —ᵇ) D6.7.10.11 प्राप्य (for गृह्य). Ñ1 V1.2 (*sup. lin.* as in text also) B3.4 D1–4.9 T3.4 बलात्सं(Ñ1 ततः सं)गृह्य(V2 °कृष्य; B4 °वेष्ट्य) बाहु(V1 T3.4 पाणि)ना; D5 स संगृह्याथ बाहुना. —ᶜ) T1.2 G3 M3 सं-; Cg.t as in text (for वि-). ❀ Ck: विस्फुरन्तीं विलुठन्तीं "स्फुरतिस्फुलत्योर्निर्निविभ्यः" इति षत्वम्. ❀ Ś Ñ1 V1 D8.12 यथाप्राणं. T3.4 वेपमानामति(T4 °था)क्रम्य.

16 ᵃ) B1 एतमर्थं; M7 ततोनर्थं; Cm as in text (for तमनर्थं). T1 G3 M1.7–9 महद्घोरं. —ᵇ) D1.3.4 M1 [अ]ति- (for सु-). B1 -दारुणः. ❀ Cm: अत्र महाघोरसुदारुणशब्दाभ्यां लोकद्वयभयंकरत्वमुच्यते. ❀ —V2 reads ᶜ in marg. —ᶜ) Ñ2 V2 B1.2 स्वपुरं (for नगरं). Ś Ñ1 V1.3 D1–5.8.9.12 T3.4 स्वं(D3*) जगाम; G1 प्रविवेश (for प्रययौ च). Ñ2 V2 B1.2 D6.7.10.11 M6 आशु (for चाशु). B3.4 आगमत्स्वपुरं राम. —ᵈ) Ś Ñ2 B1–3 D12 मधुमत्तम्.

17 D9 om. 17. V2 reads ᵃᵇ in marg. Note hiatus between ᵃ and ᵇ. —ᵃ) B1 सुरजाभि-; M1 अरजा वि-. ❀ Cg: अरजाऽपीति।; Ck: अरजापीति आकारान्तो नामत्वात्।; so also Ct. ❀ G2 च (for सा). Ś Ñ1 V B3.4 D1–5.8.12 भार्गवी रुद(D4 °दं)ती दीना(B3 गत्वा; D4 नाम्ना). —ᵇ) Ñ1 B4 D1–5 M5 सा(Ñ1 B4 D5 स्वा; M5 ह्या)श्रमस्य; V3 भार्गवस्य (for आश्रमस्य). V2 B3.4 समीपे (for [अ]विदूरतः). Ñ2 आश्रमादपि दूरतः. —ᶜ) D6 T1 M? प्रतीक्षं(T1 °क्ष)ती (for प्रतीक्षते). B2 स्व; G (ed.) [?] (for सु-). Ś D8.12 स्व(Ś1 स्व)पितरं; B1 तु सा त्रस्ता; B? सुदुःखार्ता (for सुसंत्रस्ता). Ñ1 V1 B3.4 D1–4 प्रत्यपालयदु-द्विग्ना; D5 (with hiatus) प्रत्युपालभ्य उद्विग्ना. —ᵈ) Ś D8.12 तत्रस्था (for पितरं). Ś Ñ1 B3 D2.3.8 -संमतं; V1.3 D1.4.5.12 -संमितं; T3.4 -वर्णितं(T4 °नी) (for -संनिभम्). ❀ Cg: प्रतीक्षन्ती पितरं आस्ते इति शेषः। प्रतीक्षते स संत्रस्तेति च पाठः. ❀ —After 17, Ñ2 V2 B ins.:

1173* इति कर्म सुदारुणं स कृत्वा
दण्डो दण्डमवाप्तवांस्तमुग्रम् ।
शृणु सर्वमशेषतस्तदद्य
कथयिष्ये तव राजसिंहवृत्तम् ।

[(l. 1) Ñ2 damaged from स up to दण्डो in l. 2. B1 कृत्वा स (by transp.); B3 कृत्वा (for स कृत्वा). —(l. 2) B4 om. दंड. B1 om. तम्. V2 असमग्रं; B3 अयमुग्रं; B4 यदुग्रं (for तमुग्रम्). —(l. 3) Ñ2 अस्य; B3 om. (for अद्य). —(l. 4) B4 प्रकथयिष्ये. Ñ2 राजसिंह सवृत्तं (for °वृत्तम्).];

while M7 ins. after 17:

1174* अथ सा शशिकान्तमाननं
हृदि निक्षिप्य भयातुरा तदा ।
विरुरोद हतं च भूपतिं
पितरं चाप्रतिमं निरीक्ष्य तम् ।

Colophon. —*Sarga name*: Ś Ñ1 D8.9.12 अरजा-प्रमाथो; Ñ2 B2 D6 अ(B2 सु)रजाधर्षणं; V2 B1.3.4 सु(B3.4 अ)रजाभिगमः; V3 रजोन्मथनः; D1–4 अरजारजः; D5 अरजा-सरजा. —*Sarga no.* (figures, words or both): Ś Ñ1 V D2.12 om.; Ñ2 85; B1 D9 84; B3 86; B4 T4 88; D3.8 77; D5 72; D6.7.10.11 T1.2 G M1–5.7.9.10 80; T3 87; M6.8 79. —After colophon, T4 concludes with श्रीरामार्पणमस्तु। श्रीरामाय नमो नमः; G M2.5.8 with श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

# ७२

स मुहूर्तादुपश्रुत्य देवर्षिरमितप्रभः ।
स्वमाश्रमं शिष्यवृतः क्षुधार्तः संन्यवर्तत ॥ १
सोऽपश्यदरजां दीनां रजसा समभिप्लुताम् ।
ज्योत्स्नामिवारुणग्रस्तां प्रत्यूषे न विराजतीम् ॥ २
तस्य रोषः समभवत्क्षुधार्तस्य विशेषतः ।
निर्दहन्निव लोकांस्त्रीञ्शिष्यांश्चेदमुवाच ह ॥ ३
पश्यध्वं विपरीतस्य दण्डस्याविदितात्मनः ।
विपत्तिं घोरसंकाशां क्रुद्धामग्निशिखामिव ॥ ४
क्षयोऽस्य दुर्मतेः प्राप्तः सानुगस्य दुरात्मनः ।
यः प्रदीप्तां हुताशस्य शिखां वै स्प्रष्टुमिच्छति ॥ ५ G. 7. 88. 5 B. 7. 81. 5 L. 7. 83. 5

## 72

$D_{12}$ begins with ॐ.

1 $^{a}$) $D_1$ स मुहूर्तम्; $D_{12}$ सुमुहूर्ताद्; $M_3$ भार्गवस्तम्; Cm.g.k as in text (for स मुहूर्ताद्). Ś $\tilde{N}_2$ $D_{8.12}$ -स्पृष्ट्वा; $\tilde{N}_1$ $D_5$ -स्पश्यं; $V_1$ $D_{3.9}$ $M_6$ -स्पृश्य; Cm.g.k.t as in text (for -श्रुत्य). $V_2$ B ततो राम मुहूर्तात्स. —$^{b}$) Ś $\tilde{N}_2$ $V_2$ $D_{8.12}$ महर्षिर्; $\tilde{N}_1$ $V_1$ $B_{1-3}$ $G_2$ $M_6$ ब्रह्मर्षिर् (for देवर्षिर्). Ś $V_{1.3}$ $D_{8.12}$ -द्युतिः (for -प्रभः). —$^{c}$) $D_9$ तमाश्रमं शिष्यकृतं. —$^{d}$) $Ś_{2.3}$ $\tilde{N}_1$ $D_{3.6-8.11.12}$ $T_{1-3}$ $G_{2.3}$ $M_{2.3.6.9}$ स न्यवर्तत; $D_{2.9}$ सोभ्यवर्तत; $G_1$ $M_{5.8}$ सश्यवर्तत; $M_1$ सन्निवर्तत; $M_7$ om. (for संन्यवर्तत).

2 $^{a}$) $B_1$ सुरजां (for अरजां). $D_{2.9}$ तमनर्थं महाघोरं. —$^{b}$) Ś $V_3$ $D_{12}$ [अ]भिपरिप्लुतां; $D_8$ [अ]धिपरिप्लुतां (for समभि°). —$\tilde{N}_1$ om. $^{cd}$. —$^{c}$) $V_3$ $D_{10}$(marg.).$_{11}$ ग्रह- (for [अ]रुण-). —$^{d}$) $M_7$ वपुषा; Cg.k.t as in text (for प्रत्यूषे). $M_3$ हि; $M_6$ च; $M_7$ [ए]व; Ct as in text (for न). $M_3$ [अ]विराजतीं; Ct as in text (for विराजतीम्). —For $2^{cd}$, Ś $\tilde{N}_2$ $V_{1.2}$ (marg.) B $D_{1-5.8.9.12}$ $T_{3.4}$ subst.:

1175* उपस्यरुणसंयुक्तां ज्योत्स्नामिव निरञ्जनाम् ।

[$D_2$ ओष्ठस्फुरण- (for उपस्यरुण-). $V_2$ (before corr. as above) $B_{3.4}$ प्रत्युपस्यरुणत्र($V_2$ °ग्र)स्तां; $B_2$ प्रत्यूषारुणसंकाशां (for the prior half). $\tilde{N}_2$ विभावसोः; $V_1$ $D_{1-5.9}$ $T_{3.4}$ नि($D_1$ $T_{3.4}$ सु)रंजितां; $V_2$ (before corr. as in $B_2$) $B_{3.4}$ हतप्रभां; $B_{1.2}$ विराजतीं($B_2$ °जितां) (for निरञ्जनाम्).]

—Thereafter $\tilde{N}_2$ $V_2$ $B_{3.4}$ cont.; while $B_2$ ins. after 4:

1176* स तामपृच्छद्दयितां सुतां परमदुःखिताम् ।
किमेतदिति सोवाच दण्डस्य दुरतिक्रमम् ।

[(l. 1) $B_2$ कुपितां(sic) (for दयितां). $B_3$ ऋषिः (for सुतां).]

—Thereafter $B_2$ cont. 1178*.

3 $M_1$ damaged for $^{a}$ except तस्य रो. —$^{b}$) Ś $\tilde{N}_1$ $V_1$ $B_{3.4}$ $D_{1-5.8.9.12}$ $M_{2.10}$ महात्मनः (for विशेषतः). —After $3^{ab}$, $D_3$ ins.:

1177* कन्यां ममाश्रमस्यैव नात्मानं कोऽवबुद्धवान् ।
स मुहूर्तमिव ध्यात्वा मुनिः किंचिदवाङ्मुखः ।
दण्डापचारबुद्ध्या स बभूव क्षुभितेन्द्रियः ।

—$Ś_2$ reads $3^{c}$–$5^{b}$ twice. —$^{c}$) Ś $\tilde{N}_1$ $V_1$ $D_{1-5.8.9.12}$ निर्दग्धुमिव; $T_{3.4}$ निर्दग्धुकामो (for निर्दहन्निव). $\tilde{N}_2$ $V_2$ $B_{1.2}$ दिव्येन चक्षुषा वीक्ष्य. —$^{d}$) Ś $V_3$ $D_{8.12}$ शिष्यानिदम्; $\tilde{N}_1$ $V_1$ $D_{2.9}$ स शिष्यान्सम्-; $\tilde{N}_2$ $V_2$ $B_{1.2.4}$ $T_{3.4}$ ततः($B_2$ क्रुद्धः; $T_{3.4}$ भृगुः) शिष्यान्; $D_{1.3-5}$ शिष्यान्स सम्- (for शिष्यांश्चेदम्).

4 $Ś_2$ reads $3^{c}$–$5^{b}$ twice. —$^{a}$) $B_4$ वीक्षध्वं. Ś $V_{2.3}$ $B_{1.2}$ $D_{8.12}$ विपरीतेन; Cm.g.k.t as in text (for विपरीतस्य). $M_6$ विपरीतस्य दंडस्य. —$^{b}$) $V_{2.3}$ दंडेन; $M_6$ पश्यत (for दण्डस्य). $\tilde{N}$ $V_1$ $D_{1-5.9}$ $T_{3.4}$ [अ]दीर्घदर्शि($D_5$ °जीवि)नः; $T_1$ $G_{2.3}$ $M_{2-5.7-9}$ [अ]विजितात्मनः. Ś $B_{1.2}$ $D_{8.12}$ दंडेनाविदितात्मना; $G_1$ दंडकस्य दुरात्मनः. —$^{c}$) Ś $V_3$ $D_{8.12}$ विशता; $T_4$ रुदंतीं; Cm.g.k.t as in text (for विपत्तिं). $M_5$ क्रोध- (for घोर-). Ś $V_3$ $D_{8.12}$ -संकाशं (for -संकाशां). —$^{d}$) $\tilde{N}_1$ $V_1$ $D_{1-5.9}$ $T_{3.4}$ दीप्ताम्; $D_{7.10.11}$ Ct क्रुद्धाद्; Ck as in text (for क्रुद्धाम्). Ś $V_3$ $D_{8.12}$ मत्समीपं दुरात्मना; $\tilde{N}_2$ $V_2$ $B_{1.2}$ आत्मनः संकरीकृतां; $B_{3.4}$ कालेनोपहतात्मनः. ❀ Cg: अग्निशिखामिव स्थितां क्रुद्धामरजाम् । क्रुद्धादग्निशिखामिवेति पाठे क्रुद्धान्मत्तो जायमानामग्निशिखासदृशीं विपत्तिं विनाशं पश्यध्वम्. ❀ —After 4, $V_2$ $B_4$ ins.; while $B_2$ ins. 1176* and then cont.:

1178* व्याहारयति मे वाचं निगूढामपि कर्मणा ।
दण्डकोपसमुत्थेन दीप्तामग्निशिखामिव ।

[(l. 1) $V_2$ वाचं मे (by transp.). —(l. 2) $V_2$ -समुत्सेक- (for -समुत्थेन).]

5 $Ś_2$ reads $3^{c}$–$5^{b}$ twice. —$^{a}$) $B_4$ सुमहान् (for दुर्मतेः). $\tilde{N}_2$ $V_2$ $B_{1-3}$ जातः; $V_3$ कार्यः; Cg as in text (for प्राप्तः). —$^{b}$) $V_3$ lacuna from दु up to °. Ś $D_{8.12}$ $M_6$ [अ]जितात्मनः; $\tilde{N}_1$ $V_1$ $B_{3.4}$ $D_{1-4.9}$ $T_{3.4}$ न संशयः; $D_{6.10.11}$ $M_4$ महात्मनः; $M_7$ बलानुगः (for दुरात्मनः). $D_5$ सानुबंधस्य निश्चितः. —$B_4$ om. $5^{cd}$. —$^{c}$) $V_1$ सु-; $B_1$ यां; $G_{1.2}$ $M_{2.4}$ यत्; Ct as in text (for यः). Ś $\tilde{N}_1$ $D_{2.8.12}$ $M_6$ प्रदीप्त-($D_2$ $M_6$ °प्तं) (for प्रदीप्तां).

G. 7. 88. 6 B. 7. 81. 6 L. 7. 83. 6 यस्मात्स कृतवान्पापमीदृशं घोरदर्शनम् ।
तस्मात्प्राप्स्यति दुर्मेधाः फलं पापस्य कर्मणः ॥ ६
सप्तरात्रेण राजासौ सभृत्यबलवाहनः ।
पापकर्मसमाचारो वधं प्राप्स्यति दुर्मतिः ॥ ७
समन्ताद्योजनशतं विषयं चास्य दुर्मतेः ।
धक्ष्यते पांसुवर्षेण महता पाकशासनः ॥ ८
सर्वसत्त्वानि यानीह स्थावराणि चराणि च ।
महता पांसुवर्षेण नाशं यास्यन्ति सर्वशः ॥ ९
दण्डस्य विषयो यावत्तावत्सर्वसमुच्छ्रयः ।
पांसुभूत इवालक्ष्यः सप्तरात्राद्भविष्यति ॥ १०
इत्युक्त्वा क्रोधसंतप्तस्तमाश्रमनिवासिनम् ।
जनं जनपदान्तेषु स्थीयतामिति चाब्रवीत् ॥ ११
श्रुत्वा तूशनसो वाक्यं सोऽश्रमावसथो जनः ।
निष्क्रान्तो विषयात्तस्य स्थानं चक्रेऽथ बाह्यतः ॥ १२

Ñ2 V2 B1.2 इवाग्नेयीं (for हुताशस्य).—d) Ñ2 B1 स; V2 B2.3 सं- (for वै). Ñ2 V2 B1-3 स्पृष्टवानिमां(B3 °निह); D10.11 M10 स्प्रष्टुमर्हति. Ś Ñ1 V1.3 D1-5.8.9.12 T3.4 M6 ह्य(V1 D5.12 [all with hiatus] अ; D9 त्व)र्चिषं (D1.4 °षां; M6 सार्चिः सं)स्पृष्टवानिह(Ś V3 D8.12 °निव); M4.7 शिखां स्प्रष्टुमिहेच्छति; Cg as in text.

6 a) Ś B1 D8.12 M6 च; D2.9 त्वं (for स). B2 स यस्मात् (by transp.). M4.7 घोरम्; M6 वामम् (for पापम्). B1 कृतमन्यायम् (for कृतवान्पापम्).—b) Ś D1-5.8.9.12 -संमितं; D6.7.10.11 -संहितं; T3 -संज्ञितं (for -दर्शनम्).—c) Ñ V3 D2.3.5.9 प्राप्स्यसि. B3.4 समवाप्स्यति तस्मात्स; M6 प्राप्यते हि सुदुर्मेधाः.—d) Ś Ñ V B D1-5.8.9.12 M6 पांशु(D12 M6 °सु)वर्षमनुत्तमं(D5 °समन्वितं).

7 a) Ñ1 V1 D1-5.9 T3.4 स राजा सप्तरात्रेण(Ñ1 °वर्षेण).—b) D4 स्व- (for स-). Ñ2 B3 D6.7.10.11 -पुत्र- (for -भृत्य-).—V3 lacuna from c up to विष- in 8b.—d) T4 दारुणः (for दुर्मतिः).

8 V3 lacuna up to विष- in b (cf. v.l. 7). M7 om. 8-9.—a) Ñ1 तस्माच्च (for समन्ताद्).—b) Ñ1 B2 विषयश्च (for विषयं). V3 D5 तस्य (for चास्य). M6 विषयोस्य दुरात्मनः.—c) Ś V3 D8.12 M6 महता; D3 वर्षते; G3 यस्य ते; Cm.g.k.t as in text (for धक्ष्यते). Ñ1 D1-6.8.9 पांशु-. B3.4 पांशुवर्षेण धक्ष्यते(B4 दह्यते).—d) G2 महेंद्रः (for महता). T3.4 वह्निना भृशं; L (ed.) पापकर्मणः (for पाकशासनः). Ś V3 D8.12 M6 नाशं यास्यति सर्वशः(Ś1 V3 दुर्मते: [sic]; D8.12 दुर्मतिः).

9 V3 M6.7 om. 9 (for M7, cf. v.l. 8).—a) Ś D8.12 यानि (for सर्व-). Ś Ñ1 V1 D8.12 जानीत; B1 पापानि (for यानीह).—b) Ś Ñ1 V1 B3.4 D2.3.5.8.9.12 जंगमस्थावराणि च; Ñ2 V2 B2 जंगमानि स्थिराणि च.—After 9ab, Ś D8.12 ins.:

1179* दण्डदोषात्पांशु(D12 °सु)वर्षमिह क्षिप्रं भविष्यति ।

—c) Ś Ñ V1.2 B D1-5.8.9.12 सर्वेषां (for महता). Ñ1 D1-6.9 पांशु-. Ś D8.12 -वर्षाणां (for -वर्षेण).—d) D6.7 T3 सर्वतः (for सर्वशः). Ś D8.12 पतनात्प्रलयो भवेत्; Ñ V1.2 B D1-5.9 क्षयः(Ñ1 °यं) क्षिप्रं भवि(B1 करि)ष्यति; D10.11 विलयं सर्वतोगमन्; T1.2 G3 सर्वाणि विलयं गमन्. ❀ Cg: विलयमगमन् गमिष्यन्तीति यावत् ।; so also Ck.t. ❀

10 D5 om. 10.—a) B1 पापविषयो (for विषयो यावत्).—b) B1 यावच् (for तावत्). B1 चैव; G2 M1 वर्ष-; M10 सर्वं (for सर्व-). Ś Ñ V1 B3.4 D2.8.9.12 सवनमाश्रमं(B4 °मुच्छ्रयं); V2 चैवनमाश्रमं (sic) (*sup. lin.* also) चैव समंततः; V3 B2 D1.3.4.6.7.10.11 T G3 M3.5.6 सर्वं(B2 चैव; D6.7 T4 सर्वं) समुच्छ्रयं(D1.3.4 °च्छ्रितं) (for सर्वसमुच्छ्रयः). ❀ Cm: सर्वसमुच्छ्रयं उच्छ्रयते उद्गच्छत्यस्माद्देशादिति उच्छ्रयः चराचरप्राणिमात्रम् ।; so also Cg.k.t. ❀—c) Ś2 Ñ1 V D1-4.6.9 पांशु-. Ś Ñ1 V B2-4 D1.2.4.6-9.12 T1 M3.5-9 -भूतम्; Ñ2 B1 D10.11 T1-3 G3 -वर्षम्; D3 -भूमिम् (sic) (for -भूत). Ś D1-4.8.9.12 [अ]सेव्यं; Ñ1 B1 M6 [अ]कल्प्यं; Ñ2 V1.2 B2-4 [अ]कस्मात्; D6.7.10.11 T G1 M3.5.7-9 [अ]लक्ष्यं (for [अ]लक्ष्यः). V3 अपध्वस्तं (for इवालक्ष्यः). ❀ Cg.k: पांसुवर्षमिवालक्ष्यमिति । so also Ct. ❀—d) B3 सर्व- (for सप्त-). B1 D10.11 Cg.t -रात्रं (for -रात्राद्).—After 10, B2 ins. twice (first time in marg.):

1180* सत्यमेवं भवेद्वाक्यं नान्यथा चैव जायते ।

11 D10 reads 11 in marg.—a) Ś V3 D8.12 -संपन्नः; D6.7.10.11 T3.4 -ताम्राक्षः; G1 -संरक्तस्; G3 -संत्रस्तस् (for -संतप्तस्).—b) Ś Ñ1 V1.3 D3.5.6.8.12 T3.4 स्वम्; Ñ2 B1.2.4 T1.2 G3 M3 तद्-; D2.9 त(D9 स्व)स्य; Ck.t as in text (for तम्). V3 lacuna from वा up to d. Ś Ñ1 B2 D2.5.8.12 -निवासिनां; Cm.k.t as in text (for -निवासिनम्). ❀ Cg: तदाश्रमवासिनमिति । स्वाश्रमनिवासिनमित्यर्थः. ❀—c) Ś D8.12 जनपदाद्बाह्ये; Ñ V1.2 B D1-5.9 °पदस्यांते; Cm.g.k.t as in text (for °पदान्तेषु).—d) B1 अपि (for इति). Ñ1 [अ]वोचयत्; Ñ2 B4 D9 [अ]वोचत; V1 B1.3 D1.3.4 [अ]चोदयत्; V2 (after corr.; before corr. as in V1) [अ]रोचत; B2 [अ]भाषत; D2.5 [अ]नोदयत् (for चाब्रवीत्). Ś D8.12 संरब्धमित्युवाच ह.

12 M10 om. (hapl.) 12-13b.—a) M6 क्रुद्धस्य तद् (for तूशनसो). Ś Ñ1 V1.3 B3.4 D2.8.9.12 उक्तमात्रे(V3 °त्रो) ह्यु(B3.4 तू)शनसा; Ñ2 V2 B1.2 उक्तमात्रे(Ñ2 V2 °त्रो) ह्यनेनासौ (B2 marg. also चानेनासौ).—b) D6.7

स तथोक्त्वा मुनिजनमरजामिदमब्रवीत् ।
इहैव वस दुर्मेधे आश्रमे सुसमाहिता ॥ १३
इदं योजनपर्यन्तं सरः सुरुचिरप्रभम् ।
अरजे विज्वरा भुङ्क्ष्व कालश्चात्र प्रतीक्ष्यताम् ॥ १४
त्वत्समीपे च ये सत्त्वा वासमेष्यन्ति तां निशाम् ।
अवध्याः पांसुवर्षेण ते भविष्यन्ति नित्यदा ॥ १५
इत्युक्त्वा भार्गवो वासमन्यत्र समुपाक्रमत् ।
सप्ताहाद्भस्मसाद्भूतं यथोक्तं ब्रह्मवादिना ॥ १६

G. 7. 88. 17
B. 7. 81. 18
L. 7. 83. 17

T3.4 G1 M3.5 आश्रम- ( for सोऽश्रम- ). M6 -[ आ ]वसतिर् ( for -[ आ ]वसथो ). Ś V3 D8.12 स तत्र विषये जनः; Ñ1 V1 D2.3.5.9 सो( V1 [ with hiatus ] D3.5 आ; D2.9 ह्या )-श्रमावसथी जनः; Ñ2 V2 B2.4 स तत्रा( B2 marg. also सखी )वसथी जनः( B2 कृतः ); B1.3 तत्रस्था( B3 °त्र यो ) वसथीकृतः; D1.4 सर्वोपि तापसो जनः. ❀ Cg : सोश्रमावसथ इति छान्दसः संधिः।; so also Ck.t. ❀ —$^{c}$) M6 निष्क्रम्य ( for निष्क्रान्तो ). Ś Ñ V B D1–5.7–12 M6 तस्मात् ( for तस्य ). D6 T1 विषयांतस्य; M5 विषयांते च. —$^{d}$) Ñ1 V2 B D1.3–5 T1.2 G3 M1.3 च; Ñ2 V1 G1.2 स ( for ऽथ ).

13 M10 om. $13^{ab}$ (cf. v.l. 12 ). —$^{a}$) Ś D8.12 तत्; Ñ V B1.2.4 D1–5.9 M6 तं; Cm.g.k.t as in text ( for स ). V3 मुनिगणम्; T2 मुनिवरो ( with hiatus ); G1 मुनिः पुत्रीम् ( for मुनिजनम् ). —$^{b}$) Ñ V1 B1.3.4 D2.9 T3.4 सो( Ñ1 उ; B1 सु )रजाम्; M6 स्वां सुताम् ( for अरजाम् ). Ś D8.12 मुनिर् ( for इदम् ). —Note hiatus between $^{c}$ and $^{d}$. V2 reads $^{cd}$ in marg. also. —$^{c}$) V2 (marg.) दुर्वृत्ते; Cm.g.t as in text ( for दुर्मेधे ). Ñ1 V1 D1.2.4.5.9 आश्रमे त्वं( D5 स्वं ) सु( Ñ1 च )दुर्मेधे; Ñ2 V2 B1–3 आश्रमे त्वं ( B3 इहैव च ) स्वधर्मेण; D3 आश्रमे त्वं सुदुर्धर्षे. —$^{d}$) Ñ V1.2( marg. also as in text ) B1.2 D1.3–5 वसेह; B3 वस त्वं; D2.9 वस च; M5 ह्याश्रमे; G ( ed. ) वत्से ह ( for आश्रमे ). Ñ V1 D1.3–5 [ ए ]व समा°; V2 (marg.) M5 सु( V2 [ ए ]व ) समाहिते; B3 [ ए ]वसमन्विता; D2 [ ए ]वसमाश्रिता; Cg.k.t as in text ( for सुसमाहिता ). ❀ Cm : समाहितेति। समाहिता शोभनसमाधिमती. ❀

14 $^{a}$) Ñ1 वचन- ( for योजन- ). —$^{b}$) Ñ2 सुरुचिरं शुभं ( for °रप्रभम् ). —$^{c}$) Ñ1 अरजा; B1 सुरजे; D2 अरजं; D9 अजरे ( for अरजे ). M9 damaged for विज्वरा भुङ्क्ष्व. Ś Ñ V B D1–5.8.9.12 G2 विरजा( Ñ2 °जं ); M7 विज्वरं ( for विज्वरा ). M7 भुक्त्वा ( for भुङ्क्ष्व ). —$^{d}$) Ñ1 V1 B3.4 D1–5.9 M2.4.9 कालम् ( for कालश् ). Ñ1 B3.4 D1–5.9 अत्र; V1 एतं; M4 चास्य ( for चात्र ). Ñ1 V1 B4 D2.3.9 समासती; B2 समीक्ष्यतां; B3 D5 समाः शतं; D1.4 स्थिता सती; D6.8.12 T1.2 M5.8–10 प्रतीक्षतां; T3.4 प्रतीयतां; M4 प्रतीप्सितं ( for प्रतीक्ष्यताम् ). —After 14, V2 ins. 1181*.

15 Ñ1 D1.2.4.5.9 om. 15. —$^{a}$) M8 तत् ( for त्वत्- ). Ś2 B2 D3.8 T1–3 G M1–3.6.8–10 -समीपं ( for -समीपे ). M5 तु ( for च ). D7 ये च ( by transp. ). —$^{b}$) Ś V3 D8.12 चानिशं; Ñ2 V1 B2 यां निशां; D3 नित्यशः ( for तां निशाम् ). —For $15^{ab}$, B3.4 subst.; while V2 ins. after 14 :

1181* सत्त्वानि योजनं यावदिह यानि वसन्ति वै ।

[ V2 यांति; B3 [ आ ]यांति ( for यानि ). ]

—Ñ2 om.; V2 reads $15^{cd}$ in marg. —$^{cd}$) V2 D3.6 पांशु- ( for पांसु- ). Ś V B1.2 D8.12 M6 -वर्षस्य; G1 -वर्षेषु ( for -वर्षेण ). Ś1 D3 G2 M5.10 नित्यशः; V1.2 B1.2 तां निशां ( for नित्यदा ). V2 ( before corr. ) B3.4 अवध्यानि भविष्यंति पांशुवर्षस्य( B3 °ह )तानि वै. —After 15, Ś Ñ1 V B D1–5.7–12 T3.4 ins.; while Ñ2 ins. after $16^{ab}$ ( first occurrence ) :

1182* श्रुत्वा नियोगं तस्यर्षेररजा भार्गवी तदा।
तथेति पितरं प्राह भार्गवं भृशदुःखिता।

[ ( l. 1 ) V2 B2–4 तन्नृपेः; B1 तं तत्र; D2.9 देवर्षेः; D3 तस्यार्थे; D10.11 ब्रह्मर्षेः ( for तस्यर्षेर् ). V3 श्रुत्वा नियोजनं सा तु ( for the prior half ). Ñ1 V1 D1.2.4.7.9–11 T3.4 सारजा; Ñ2 V2 B सा कन्या; V3 * पिता; D3.5 सरजा ( for अरजा ). V3 विरजा ( for भार्गवी ). V2 ( before corr. ) -सुता; B4 शुभा; T3 तथा ( for तदा ). —After l. 1, D7 ins. $16^{cd}$ for the first time, repeating it in its proper place. —( l. 2 ) B3.4 [ उ ]वाच पितरं ( for पितरं प्राह ). D1.5 भार्गवी; D8 भ्रातरं ( sic ); D12 भर्तारं ( for भार्गवं ). T4 transp. पितरं and भार्गवं. Ś V3 D8.12 भृशदुःखितं; Ñ2 V2 B1.2 भृगुनंदनं; B3 दुःखपीडिता; B4 दुःखसंहिता ( for भृशदुःखिता ). ]

16 Ñ2 reads $16^{ab}$ twice. —$^{a}$) B3 भार्गवी ( for भार्गवो ). B3 सा तु; B4 D1.3.4 वासात्; D5 देशं; D9 कन्यां; M5 वाक्यं ( for वासम् ). —$^{b}$) Ś V3 B1 D8.12 M6 समुपागमत्; D6.7.10.11 समकारयत् ( for समुपाक्रमत् ). Ñ1 V1 B3.4 D1–5.9 T3.4 G ( ed. ) तस्मादन्यमु( D2.9 °दु; G [ ed. ] °म )पा( B3 °मथा )क्र( T3.4 ग )मत्. —After $16^{ab}$, Ś V3 D8.12 ins. :

1183* स तु शप्तस्तदा तेन प्रदेशो ब्रह्मवादिना ।;

while D6.7.10.11 T G M1–5.7–10 ins. :

1184* तच्च राज्यं नरेन्द्रस्य सभृत्यबलवाहनम् ।

[ G1 त्याज्यं; M1.2.8 राजन् ( for राज्यं ). ]

—D7 repeats $16^{cd}$ here ( cf. v.l. 1182* ). —$^{c}$) Ś Ñ2 V2.3 B1.2.4 D8.12 -भूतः ( for -भूतं ). M2.4.6.9.10 भस्मसंभूतं. M8 स सप्ताहाद्भस्मभूतं. —$^{d}$) Ś V3 D5.8.12

G. 7. 88. 18
B. 7. 81. 18
L. 7. 83. 18

तस्यासौ दण्डविषयो विन्ध्यशैवलसानुषु ।
शप्तो ब्रह्मर्षिणा तेन पुरा वैधर्मके कृते ॥ १७
ततः प्रभृति काकुत्स्थ दण्डकारण्यमुच्यते ।
तपस्विनः स्थिता यत्र जनस्थानमथोऽभवत् ॥ १८
एतत्ते सर्वमाख्यातं यन्मां पृच्छसि राघव ।
संध्यामुपासितुं वीर समयो ह्यतिवर्तते ॥ १९
एते महर्षयः सर्वे पूर्णकुम्भाः समन्ततः ।
कृतोदका नरव्याघ्र आदित्यं पर्युपासते ॥ २०
स तैर्ऋषिभिरभ्यस्तः सहितैर्ब्रह्मसत्तमैः ।
रविरस्तं गतो राम गच्छोदकमुपस्पृश ॥ २१

इति श्रीरामायणे उत्तरकाण्डे द्विसप्ततितमः सर्गः ॥ ७२ ॥

---

य( V3 D5 त )थोक्तो( D5 °क्तं ) ( for यथोक्तं ). Ñ2 V2 B1.3.4 स चापि ब्रह्मतेजसा; B3 तच्च सर्वं नराधिप; M6 स चाभूत्तस्य तेजसा.

17 a) V3 om. तस्यासौ. Ñ1 D2.3 यस्य; D9 यश्च ( for तस्य ). Ñ1 V1 D1–7.9 T3.4 [अ]यं ( for [अ]सौ ). D3 राम (for दण्ड-). Ñ2 V2 B T1.2 G3 M3 दंडस्य ( for [अ]सौ दण्ड-). B3 विषये ( for -विषयो ). —b) Ñ2 V2 B1 मध्ये ( for विन्ध्य-). Ś Ñ1 V1.3 B3.4 D1–5.8.9.12 T3.4 -शैलस्य ( for -शैवल- ). Ñ2 B1 -विंध्ययोः; V2 -रित्वयोः ( sic ); B3.4 -संधिषु (for -सानुषु ). B2 मध्ये विंध्यस्य शृंग( marg. also शैवलविंध्य )योः; D6.7.10.11 विंध्यशैवलयोर्नृप. —c) Ñ1 V1.2 ( before corr. ) B4 D1–5.9 T3.4 ह्युशनसा; G2 महर्षिणा ( for ब्रह्मर्षिणा ). Ś D8.12 तात; Ñ1 V1.2 ( marg. ) B1–3 D2.9 M6 राम; V2 ( before corr. ) B4 राजन्; D1.3–5 T3.4 पूर्वं ( for तेन ). —V2 reads d in marg. —d) Ś Ñ1 V1.3 D1–5.8.9.12 T3.4 तस्मिन्; Ñ2 damaged; B3 राम (for पुरा). Ś V3 D3.8.12 वै धर्षणे; Ñ V1 D1.2.4.5.9 G3 M10 वै ( Ñ2 *; D1.4 त्वा )धार्मि( D5 कार्मि )के; B1.3 वैदर्भके; D7 M9 वैधर्म्यके; T3.4 वै भार्गवी-; M6 चाधर्मके ( for वैधर्मके ). Ñ V1 D3.9 नृपे ( for कृते ). V2 ( before corr. ) B2 ( marg. also with hiatus ).4 अपराधाद्दुरात्मनः; D10.11 वैधर्म्ये सहिते कृते. ❀ Cv : तस्येत्यादि । तस्य राज्ञो वैधर्मके कृते तेन ब्रह्मर्षिणा शप्तो दण्डविषयोऽसौ ।; Cm : दण्डस्येति । वैधर्म्यके वैधर्म्यं विपरीतधर्मः । स एव धर्म्यकः । स्वार्थे कः । तेन दण्डेन विपरीतधर्मे कृते सति विन्ध्यशैवलसानुषु ब्रह्मर्षिणा यो दण्डविषयः दण्डदेशः शप्तः । तस्येति प्रथमार्थे षष्ठी । सोऽसावित्यर्थः । Cg.k : तस्यासौ । व्यत्ययात् षष्ठी । सोऽसावित्यर्थः ।; Ct : तस्यासौ । व्यत्ययात् षष्ठी । सोऽसावित्यर्थः । विन्ध्यशैवलयोः मध्ये इति शेषः. ❀

18 a) Ñ2 V2 B M6 तदा (for ततः). —Ñ1 V1 B3 D1.2.4.5.9 om. 18cd. —c) Ś V3 D3.8.12 तत्र; V2 D10.11 ह्यत्र ( for यत्र ). B4 स तपस्विजनो यत्र. —d) Ś D8.12 T4 अथ; V2.3 D3.6.7.10.11 M1.4.5.8.10 अतो ( for अथो ). Ñ2 B1.2.4 तज्जनस्थानमुच्यते.

19 a) Ñ2 B1 एवं (for एतत्). B4 मे (for ते). —b) D8 तत् ( for यन् ). Ś D8.12 T1.2 G3 M3.6 त्वं; B1 मे (for मां ). Ñ2 V2 B1.2 संश( B2 °श्र )यं ( for राघव ). D1.4 यन्मां त्वं परिपृच्छसि. —c) V3 lacuna for संध्यामुपासितुं. Ñ2 V2 B M6 राम ( for वीर ). —d) Ñ2 V2 ( marg. ) B1.2 ह्यरिसूदन; V2 ( before corr. ) B3.4 [ऽ]यमुपस्थितः; D1.3.4 ह्य( D1 ह्यु )पवर्तते; M8 [ऽ]भ्यतिवर्तते ( for ह्यतिवर्तते ).

20 a) Ñ1 V1.2 ( before corr. as in text ) D1–4.9 T3.4 राम; B3.4 राजन्; D5 वीर ( for सर्वे ). —Note hiatus between c and d. —d) Ś D8.12 ह्यादित्यं. V2 ( before corr.; marg. also as in B3 ) प्रतिपाशते ( for पर्युपासते ). Ñ1 V1 B3.4 D1–5.9 T3.4 पूजयंति दिवाकरं( B3.4 तमोनुदं; D2 दिवौकसां ).

21 a) Ś B3 D8.9.12 अन्यैर्; D3 सत्यैर् ( for स तैर् ). D10.11 ब्राह्मणम् ( for ऋषिभिर् ). Ś D8.12 अभ्यस्तैः; V2 B2–4 D3 अव्यग्रैस्; D9.10.11 T2 Cm.g.k.t अभ्यस्तं; Cmp as in text ( for अभ्यस्तः ). Ñ1 D1.2.4.5 सत्यैरेभिस्त्विरभ्यस्तैः ( D2 °रस्यास्ते [ sic ] ); V1 सहैवोपास्यतां वीर; V3 अनेकऋषिभि * *; D6 स तैर्महर्षिभिस्ततः; D7 सर्वैर्ब्रह्म समभ्यस्तं. —b) Ś D8.12 संहितैर्; V1 ऋषिभिर् ( for सहितैर् ). Ś1 D10.11 M3.7 -वित्तमैः; Ś2.3 V1.3 D6–9.12 T3.4 M6 -वादिभिः ( for -सत्तमैः ). Ñ1 स्तुतिब्रह्मभिरन्वितैः; V2 B1–4 D2 स्तवै( D3 स्सुतै )र्ब्रह्माभि( D2 °दि ) र्निर्मितैः; D1.4 स्तवैर्ब्रह्मादिभिर्वृतैः; D3 स्तुतो ब्रह्माभिनंदितैः; D5 स्वैर्ब्रह्माभिर्निर्वृतैः. —c) V2 B2–4 स्तु( V2 त )तोस्तमगमद्देवस्( V2 B3 °व ). —d) V3 ततो; B2.4 त्वं च ( for गच्छ ). —For 21, Ñ2 B1 subst.; while V2 B2–4 ins. after 21 :

1185* अभिष्टुतः सुरवरसिद्धसंघै-
गतो रविः सुरुचिरमस्तशैलम् ।
त्वमप्यतो रघुवर गच्छ संध्या-
मुपासितुं प्रयतमना नरेन्द्र ।

[ (l. 1) Ñ2 सनर; B2 सुरगण-; G ( ed. ) सुरवरः ( for सुरवर- ). V2 B4 -देव- ( for -सिद्ध- ). —(l. 4) B1 भवानिति ( for नरेन्द्र ). ];

while M7 ins. after 21 :

G. 7. 94. 14 B. 7. 87. 14 L. 7. 89. 14

एतस्मिन्नन्तरे राजा स इलः कर्दमात्मजः ।
निघ्नन्मृगसहस्राणि तं देशमुपचक्रमे ॥ १४
स दृष्ट्वा स्त्रीकृतं सर्वं सव्यालमृगपक्षिणम् ।
आत्मानं सानुगं चैव स्त्रीभूतं रघुनन्दन ॥ १५
तस्य दुःखं महच्चासीद्दृष्ट्वात्मानं तथागतम् ।
उमापतेश्च तत्कर्म ज्ञात्वा त्रासमुपागमत् ॥ १६
ततो देवं महात्मानं शितिकण्ठं कपर्दिनम् ।
जगाम शरणं राजा सभृत्यबलवाहनः ॥ १७
ततः प्रहस्य वरदः सह देव्या महायशाः ।
प्रजापतिसुतं वाक्यमुवाच वरदः स्वयम् ॥ १८
उत्तिष्ठोत्तिष्ठ राजर्षे कार्दमेय महाबल ।
पुरुषत्वमृते सौम्य वरं वरय सुव्रत ॥ १९
ततः स राजा शोकार्तः प्रत्याख्यातो महात्मना ।
न स जग्राह स्त्रीभूतो वरमन्यं सुरोत्तमात् ॥ २०
ततः शोकेन महता शैलराजसुतां नृपः ।
प्रणिपत्य महादेवीं सर्वेणैवान्तरात्मना ॥ २१

14 $^{a}$) $D_{2.3.9}$ राज्ञः; $M_5$ राम ( for राजा ). —$V_2$ reads $^{b}$ in marg. —$^{b}$) $B_{1.2}$ $T_1$ $M_3$ -बलः ( for इलः ). Ś Ñ $V_{1.3}$ $D_{1-4.8.9.12}$ $T_{3.4}$ कर्दमस्य सुतस्त्विडः( $Ñ_1$ $D_{1.3}$ °स्त्विहः; $Ñ_2$ $D_9$ $T_{3.4}$ °स्त्विलः; $V_1$ °स्थितः ); $V_2$ ( before corr. ) $B_{3.4}$ कर्दमस्यात्मजस्त्विलः. —$^{c}$) $G_1$ मृगान्; $M_5$ शत- ( for मृग- ). —$^{d}$) $V_2$ reads in marg. from प up to 15$^{a}$. $V_2$ ( before corr. ) $B_{3.4}$ समुपागमत् ( for उपचक्रमे ).

15 $V_2$ reads $^{a}$ in marg. ( cf. v.l. 14 ). —$^{a}$) $D_{1.4}$ $G_2$ तद्; Cm.g as in text ( for स ). $B_1$ दृष्ट्वा स( by transp. ). $D_3$ om. सर्वं. $V_2$ ( before corr. ) $B_{3.4}$ स सर्वं स्त्रीमयं दृष्ट्वा; G ( ed. ) सर्वं स्त्रीमयं दृष्ट्वा तु. —$^{b}$) $Ñ_2$ $D_3$ $T_1$ $G_3$ $M_{1-4.10}$ -पक्षिकं; $D_2$ -सेवितं ( for -पक्षिणम् ). —$^{c}$) $V_2$ reads from सानुगं up to 16$^{b}$ in marg. $V_2$( before corr. ) $B_{3.4}$ सबलं; $D_{5-7.10.11}$ $T_3$ $M_{10}$ स्त्रीकृतं ( for सानुगं ). $V_2$ (after corr.) $B_2$ अथ; $B_1$ सोथ; $D_{12}$ चैवं ( for चैव ). —$^{d}$) Ś $V_3$ $D_{8.12}$ $M_{6.7}$ स्त्रीकृतं; $D_{5-7.10.11}$ $T_3$ $M_{10}$ सानुगं; Cv.m as in text ( for स्त्रीभूतं ). $Ś_3$ $D_{8.12}$ रघुनंदनौ; $Ñ_2$ $V_2$ (after corr.) $B_{1.2}$ प्र( $Ñ_2$ हि )ददर्श ह; $V_2$ ( before corr. ) $B_{3.4}$ कर्दमात्मजः ( for रघुनन्दन ).

16 $V_2$ reads $^{ab}$ in marg. ( cf. v.l. 15 ). —$^{a}$) $Ñ_2$ ततो; $D_2$ पश्य; $T_3$ तच्च; Cm.g k as in text ( for तस्य ). $Ñ_2$ illeg. for दुःखं महत्त्वासी. Ś $V_3$ $D_{5-8.10-12}$ $T_3$ $G_2$ $M_{1.7.10}$ च ( for तु ). $Ñ_1$ महज्जातं; $V_1$ समापन्नं; $V_2$ ( after corr. ) महद्भूतं; $B_1$ समुद्भूतं; $B_2$ महद्भूत्वा; $D_{1-4.9}$ समुत्पन्नं; $T_4$ महच्चापि; $M_8$ महानासीद् ( for महत्त्वासीद् ). $V_2$( before corr. ) $B_{3.4}$ राजा( $B_4$ दृष्ट्वा )तप्यत दुःखेन. —Ś $V_3$ $D_{8.12}$ om. 16$^{bc}$. —$^{b}$) $B_2$ [आ ]त्मानं चापि ( for दृष्ट्वात्मानं ). $Ñ_2$ $V_2$ ( before corr. ) $B_{3.4}$ $T_{3.4}$ $M_{2.5.6.10}$ तथाविधं( $M_{2.6.10}$ °कृतं ); Ck as in text ( for तथागतम् ). —$^{c}$) $Ñ_1$ $V_1$ $B_4$ $D_{1-4.9}$ $T_{3.4}$ तु; Cm.k as in text ( for च ). $T_3$ सत्कर्म. —$^{d}$) Ś $V_3$ $D_{8.12}$ दृष्ट्वा ( for ज्ञात्वा ). $Ñ_1$ $D_{2.3}$ वासम्; $D_9$ शर्वम् ( for त्रासम् ). $V_3$ $B_3$ $D_{1.4}$ तं( $D_{1.4}$ च ) समुपागमत्; $D_{12}$ °मुपागतः ( for त्रासमुपागमत् ).

17 $^{a}$) $V_1$ $D_{1-4.9}$ देवदेवं; $V_3$ lacuna ( for ततो देवं ). $D_{1.4}$ महादेवं ( for महात्मानं ). —$^{b}$) $G_2$ $M_5$ नीलकंठं ( for शितिकण्ठं ). $M_1$ तपस्विनं ( for कपर्दिनम् ). —$^{d}$) $V_3$ -पशु-; $D_6$ -वर- ( for -बल- ).

18 $^{a}$) $B_3$ च हरः; $D_5$ चोवाच ( for वरदः ). —$^{b}$) $B_3$ देव्या सह ( by transp. ). Ś $Ñ_1$ $V_{1.3}$ $B_{3.4}$ $D_{1-4.8.9.12}$ त्रिशूलधृत् ( $B_{3.4}$ $D_{1.2.4.8.9}$ °भृन् ); $V_2$ सहानुगः; $D_{5-7.10.11}$ $T_{3.4}$ $M_1$ महेश्वरः ( for महायशाः ). —$D_5$ om. 18$^{c}$-19$^{d}$. —$^{c}$) $B_2$ प्रजा * * ( for प्रजापति- ). Ś $Ñ_1$ V $B_{3.4}$ $D_{1-4.8.9.12}$ वीरम्; $Ñ_2$ $B_1$ सौम्यम्; $B_2$ (with hiatus) सौम्य ( for वाक्यम् ). —$^{d}$) Ś $D_{8.12}$ मधुरा गिरः; $Ñ_1$ $V_{1.2}$ ( *sup. lin.* also as in $Ñ_2$ ).3 $B_{2-4}$ $D_{1-4.9}$ $T_{3.4}$ मधुरं वचः; $Ñ_2$ $B_1$ $M_7$ वृषभध्वजः; $M_{2.3.9}$ परमः स्वयं ( for वरदः स्वयम् ). ❀ Cv : उवाच वरदः स्वयमिति पाठः. ❀

19 $D_5$ om. 19$^{ab}$ ( cf. v.l. 18 ). —$^{a}$) $G_1$ राजेंद्र ( for राजर्षे ). —$^{b}$) $Ñ_1$ $D_{2.3.12}$ $M_7$ कर्दमेय. —$V_3$ lacuna from महाबल up to $^{d}$. $Ś_1$ $V_2$ $B_{3.4}$ $D_{3.8.12}$ महामते; $Ñ_1$ $D_{1.4.11}$ $M_7$ महाबलः( $M_7$ °व्रत ) ( for महाबल ). —$^{c}$) Ś $Ñ_1$ $V_{1.2}$ ( before corr. )$B_{2.3}$ $D_{1-4.8.9.12}$ वीर ( for सौम्य ). —$^{d}$) Ś $Ñ_1$ $V_{1.2}$ ( before corr.) $B_{2-4}$ $D_{1-4.8.9.12}$ ब्रूहि किं करवाणि ते.

20 $^{a}$) K ( ed.) दुःखार्तः ( for शोकार्तः ). —$^{b}$) $D_1$ प्रत्याख्याने ( for °ख्यातो ). $D_{1.2.4.9}$ महायशाः ( for महात्मना ). —$^{c}$) $T_2$ च ( for स ). Ś Ñ V B D $T_{3.4}$ $G_1$ $M_3$ स्त्रीभूतोन्यं न( $Ñ_2$ $V_2$ $B_{1.2}$ °तो नैव; $D_{5-7.10.11}$ $T_{3.4}$ °तोसौ न; $G_1$ °तो न च; $M_3$ °तो न स ) जग्राह( $D_9$ जनं प्राह ). —$^{d}$) $T_2$ $G_1$ Cg अन्यत्; Ct as in text ( for अन्यं ). $V_2$ ( m. ) $B_{1.2}$ महायशाः; $M_2$ सुरेश्वरात्; Ck as in text ( for सुरोत्तमात् ). Ś Ñ V B $D_{1-4.8.9.12}$ वरं पुंस्त्वात्ते तदा( $Ñ_1$ °तेभवत्; $V_1$ °ते नृपः; $V_3$ °ते तथा; $D_{1.2.4}$ °ते भवान्; $D_9$ °ते महत् ). ❀ Ct : अन्यद्वाक्यमिति पाठे पुंस्त्वातिरिक्तवरदातृवाक्यं न जग्राहेत्यर्थः ।; so also Ck. ❀

21 $^{a}$) $V_2$ तत्र ( for ततः ). $Ñ_1$ $V_1$ $D_{1-4.9}$ संतप्तः ( for महता ). $V_2$ ( *sup. lin.* also ) $B_{1.2}$ शोक( $V_3$ °के) समाविष्टः. —$^{b}$) $D_5$ प्रति ( for नृपः ). —$V_2$ reads from $^{c}$ up to 22$^{b}$ in marg. —$^{cd}$) $D_{5-7.10.11}$ $G_{2.3}$ $M_{2.4.6.9}$ (all with hiatus) उमां ( $D_{11}$ °मा )देवीं; $M_5$ सुमां देवीं; $M_7$

ईशे वराणां वरदे लोकानामसि भामिनि ।
अमोघदर्शने देवि भजे सौम्ये नमोऽस्तु ते ॥ २२
हृद्गतं तस्य राजर्षेर्विज्ञाय हरसंनिधौ ।
प्रत्युवाच शुभं वाक्यं देवी रुद्रस्य संमता ॥ २३
अर्धस्य देवो वरदो वरार्धस्य तथा ह्यहम् ।
तस्मादर्धं गृहाण त्वं स्त्रीपुंसोर्यावदिच्छसि ॥ २४
तदद्भुततमं श्रुत्वा देव्या वरमनुत्तमम् ।
संप्रहृष्टमना भूत्वा राजा वाक्यमथाब्रवीत् ॥ २५
यदि देवि प्रसन्ना मे रूपेणाप्रतिमा भुवि ।
मासं स्त्रीत्वमुपासित्वा मासं स्यां पुरुषः पुनः ॥ २६
ईप्सितं तस्य विज्ञाय देवी सुरुचिरानना ।
प्रत्युवाच शुभं वाक्यमेवमेतद्भविष्यति ॥ २७
राजन्पुरुषभूतस्त्वं स्त्रीभावं न स्मरिष्यसि ।
स्त्रीभूतश्चापरं मासं न स्मरिष्यसि पौरुषम् ॥ २८

G. 7. 94. 28
B. 7. 87. 29
L 7. 89. 28

जगादेदं ( for महादेवीं ). M7 तद्गतेन; Cm.t as in text ( for सर्वेणैव ). Ś Ñ1 V1.2( before corr. ).3 B3.4 D1–4.8.9.12 T3.4 L (ed.) उवाचानन्य( L[ed.] °च नान्य ) मानसः ( for $^{d}$ ). Ñ2 V2 ( after corr. ) B1.2 मूर्ध्ना निपत्य वरदां प्रांजलिर्वाक्यमब्रवीत् .

22 V2 reads $^{ab}$ in marg. ( cf. v.l. 21 ). V3 lacuna from $^{a}$ up to काना in $^{b}$. —$^{a}$) Ś2 Ñ1 V3 B1.4 D3 M6.7 ईशा. Ś D8.12 वरेण्ये ( for वराणां ). D1.4 G3 वरदा; K ( ed.) वरये ( for °दे ). B2 चराचराणां वरदे. —$^{b}$) Ñ1 V B1.2 D1–4.9 चासि; Ñ2 चैव ( for असि ). T3.4 G2 लोकानवसि. Ñ2 V1.3 भाविनि; V2 B D5.10.11 T2–4 G M1.7 Ct भामि( V2 B °वि )नी ( for भामिनि ). Ś D8.12 चास्म( D12 °सि )वासिनि. —$^{c}$) Ñ1 V2 B3.4 D1.2.4 T3.4 अमोघदर्शना. Ś1.2 Ñ1 V1.3 B D7.10 T2–4 M3.4.10 देवी. Ñ2 G1.2 अमोघं दर्शनं देवी( Ñ2 चैव ). —$^{d}$) T3.4 भव; G1 M10 भवे; M1 Cm.k भज. Ś Ñ1 V1.3 D8.12 भव सौम्या( V1 D12 °म्य ) शुभानने; Ñ2 B2–4 भ( Ñ2 त )व सौम्यानने शुभे( B2 मम ); V2 B1 D1–4.9 भव( V2 D1 °ज ) सौम्या( B1 °म्ये; D9 °म्य ) शुभे मम; D7.10.11 भज सौम्येन चक्षुषा; T1.2 G3 M3.6 भज सौम्येन मां शुभे( T1 शिवे ); M7 सौम्येनेक्षस्व चक्षुषा. ❀ Cg.t : सौम्येन चक्षुषा अनुग्रहचक्षुषा मां भज अनुगृहाण. ❀

23 $^{c}$) M6 परं ( for शुभं ). —D12 om. ( hapl. ? ) $23^{d}$–$25^{a}$. —$^{d}$) Ś V3 D8 M2 संनिधौ; V2 संमिता; B3.4 D2.3.5 T3.4 संमतं( D5 °ते ) ( for संमता ). D1.4 देवी तुष्टेन चेतसा.

24 D12 om. 24 ( cf. v.l. 23 ). —$^{a}$) Ś Ñ V B1.2.4 D1–4.8.9 M5 वरदो देवो ( by transp. ); B3 च परो देवो; Cg.k as in text ( for देवो वरदो ). —$^{b}$) M6.7 परार्धस्य. D6.10.11 तव; M6 यथा ( for तथा ). D5.7 M7 तवा( M7 °था ) प्यहं; T1 G3 M3.5 द( M5 प्र )दाम्यहं ( for तथा ह्यहम् ). Ś Ñ V B1–3 D1–4.8.9 T3.4 वरदार्ध( Ñ1 V1 T4 °दान )स्य चाप्यहं; B4 वरार्धस्येव चाप्यहं. —$^{c}$) B4 एवं ( for अर्धं ). —M4 om. ( hapl. ? ) $24^{d}$–$28^{a}$. V2 reads in marg.; V3 lacuna for $24^{d}$. —$^{d}$) M1 damaged from च्छसि up to अद्भुत-त in $25^{a}$. Ś D3 वा यदी( Ś3 D8 °दे )च्छसि; G1 यदि वांछसि; Cg.k.t as in text ( for यावदिच्छसि ). Ñ2 V3 ( after corr. ) B1.2.4 यत्ते मनसि वर्तते.

25 D12 om. $25^{a}$ ( cf. v.l. 23 ). M4 om. 25; M1 damaged up to second त in $^{a}$ ( for both, cf. v.l. 24 ). —$^{a}$) V2 B1.3 D2.9 अद्भुतमिदं; D5–7.10.11 T3.4 अद्भुततरं ( for °तमं ). Ś Ñ V B D1–4.8.9 वाक्यं ( for श्रुत्वा ). —$^{b}$) D1.4 उक्तम् ( for वरम् ). D1 अभूत्तत: ( for अनुत्तमम् ). Ś Ñ2 V B1.2 D2.3.8.9.12 व्याहृतमुत्तमं; Ñ1 हृद्गतमानसं; B3.4 श्रुत्वा महीपतिः ( for वरमनुत्तमम् ). —V2 reads $25^{cd}$ ( second time in marg. ) twice. —$^{c}$) Ś1.2 Ñ1 B1.2 D1–4.9 श्रुत्वा; Ś3 D3.12 स्तुत्वा ( for भूत्वा ). V2 ( second time ) श्रुत्वा हृष्टं मनः कृत्वा. —$^{d}$) Ś V3 D8.12 वचनम् ( for वाक्यमथ ). Ñ V1.2( second time ) B1.2 D1–4.9 प्रत्युवाच नराधिपः; V2 ( first time ) B3.4 वाक्यमेतदुवाच ह.

26 M4 om. 26 ( cf. v.l. 24 ). G2 om. 26–$27^{b}$. —$^{a}$) Ś Ñ2 V3 B D3 T2.3 देवी; Ñ1 V1 D1–4.9 चैव( V1 D3 °वं ) ( for देवि ). Ś Ñ V B3 D1–4.8.9.12 [ अ ]सि ( for मे ). —$^{b}$) Ñ2 भुवि सुंदरी; D6 T1 M5 [ अ ]प्रतिमं भुवि. —$^{c}$) M8 मास-. —For $26^{cd}$, Ś Ñ V B D1–4.8.9.12 T3.4 subst. :

1231* स्त्री भवेयमहं मासं मासं च पुरुषस्तथा ।

[ B1 परं ( for अहं ). D9 om. ( hapl. ) मासं. V2 D1 पुरुषं. Ś V3 B1.2 D8.12 तदा ( for तथा ). ]

27 M4 om. 27 ( cf. v.l. 24 ). G2 om. $27^{ab}$ ( cf. v.l. 26 ). —$^{b}$) D3 T1 M3 सा ( for सु- ). Ñ V1.3 B D1–4.9 -रुचिरं वचः( Ñ2 B1.2 तदा; V3 [ after corr. ] तथा; D1.4 ततः ) ( for °रानना ). —V3 lacuna for $^{cd}$. —$^{c}$) V3 ( after corr. ) B2 नृपं ( for शुभं ). D10 वाच ( sic ) ( for वाक्यम् ). V2 ( before corr. ) B3.4 नरेंद्रं तम् ( for शुभं वाक्यम् ). —$^{d}$) V3 D5–7.11 G1.2 M1.2.5.8.10 एव ( for एतद् ). Ś D8.12 एतत्तव; D10 वाक्यमेव ( for एवमेतद् ). M1 damaged for भविष्यति.

28 M4 om. $28^{a}$ ( cf. v.l. 24 ). M8 om. $28^{ab}$. Ñ V1.2 B1.2 D1–4 T3.4 transp. $^{ab}$ and $^{cd}$. —$^{a}$) M2.9 राजा; Cg.k.t as in text ( for राजन् ). M1 सन् ( for त्वं ).

G. 7.94.29 B. 7.87.29 L. 7.89.29 एवं स राजा पुरुषो मासं भूत्वाथ कार्दमिः । | त्रैलोक्यसुन्दरी नारी मासमेकमिलाभवत् ॥ २९

इति श्रीरामायणे उत्तरकाण्डे अष्टसप्ततितमः सर्गः ॥ ७८ ॥

Ñ V1 D1–4.9 T3.4 पुरुषश्च पुनर्भूत्वा; V2 ( marg. also; before corr. as in B3 ) B2 पुरुषश्च यदा भूतः; B1 यदा च पौरुषो भावः; B3.4 यदा त्वं पुरुषीभूतः. —$^{b}$ ) Ñ1 V1 D1–4.9 T3.4 स्त्रीत्वं च( D1.3.4 T3 त्वं; T4 तनू ); G1 M10 स्त्रीभूतं ( for स्त्रीभावं ). V3( m. ) B1.2 स्त्रीत्वं नैव( B1 न च ); M1 damaged ( for स्त्रीभावं न ). —After $28^{ab}$, D11 reads 79.8 for the first time, repeating it in its proper place and om. $28^{cd}$. —$^{c}$ ) B4 यदा स्त्री ( for स्त्रीभूतश् ). V3 D5–7.10 M4.9.10 परं ( for [श्च ]परं ). Ñ1 V1 D1–4.9 T3.4 यदा तु प्रमदा भूत्वा; Ñ2 V2 ( marg. also; before corr. as in text ) B1.2 य( Ñ2 त )दा च( B2 त्वं ) प्रमदाभूतः( B1 °भावः ). —$^{d}$ ) V2 ( marg.; before corr. as in text ) B1.2 पुंस्त्वं त्वं( B1 पुंभावं ) न स्मरिष्यसि.

29 $^{a}$ ) B3 पुरुषो राजा ( by transp. ). T1.2 G3 स एवं पुरुषो राजा. —$^{b}$ ) T2 स ( for [श्च ]थ ). Ś Ñ V B D1–4.8.9.12 T3.4 भवति ( for भूत्वाथ ). Ś V3 D8.12 कर्हिचित्; Ñ1 D5.9 कर्दमिः; D1.4 T2.3 G1.3 M1 का( D1 क )र्दमः; T4 पार्थिवः; Cg.k.t as in text ( for कार्दमिः ). —$^{c}$ ) Ś V3 D8.12 M6 त्रिलोक-; Ñ1 V1 D2 भूत्वैव; D1.3.4.9 भूत्वैक- ( for त्रैलोक्य- ). M4 भूत्वा ( for नारी ). —$^{d}$ ) Ś D8 इडा; D12 त्विडा; T3.4 तथा; M3 इलो ( for इला ). Ñ1 V1 D1.2.4.9 भवत्य( Ñ1 °त्व )थ( V1 °सौ ); B1.2 भवेदिति; D3 यथाभवत् ( for इलाभवत् ). Ñ2 मासं भूत्वा वसत्यः; V3 मासमेवाभिजायते.

Colophon. *Sarga name* : Ś V1 D1–4.8.9.12 इडोपाख्यानं; Ñ1 इडोपाख्यानः; Ñ2 B1.2.4 D5.6 इलोपाख्यानं ( Ñ2 °ने ); V2 जनस्त्रीभावः; V3 इन्द्रोपाख्यानं; B3 इलास्त्रीभावोत्पत्तिः. —*Sarga no.* ( figures, words or both ): Ś Ñ1 V2.3 D2.12 om.; Ñ2 92; V1 68; B1 D9 91; B3 93; B4 T4 95; D1.4.5 73; D3 84; D6.7.10.11 T1.2 G M1–5.7.9.10 87; D8 83; T3 94; M6 85; M8 86. —After colophon, T4 concludes with श्रीरामार्पणमस्तु। श्रीरामाय नमो नमः ।; G M5.8.10 with श्रीरामाय नमः.

# ७९

तां कथामिलसंबद्धां रामेण समुदीरिताम् ।
लक्ष्मणो भरतश्चैव श्रुत्वा परमविस्मितौ ॥ १
तौ रामं प्राञ्जली भूत्वा तस्य राज्ञो महात्मनः ।
विस्तरं तस्य भावस्य तदा पप्रच्छतुः पुनः ॥ २
कथं स राजा स्त्रीभूतो वर्तयामास दुर्गतिम् ।
पुरुषो वा यदा भूतः कां वृत्तिं वर्तयत्यसौ ॥ ३
तयोस्तद्भाषितं श्रुत्वा कौतूहलसमन्वितम् ।
कथयामास काकुत्स्थस्तस्य राज्ञो यथागतम् ॥ ४
तमेव प्रथमं मासं स्त्री भूत्वा लोकसुन्दरी ।
ताभिः परिवृता स्त्रीभिर्येऽस्य पूर्वं पदानुगाः ॥ ५
तत्काननं विगाह्याशु विजह्रे लोकसुन्दरी ।
द्रुमगुल्मलताकीर्णं पद्भ्यां पद्मदलेक्षणा ॥ ६ G. 7. 95. 6 B. 7. 88. 6 L. 7. 90. 6

## 79

1 V2 (before corr. as in text) reads 1$^{ab}$ in marg. —$^{a}$) Ś Ñ1 V1.3 D1–4.8.9.12 इड-; Ñ2 V2 B1.2 दिव्य-; D5–7.10.11 ऐल- (for इल-). Ñ1 D1.4.6.7.11 T2–4 M1.2.5.7.9 -संबंधां; Ñ2 V2 B1.2 -संकाशां; T1 M3 -संबाधां (for -संबद्धां). —$^{b}$) V3 M6.7 [अ]भिसमीरितां. Ñ2 V2 B1.2 काकुत्स्थेन समीरितां. —$^{c}$) T3.4 भरतो लक्ष्मणश् (by transp.). —$^{d}$) B4 परं (for श्रुत्वा). V2 (after corr. m. as in text) B3.4 T3.4 विस्मयमागतौ (for परमविस्मितौ). Ñ2 विस्मयं परमं गतौ.

2 V2 om. 2–3$^{b}$. —$^{a}$) Ś Ñ V1.3 B1.2 D1–4.8.12 T3.4 राघवं (for तौ रामं). B2–4 D2.3.6.11 T3.4 G2.3 M2.3.10 प्रांजलिर् (sic); Cg.k as in text (for प्राञ्जली). Ś V3 D8.12 भूतौ (for भूत्वा). B1 प्रांजलिर्वाक्यं. —B1 om. 2$^{bc}$. M5 om. (hapl.) from महात्मनः in $^{b}$ up to राज्ञो in 4$^{d}$. —$^{cd}$) Ś Ñ V1 D1.3.4.8.9.12 वाक्यस्य; D2 राज्ञस्य (for भावस्य). ❀ Cm: तस्य भावस्य स्त्रीपुरुषभावस्य ।; so also Cg.k.t. ❀ T1 G3 तौ तं; T3 तथा (for तदा). Ś D3.8.12 संप्रष्टुमुपचक्र' D3 °जग्म)तुः; Ñ V1 संप्रष्टुं तौ त(V1 स)मूचतुः; V3 B1 प्रष्टुं समुपचक्रमे(V3 °तुः); D1.2.4.9 संप्रज्ञातुं(D9 °नं) तमूचतुः (for $^{d}$). B2–4 उपचक्रमतुः प्रष्टुं प्रभावं तस्य विस्तरं.

3 M5 om. 3; V2 om. 3$^{ab}$ (for both, cf. v.l. 2). —$^{a}$) D1–4.9 भूत्वा (for -भूतो). B1 कथं स्त्रीभूत एवासौ. —$^{b}$) Ñ2 V1.3 D7.9–11 T2 G M4.7.10 Cg.k.t दुर्गतिः; T3.4 भूपतिः (for दुर्गतिम्). —$^{cd}$) D6.7.10.11 स (for वा). M9 पुरूरवा (for पुरुषो वा). T1.2 M3 यथा (for यदा). M1 भूपः (for भूतः). M6 कथं वा पौरुषं राजा वर्तयामास तत्प्रभो. ❀ Ct: तथा पुरुषभूतोऽसौ कां वृत्तिं वर्तयति. ❀ —For 3$^{cd}$, Ś Ñ V B D1–4.8.9.12 T3.4 subst.:

1232* पुरुषो वा पुनर्भूत्वा कां स्म वृत्तिमवर्तत ।

[V2 reads the prior half in marg. Ñ2 V2 (after corr.) B1.2 यदा च पुरुषो भूतः(B1 लोके) (for the prior half). Ñ2 V2 B1 स; B2 (also as in B1) प्र-; B3 तु; B4 च; T3.4 कां (for स्म). D9 कस्माद् (for कां स्म). Ñ D1.3.4 अवर्तयत (for अवर्तत).]

4 M5 om. up to राज्ञो in $^{d}$ (cf. v.l. 2). —$^{a}$) Ś Ñ V B1.2 D1–5.8.9.12 T3.4 वचनं (for भाषितं). B3.4 स तयोस्तद्वचः श्रुत्वा. —$^{b}$) Ś V3 B1.2 D8.12 M6 -समन्वितः. —$^{c}$) T3.4 दुर्धर्षस्; G3 धर्मज्ञस् (for काकुत्स्थस्). —$^{d}$) Ś Ñ1 V B2–4 D1–5.8.9.12 T3 (also as in text) M6.7 यथाभवत्; Ñ2 यथा ** (damaged); B1 यथाविधि; D7.10.11 Cm.t यथागमं; T4 यथा भवेत्; Ck as in text (for यथागतम्).

5 T1 repeats 5$^{ab}$ after 6$^{ab}$. —$^{a}$) Ñ1 V2 D6.12 T3.4 G1 M4 तमेवं; T1 (second time) इला वै; M3 इलस्तु (for तमेव). D4 प्रथनं. —$^{b}$) Ś Ñ1 V1 D8 M1.4.8.9 स्त्रीभूतो; B3.4 D6.7.11 G2 M5–7.10 स्त्रीभूता; D2.9 संभूता (for स्त्री भूत्वा). —G1 om. (hapl.) 5$^{c}$–6$^{b}$. —$^{c}$) Ñ1 B1 D9.12 परिवृतः. M8 transp. परिवृता and स्त्रीभिर्. —$^{d}$) Ś B1 D7.8 T G2 M1.2.4.5.8–10 ये च(Ś D8 तु); V2 D3.4.5.11.12 G3 यस्य; B3.4 यास्य; D3 ये स्युः; D6 ये ताः; L (ed.) यास्तु; Ck.t as in text (for येऽस्य). Ś D8 तस्य; D7 पूर्वं; D11 T1 G3 M3 पूर्व- (for पूर्वं). V2 B3.4 समागताः; B1 तदानुगाः. Ñ1 अस्य पूर्ववशानुगाः. ❀ Ck: पदानुगा इति. ❀

6 G1 om. 6$^{ab}$ (cf. v.l. 5). —$^{a}$) Ś1.2 Ñ1 V1 B3 D1–4.8.9.12 ताः (for तत्). D5 काननं च (for तत्काननं). Ś Ñ V B1.2.4 D1–5.8.9.12 M6.7 विगाहंत्यो(Ñ2 V2.3 B1.2.4 M6.7 °ती); V2 (before corr.) B3 विगाह्याथ. —$^{b}$) Ś Ñ1 V1.2 (before corr.) B3 D1–5.8.9.12 भजंत्यः पुष्पितान्द्रु(Ś2 D8 °तद्रु)मान्(Ñ1 °तान्वनान्; B3 °तान्क्रमान्); Ñ2 V2.3 B1.2.4 M6.7 भेजे वै(B2 भ्रमंती) पुष्पशोभितं. —After 6$^{ab}$, T1 repeats 5$^{ab}$. —V2 reads 6$^{c}$ in marg. —$^{c}$) T3.4 मृदु-; M7 तृण- (for द्रुम-). D11 transp. द्रुम and गुल्म. Ś Ñ1 V1 B3 D1–5.8.9.12 गुल्मान्द्रुमं च(V1 तु) गच्छंत्यश्(Ś1.2 V1 °त्याश्). —$^{d}$) Ś D8.12 चेलुः; Ñ1 D1.4 चारु-; V1 B3 D3.5 चेरुः; V2 marg.; B1 शरत्-; D2.9 श्वेत- (for पद्भ्यां). Ś1.2 V1.2 B3 D1–5.8.9.12 -दलेक्षणाः; G2 M3 -निभेक्षणा. T1 पद्भ्यां पद्मवदक्षिणी; G3 पद्मपत्रनिभेक्षणा.

G. 7.95.7 B. 7.88.7 L. 7.90.7

वाहनानि च सर्वाणि संत्यक्त्वा वै समन्ततः ।
पर्वताभोगविवरे तस्मिन्रेमे इला तदा ॥ ७
अथ तस्मिन्वनोद्देशे पर्वतस्याविदूरतः ।
सरः सुरुचिरप्रख्यं नानापक्षिगणायुतम् ॥ ८
ददर्श सा इला तस्मिन्बुधं सोमसुतं तदा ।
ज्वलन्तं स्वेन वपुषा पूर्णं सोममिवोदितम् ॥ ९
तपन्तं च तपस्तीव्रमम्भोमध्ये दुरासदम् ।
यशस्करं कामगमं तारुण्ये पर्यवस्थितम् ॥ १०
सा तं जलाशयं सर्वं क्षोभयामास विस्मिता ।
सह तैः पूर्वपुरुषैः स्त्रीभूतै रघुनन्दन ॥ ११
बुधस्तु तां निरीक्ष्यैव कामबाणाभिपीडितः ।
नोपलेभे तदात्मानं चचाल च तदाम्भसि ॥ १२

---

7 a) V3 B1.3 तु ( for च ). —V3 lacuna for $7^{bc}$ ( except संत्य ). —b) D6 G1.3 M3.5.8.9 सा ( for सं· ). T4 च ( for वै ). Ś D8.12 संत्यक्तानि; Ñ2 V2 B1.2.4 त्यक्त्वा चैव; D1.4 विध्वस्तानि; D2.3 विष्टब्धानि ( for संत्यक्त्वा वै ). Ñ1 V1 B3 D9 विसृज्य( D9 °ष्ट्वा ) कानने( Ñ1 °नं ) ततः; D5 विध्वस्तानि च सर्वशः. —c) M4 सर्वथा; Cm.t as in text ( for पर्वत- ). V1 पर्वतादवरुह्य च; G1 पर्वते भोगभवने. —d) B3 [ऽ]भ्रमच्; D1.4 यत्र ( for तस्मिन् ). —Note hiatus between रेमे and इला. Ñ1 भ्रमद्; V2 देशे; B1 M6 रम्ये; B2 चापि; B3 राम; D1.4 [अ]भ्रमद् ( for रेमे ). D3 transp. तस्मिन् and रेमे. Ś2.3 Ñ1 D1.3.4.8.12 इडा ( for इला ). D2.9 भ्रमति सा; D6 marg. ( for रेमे इला ). D6 ( m. ) तथा ( for तदा ). Ñ2 V2 B1.2.4 M7 तदा इला ( by transp.; with hiatus ); B3 * चाल *; M2 सदा त्विला; M6 ( with hiatus ) सदा इला ( for इला तदा ). D5 यथाभ्रमदिडा तथा. —After 7, V2 B1.2.4 ins. :

1233* ते च राज्ञो गिरेस्तस्य निर्झरेषु सहस्रशः ।

[ B2 तदा ( for ते च ). B2 समंततः ( for सहस्रशः ). ]

8 D11 reads 8 for the first time after 78. $28^{ab}$ repeating it here. —a) Ś Ñ1 V1 D1–4.8.9.12 ततस्; D5 सरस्; Cg as in text ( for अथ ). —b) D4 पर्वतेस्य; Ct as in text ( for पर्वतस्य ). —After $8^{ab}$, Ñ1 reads $9^{cd}$. —c) B3 सव्यतो ( for सरः सु- ). Ñ1 V1 D1–5.9 T3.4 सरोगम( D9 °भव )त्सुरुचिरं. —d) Ś Ñ V B D1–5.8.9.12 T3.4 M6 पुण्यं ( for नाना- ). Ś1.3 V2( before corr. ).3 B1.2.4 T3 -गणान्वि( V2 B1.2 °न्वि )तं; D2.9 -मृगायुतं; T4 -गणैर्युतं.

9 a) G3 ददृशे; Ck.t as in text ( for ददर्श ). —Note hiatus between सा and इला. M6.7 तम् ( for सा ). Ś D8.12 इडा( Ś1 °ला ) नाम; V3 इला तत्र; T4 G1 M3 त्विला तस्मिन् ( for इला तस्मिन् ). Ñ V1.2 ( marg. ) B1.2.4 D1–5.9 इला( D1–4.9 °डा ) ददर्श तस्मिन्सा ( Ñ2 V2 B1.2.4 °स्मिंस्तु ); V2 ( before corr. ) B3 सा ददर्श इला( V2 गता ) तत्र. —b) T1 G3 M3 ततः ( for तदा ). —Ñ1 reads $9^{cd}$ after $8^{ab}$. —c) B3 वपुषा स्वेन ( by transp. ). —d) Ś Ñ2 V1.3 B1 D1.3.4.7.8.12 T4 पूर्ण-; D5 पूर्व- ( for पूर्णं ). Ś Ñ2 V B D1–5.8.9.12 चंद्रम् ( for सोमम् ). V3 [उ]दिता; D6.7 [उ]द्यतं ( for [उ]दितम् ). Ñ1 पूर्णचंद्रनिभानना.

10 V3 lacuna for ab. —a) V2 reads from तं up to च in marg. Ś Ñ2 V2 B1.2.4 D8.12 Cm तपस्यंतं; T1.2 G M1.3–5.8–10 तप्यंतं च( M9 तं ); M2.6.7 तप्यमानं ( for तपन्तं च ). Ñ1 V1.2 ( before corr. ) D1–5.9 T1.4 तप( D2 °त )स्तप्यं( D5 °पं )तमुग्रं तं; B3 तपस्तप्यंतमत्युग्रम्. —b) Ñ1 V1 D1–5.9 T3.4 पुण्ये( D1.3–5 °ण्यां )भसि; B3 अंबुमध्ये ( for अम्भोमध्ये ). T1 G3 M3.10 सुदारुणं ( for दुरासदम् ). —D1.4 om. $10^{cd}$. —c) V2 ( m. also as in text ) M8 कामगतं; D6.7.10.11 T3.4 M6 कामकरं( M6 °सं ). —d) Ñ1 B3.4 तारुण्यं; D7.10.11 G3 M1.4.8.10 कारुण्ये ( for तारुण्ये ). B2.4 प्रत्युपस्थितं; D2.9 समव°; T1 परत° (sic); M6.9 पर्युप° ( for पर्यवस्थितम् ).

11 a) M4–6.8 तज्- ( for तं ). B2 जलाश्रयं. V3 B1.3.4 गत्वा ( for सर्वं ). —b) D2.5.9 G1 शोभयामास; D12 भोज्ञ ( meta. )यामास ( for क्षोभ° ). Ñ1 D1–5.9 T3.4 भा( Ñ1 का )मिनी; Ñ2 V1 भाविनी ( for विस्मिता ). V2 ( before corr. m. [ except क्षोभ- ] ) B3 क्षोभयंती शुभानना. —c) V2 ( before corr. ) B3 सहिता; B4 D5 G1 M1.2.4.5.9 सहितैः ( for सह तैः ). Ś D8.12 पुरुषै( Ś1.2 °षो ) रेमे; Ñ1 D2.9 सर्वपुरुषैः ( for पूर्वपुरुषैः ). —d) Ś2 Ñ1 M3 स्त्रीभूतो; D6 °भूता ( for °भूतै ). Ñ1 V1 D1.3–5 T2 रघुनंदनो; V2 ( before corr. ) अन्वयायिभिः; B2.3 अनुयायिभिः ( for रघुनन्दन ).

12 a) D8.12 तं ( for तां ). Ñ1 निरीक्षार्थे; D6.7.10.11 T2 G1.2 M1.2.4.5.8–10 समीक्ष्यैव; T3.4 निरीक्ष्येळां; M7 समीक्ष्याथ ( for निरीक्ष्यैव ). —b) Ñ2 V2 B मन्मथेन ( for कामबाण- ). Ś Ñ1 V1 D T3.4 -वशं गतः; Ñ2 [ए]व पी°; B3 ( m. ) [अ]तिपी°; T1.2 G1.3 M1–4.8.9 -निपी°; M5 -प्रपी° ( for -[अ]भिपीडितः ). V3 ( with hiatus ) अत्यंतं शर- पीडितः; G2 M10 कामबाणेन पीडितः. —c) M1 नोपपेदे. M3 यथा ( for तदा ). B1.2.4 शर्म; G2 M1.2.4.5.8–10 स्थानं ( for [आ]त्मानं ). ❀ Cm.g.k.t : आत्मानं नोपलेभे आत्मध्यानं न प्राप्तवान् . ❀ —d) V2 चचार च; V3 D1.3–7.9–11 T3.4 M7 स ( T3 M7 सं )चचाल( D3.5.9 °र ) ( for चचाल च ). V3 Ś Ñ V1 lacuna; D5.9 T4 M6 ततोंभसि ( for तदाम्भसि ). Ś Ñ V1 D8.12 स( Ś D8.12 प्र )चचार ततो( Ñ1 °थां )भसि; B चचार च ( B3 अचलच्च ) ततो( B2 °दां )भसि; D3 स ततार ततोंभसि. ❀ Ct : अंभसि स्थितः स चचाल. ❀

इलां निरीक्षमाणः स त्रैलोक्याभ्यधिकां शुभाम् ।
चिन्तां समभ्यतिक्रामत्का न्वियं देवताधिका ॥ १३
न देवीषु न नागीषु नासुरीष्वप्सरःसु च ।
दृष्टपूर्वा मया काचिद्रूपेणैतेन शोभिता ॥ १४
सदृशीयं मम भवेद्यदि नान्यपरिग्रहा ।
इति बुद्धिं समास्थाय जलात्स्थलमुपागमत् ॥ १५
सोऽश्रमं समुपागम्य चतस्रः प्रमदास्ततः ।
शब्दापयत धर्मात्मा ताश्चैनं च ववन्दिरे ॥ १६
स ताः पप्रच्छ धर्मात्मा कस्यैषा लोकसुन्दरी ।
किमर्थमागता चेह सत्यमाख्यात माचिरम् ॥ १७

G. 7. 95. 17
B. 7. 88. 17
L. 7. 90. 17

13 $^{a}$) Ś $D_{8.12}$ इडां ( for इलां ). $B_{2}$ च; $B_{3}$ $D_{10}$ $T_{3.4}$ $M_{3}$ तु ( for स ). Ś $V_{2.3}$ $B_{1}$ $D_{8.12}$ $T_{1.2}$ $G_{3}$ $M_{6-8}$ निरीक्ष ( $Ś_{1.2}$ $V_{3}$ $B_{1}$ $D_{8.12}$ °क्ष्य )माणस्य; $Ñ_{2}$ निरीक्ष्यमाणः स; $B_{4}$ $D_{6.7.11}$ निरीक्ष्यमाणस्तु. $Ñ_{1}$ $V_{1}$ $D_{1-5.9}$ निरीक्ष्यमाणः स बुधस्. —$V_{2}$ reads $^{b}$ in marg. —$^{b}$) Ś Ñ $V_{1.3}$ $B_{1.4}$ $D_{1-5.8.9.12}$ त्रैलोक्यस्या°; $B_{2}$ $D_{6.7.10.11}$ त्रैलोक्याद्°; $M_{2}$ त्रैलोक्येभ्य° ( for त्रैलोक्याभ्य° ). $Ñ_{1}$ $D_{1.4}$ ततः; $Ñ_{2}$ $B_{1.4}$ स्त्रियं; $V_{1}$ $D_{2.3.9}$ तदा; $V_{2}$ $B_{2}$ श्रियं; $D_{5}$ हि तां; $M_{7}$ प्रियां (for शुभाम्). $V_{2}$ ( before corr. ) $B_{3}$ बुधः स्निग्धेन चक्षुषा. —After $13^{ab}$, $Ñ_{2}$ $V_{2}$ $B_{1.2.4}$ ins. :

1234* वृत्तं वृत्तादपक्रामद्वेलामिव महोदधेः।

[ $V_{2}$ $B_{1}$ अपाक्रामद् ( for अप° ). $Ñ_{2}$ वृत्तं बुधः समाक्रामद् (for the prior half). $Ñ_{2}$ महाशुचः; $V_{2}$ महोदधिः ( for महोदधेः ). ]

—$B_{4}$ om. $13^{cd}$. —$^{c}$) $D_{7.10.11}$ $G_{2}$ $M_{6}$ Cm.k.t चित्तं ( for चिन्तां ). $G_{2}$ -[ अ ]धि- ( for -[ अ ]भि- ). Ś $D_{8.12}$ चिंतामस्याति ( $D_{12}$ °भि )चक्राम; $Ñ_{1}$ $V_{1.3}$ $D_{1-5.9}$ $T_{3.4}$ चिंताम( $Ñ_{1}$ $V_{1}$ °तया )भ्य( $D_{3}$ °प्य )धिचक्राम; $Ñ_{2}$ $V_{2}$ ( before corr. as in $B_{3}$ ) $B_{1-3}$ चिंतयामास कामार्तः( $V_{2}$ [ reads from च up to $^{d}$ in marg. ] $B_{1}$ च तदा ); $T_{1.2}$ $G_{3}$ $M_{3}$ चिंतां समभि( $T_{1}$ °भि; $M_{3}$ °भ्य )गच्छस्स; Cg as in text. —$^{d}$) $Ś_{3}$ $Ñ_{1}$ $B_{2.3}$ $D_{1-4.6-9.12}$ $T_{3.4}$ $G_{1}$ $M_{9}$ तु; Ck as in text ( for नु ). $Ñ_{1}$ लोकसुंदरी; $T_{1.2}$ $M_{6}$ देवतापि वा ( for देवताधिका ). $V_{2}$ ( before corr. as in text ) $B_{1}$ कामार्तः का त्वियं त्विति ( $V_{2}$ तदा ). ❀ Ck : देवताभ्योऽधिका. ❀ —After 13, Ś $V_{3}$ $D_{8.12}$ ins. :

1235* शङ्कयामास धर्मात्मा ततश्चाप्यभ्यवादयत् ।
असौ पृच्छामि निष्क्रम्य कस्यैषा लोकसुन्दरी ।

[ (l. 1) $Ś_{1}$ चा *; $Ś_{2}$ चास्य ( for चापि ). $Ś_{2.3}$ [ अ ]भिवादयत् ( for [ अ ]भ्यवादयत् ). —(l. 2) $V_{3}$ अहं ( for असौ ). $Ś_{1.2}$ विश्रम्य; $V_{3}$ विक्रम्य ( for निष्क्रम्य ). ];
while $T_{3.4}$ ins. after 13 :

1236* न दृष्टा हि मया काचिद्रूपेणानेन शोभिता।

[ $T_{4}$ च ( for हि ) and वन- ( for [ अ ]नेन ). ]

14 $Ñ_{1}$ $V_{1}$ $D_{1-5.9}$ om.; $V_{2}$ reads in marg. $14^{ab}$. $V_{3}$ lacuna for $^{b}$. —$^{ab}$) $T_{2-4}$ दैवीषु न; $M_{6}$ देवेषु न; $M_{7}$ [ ए ]व देवीषु ( for देवीषु न ). Ś $D_{8}$ यक्षीषु; $T_{2}$ $M_{1.2.4.5.8.9}$ नारीषु ( for नागीषु ). $D_{12}$ न यक्षीषु; $G_{2}$ गंधर्वीषु ( for नासुरीषु ). T $M_{3.4}$ वा ( for च ). Ś $D_{8}$ तथा चा( $D_{8}$ वा )प्सरसःसु च ( sic ); $V_{2}$( before corr. ) $B_{3}$ नाप्सरःसु सु ( $V_{2}$ च ) मध्यमाः $D_{6}$ $G_{1}$ $M_{1.2.4.5.7-10}$ ना( $M_{10}$ अ )प्सरः ( $M_{5.9}$ °रा )स्वा( $M_{5.8-10}$ स्व )सुरीषु च( $M_{2.4.5}$ वा ) ( for $^{b}$ ). $Ñ_{2}$ $V_{2}$ $B_{1.2.4}$ नैव देवी न गंधर्वी नाप्सरा नैव मानुषी. —$V_{2}$ reads $14^{cd}$ (except दृष्टपूर्वा) in marg. —$^{c}$) $V_{1}$ $D_{3.5}$ न दृष्टा तु( $D_{3.5}$ हि ); $M_{4}$ दृष्टरूपा ( for दृष्टपूर्वा ). $Ñ_{2}$ $V_{2}$ $B_{1.2}$(also m.).$_{4}$ $T_{3.4}$ $M_{6}$ मया( $V_{2}$ तदा ) नारी( $B_{2}$ देवी ); $B_{2}$ न काचिच्च; $M_{8}$ मया कापि ( for मया काचिद् ). $D_{1.4}$ न च दृष्टा मया कापि. —$^{d}$) Ś $Ñ_{2}$ $V_{2.3}$ $B_{1.2.4}$ $D_{6-8.10-12}$ $T_{3.4}$ [ अ ]नेन; $T_{2}$ $M_{4}$ [ ए ]केन ( for [ ए ]तेन ). Ś $Ñ_{2}$ $V_{2.3}$ $B_{1.2.4}$ $D_{8.12}$ शोभ( $Ś_{2.3}$ °भि )ना ( for शोभिता ). $Ñ_{1}$ $V_{1.2}$ ( before corr. )$B_{3}$ $D_{1-5.9}$ ( $V_{2}$ $D_{1.4}$ all with hiatus ) अ( $D_{2.9}$ ना )नया रूपसंपदा( $D_{4}$ °दी ).

15 $^{a}$) $G_{2}$ ईदृशी; Cg as in text ( for सदृशी ). Ś Ñ $V_{2.3}$ B $D_{1-5.8.9.12}$ ममेयं सदृशी स्यात्तु( $Ñ_{2}$ $V_{2}$ B भार्या; $D_{1.4}$ च स्याद् ); $V_{1}$ ममेयं सहचरी स्याद्. —$^{b}$) Ś $V_{3}$ $D_{8.12}$ ना( $D_{8}$ वा )स्याः; $T_{2}$ नान्यं ( for नान्य- ). Ś $Ñ_{2}$ $V_{3}$ $B_{2.4}$ D T $G_{3}$ $M_{1.8.9.10}$ Cg.t -परिग्रहः ( for °ग्रहा ). —$^{d}$) $Ñ_{1}$ जल- ( for जलात् ). $Ś_{1.2}$ $V_{3}$ $B_{3.4}$ $D_{7.10.11}$ कूलम् ( for स्थलम् ).

16 $V_{2}$ reads $^{ab}$ ( before corr. as in $B_{4}$ ) in marg. —$^{a}$) Ś $Ñ_{1}$ $V_{1.3}$ $B_{3.4}$ $D_{2.3.5.6.8.9.12}$ $T_{3.4}$ सोथा ( $D_{2.3.5.6.9.12}$ °प्या )श्रमम्; $Ñ_{2}$ $V_{2}$ $B_{1}$ $D_{7.10.11}$ $G_{2}$ $M_{10}$ आ( $M_{10}$ स्वा )श्रमं सम्-; $D_{1.4}$ सोपि स्थलम्; $T_{1.2}$ $G_{1.3}$ $M_{1.3}$ स आश्रमम् ( for सोऽश्रमं सम्- ). $B_{2}$ $M_{2}$ आश्रमं स समागम्य. ❀ Cm.g : आश्रममिति. ❀ —$^{b}$) $B_{1}$ स तदा ( for चतस्रः ). Ś $V_{1.3}$ $B_{3}$ $D_{3.5.8}$ $T_{4}$ $M_{6}$ तदा; $Ñ_{1}$ $B_{4}$ $D_{2.9}$ $T_{3}$ तथा ( for ततः ). $D_{6.7}$ $M_{1.2}$ प्रमदोत्तमाः ( for प्रमदास्ततः ). $Ñ_{2}$ ततस्तां प्रमदां तदा; $V_{2}$ $D_{10.11}$ ततस्ताः प्रमदोत्तमाः; $D_{1.4}$ तदा ताः प्रमदा बुधः. —$B_{1}$ om.; $V_{2}$ reads in marg. $16^{cd}$. —$^{c}$) Ś $Ñ_{1}$ $V_{1.3}$ $B_{3.4}$ $D_{1-6.8.9.12}$ $T_{3.4}$ आह्वयामास; $Ñ_{2}$ $V_{2}$ $B_{2}$ समाह्वयत; $D_{6.11}$ $M_{3}$ Cm शब्दापयति; $G_{2}$ आनयिष्यति; Cg.t as in text ( for शब्दापयत ). $Ñ_{2}$ सर्वात्मा ( for धर्मात्मा ). —$^{d}$) $Ñ_{2}$ $B_{2}$ चैवैनं; $V_{2}$ $G_{1}$ चैनं सं-( $G_{1}$ तु ) ( for चैनं च ). Ś $Ñ_{1}$ $D_{8.12}$ ननु( $Ñ_{1}$ तं तु ) ताश्चाभ्यवादयन्; $V_{1}$ $D_{2.9}$ L ( ed. ) तं च ( L [ ed. ] न तु ) ताश्चाभ्यवादयन्; $B_{3.4}$ $D_{1.3-5}$ तं च ता अभ्यवादयन्; G ( ed. ) तं च ताः समवादयन.

17 $V_{3}$ lacuna for $^{a}$. —$^{a}$) $M_{6}$ तां ( for ताः ). $G_{1}$ transp. स and ताः. $Ñ_{1}$ $V_{1}$ $D_{2.3.5}$ ताः सो( $D_{3}$ सं )पृच्छत;

G. 7. 95. 18
B. 7. 88. 18
L. 7. 90. 18

शुभं तु तस्य तद्वाक्यं मधुरं मधुराक्षरम् ।
श्रुत्वा तु ताः स्त्रियः सर्वा ऊचुर्मधुरया गिरा ॥ १८
अस्माकमेषा सुश्रोणी प्रभुत्वे वर्तते सदा ।
अपतिः काननान्तेषु सहास्माभिरटत्यसौ ॥ १९
तद्वाक्यमव्यक्तपदं तासां स्त्रीणां निशम्य तु ।
विद्यामावर्तनीं पुण्यामावर्तयत स द्विजः ॥ २०
सोऽर्थं विदित्वा निखिलं तस्य राज्ञो यथागतम् ।
सर्वा एव स्त्रियस्ताश्च बभाषे मुनिपुंगवः ॥ २१
अत्र किंपुरुषा भद्रा अवसञ्शैलरोधसि ।
वत्स्यथास्मिन्गिरौ यूयमवकाशो विधीयताम् ॥ २२

V2 (after corr. marg. as in text) B3.4 पप्रच्छ ताः स; B1 समाह्वयत; D1.4 स चापृच्छत; D9 ताश्च सोपृच्छद्; T1.2 G3 स ताः पृच्छति (for स ताः पप्रच्छ). Ś D8.12 स ताः पुनरुवाचेदं. —b) B1 [इ]यं (for [ए]षा). —c) Ñ2 B1.2 D6.7.10.11 T4 [ए]व (for [इ]ह). —d) D5-7.10.11 M7 सर्वम्; D9 सारम्; G1 सम्यग् (for सत्यम्). M1 मेचिरं. Ñ2 V2 B1.2 श्रोतुमिच्छामि कथ्यतां (B1 [marg. also कथ्यतां]तत्त्वतां).

18 a) Ñ1 V1 B2 D1.3-5 श्रुत्वा (for शुभं). Ś V3 D8.12 श्रुत्वा (V3 °त्वं) बुधस्य; Ñ2 V2 (after corr. marg. as in text) B3.4 D2.9 श्रुत्वा तस्य तु (B4 च); T3.4 शुभं तस्य तु (by transp.) (for शुभं तु तस्य). —b) Ñ1 V1.2 B3.4 D1-5.9 अतीव; T1 मधुवत्; M3 निशम्य; M9 यथार्थं; Ct as in text (for मधुरं). G1 मधुराक्षरसंयुतं. —c) M3 स्मित्वा (for श्रुत्वा). D6.7.10.11 T3.4 श्रुत्वा स्त्रियश्च ताः सर्वा. —M4 om. (hapl.) 18d-23a. —d) M6 श्लक्ष्णया मधुरां गिरा (sic). —For 18cd, Ś Ñ1 V1 B3.4 D1-5.8.9.12 subst.:

1237* प्रत्यूचुरभिपूज्यैनं परमं श्लक्ष्णया गिरा।

[D1.4 अभिपृच्छैनां; D9 अभिवीक्ष्यैनं (for अभिपूज्यैनं). B4 ता ऊचुरभिनाद्यैनं (for the prior half). B3.4 मधुरं (for परमं). L (ed.) परं श्लक्ष्णया.];

while Ñ2 V2.3 B1.2 subst. for 18cd:

1238* श्रुत्वोचुस्ताः स्त्रियः सर्वा बुधं परमया गिरा।

[Ñ2 प्रत्यूचुस्; B2 अब्रुवंस् (for श्रुत्वोचुस्). V2 श्लक्ष्णं; B1 सौम्यं (for बुधं). V3 मधुरया.]

19 M4 om. 19 (cf. v.l. 18). —a) D2.6.9 एव (for एषा). —b) Ñ2 [ऽ]नघ; B1 D2.5 तदा (for सदा). —V3 lacuna for cd (except अपतिः का). —c) Ś D8 रमते; D12 रमंती (for अपतिः). M7 सहितास्माभिः (for काननान्तेषु). B1.2.4 अपतित्वाद्वनांतेषु. —d) M7 काननांते (for सहास्माभिर्). Ñ V1.2 B D1-7.9-11 T3.4 M6-8 चरति (for अटति). Ñ1 V1 B1.2 D1-5 [अ]पि; D9 M6 [उ]त (for [अ]सौ). Ś D8.12 सदास्माभिश्चरेदिह.

20 M4 om. 20 (cf. v.l. 18). —a) Ñ2 V2 D5.10.11 T1 G M2.3.5-7.10 Ck.t आव्यक्तपदं; Cm.g as in text (for अव्यक्त°). D1.4 स तद्वाक्यं च सुव्यक्तं; D6 तद्वाक्यं व्यक्तमव्यक्तं. —b) Ś Ñ1 V1 D1-5.8.9.12 T3.4 ताभ्यः स्त्रीभ्यो (for तासां स्त्रीणां). Ś8 D2.8.12 निशाम्य. Ñ2 B वै; V2.3 D5-7.10.11 T1 G2.3 M3.10 च (for तु). —c) D2.3 G1 M5.6.8 आवर्तिनीं (for °र्तनीं). Ś D8.12 दिव्याम्; D1.4 तत्र (for पुण्याम्). V3 वशीकरणविद्यां तां. —d) V1 B1.2.4 D2.6.9-11 M1.3 आवर्तयति; V3 तदावर्तयत (hypm.) (for आवर्तयत). Ś Ñ2 V2.3 B1.2 D8.12 धर्मवित्; Ñ1 V1 B3.4 D2.3.5.9 वेदवित् (for स द्विजः). D1.4 भूयः ससार वेदवित्. ❀ Cg: आवर्तिनीं आवर्तिन्याख्यां विद्यामावर्तयत आवर्तयति स्म। प्रकृतप्रयोजनार्थम्। द्विजः क्षत्रियो बुधः; Ct: आवर्तनी विद्या सांग्रहणीपर्यायनामिका संवर्तविद्या तामावर्तयति स्म. ❀

21 M4 om. 21 (cf. v.l. 18). —a) D3 सोथः; D5 सोर्थो (for सोऽर्थं). Ñ1 V1 D1-5.9 संभूतिं (D9 °तिम्; D9 °तं); D10.11 T4 G2 M2.10 Cg.k.t सकलं (for निखिलं). Ñ2 V2 B2 विदित्वा सर्वमर्थं च; B1 इति मत्वा सर्वमर्थं; B3.4 तं भावं तत्त्वतो ज्ञात्वा. —b) Ś Ñ2 B1 D8.12 M6 यथातथं; Ñ1 D5 तथागतं; V1 D2.9 तथागतिं (D9 °तं); V2.3 B2 D10.11 यथा तथा; D1.3.4 उवाच ताः (D3 तं); D6.7 समागमं (for यथागतम्). —Ñ1 V1 D1-5 om. 21c-22b. —c) Ś V3 D8.12 T3.4 M6 तु (for च). Ñ2 V2 B1.2 ताः सर्वा योषितः सोथ; B3 सर्वत्र वार्थिनीर्नारीर्; B4 G (ed.) सर्वाः सर्वा (G [ed.] °स्तत्रा) र्थिनीर्नारीर्; D9 ता उवाच ततः सर्वं. —d) Ñ2 V2 B1.2 प्रोवाच; B3.4 उवाच (for बभाषे). Ś V2 (after corr. m.; before corr. as in B4) B2 D8.12 T1.2 G3 M3.6 मुनिसत्तमः; Ñ2 मधुरं वचः; B3 स बुधस्तदा; B4 मधुरस्तदा; G (ed.) मधुरं तदा (for मुनिपुंगवः). D9 विदित्वा तन्मनोगतं.

22 M4 om. 22 (cf. v.l. 18); Ñ1 V1 D1-5.9 om. 22ab (for all [except D9] cf. v.l. 21). M5 reads 22ab twice. —a) Ś D8 अथ; Ñ2 B यूयं; G2 यत्र; M5 (first time) तत्र; Cg.k.t as in text (for अत्र). D10.11 Ct किंपुरुषीर्; T1 किंपुरुषो. Ś V3 D8.12 रामा; Ñ2 V2 B1.2 D10.11 Ck.t भूत्वा; B3.4 पूर्वं; T1.2 G1.3 M3.5(second time).6.7.10 नाम (for भद्रा). —G3 M10 om. (hapl.) 22b-23c. —b) Ś V3 D8.12 T1.2 M5(second time).6 यूयं शैलस्य (V3 lacuna from शै up to सि); G1 आवसञ्शैलस्य; M1 आवासं शैल-; M3 ह्यवसञ्शैल- (for अवसञ्शैल-). D6.7 -मूर्धनि (for -रोधसि). Ñ2 V2 B पर्वतश्च शिलोच्चये; D10.11 Ct शैलरोधसि वत्स्यथ. ❀ Cg.k: शैलस्य रोधसि वत्स्यथ. ❀ —c) Ś वस च; V3 D8.12 वासं च (for वत्स्यथ). M6 दरौ (for गिरौ). Ś V3 D8.12 T1.2 M6 श्रीमन्तु (for यूयम्). D10.11 आवासस्तु गिरावस्मिन्; M5 वत्सरां-

मूलपत्रफलैः सर्वा वर्तयिष्यथ नित्यदा ।
स्त्रियः किंपुरुषान्नाम भर्तॄन्समुपलप्स्यथ ॥ २३

ताः श्रुत्वा सोमपुत्रस्य वाचं किंपुरुषीकृताः ।
उपासांचक्रिरे शैलं बह्वयस्ता बहुधा तदा ॥ २४

G. 7. 95. 24
B. 7. 88. 24
L. 7. 90. 24

इति श्रीरामायणे उत्तरकाण्डे एकोनाशीतितमः सर्गः ॥ ७९ ॥

---

स्त्रीन्गिरौ शीघ्रम् . —$^{d}$ ) D$_{10.11}$ शीघ्रमेव ( for अवकाशो ). ❀ Cg : यूयं सर्वाः किंपुरुषीर्भूत्वा किंपुरुषाख्यदेवयोनिस्त्रियो भूत्वा. ❀ —For $22^{cd}$, Ñ V$_{1.2}$ B D$_{1-7.9}$ T$_{3.4}$ G$_{1.2}$ M$_{1-3.8.9}$ subst.; M$_{5}$ ins. after $22^{ab}$ (first occurrence):

1239* वासं शैलवरे रम्ये यूयं तत्र गमिष्यथ ।

[ B$_{1}$ आशु; D$_{1.4}$ वासः; M$_{1}$ मासं ( for वासं ). Ñ$_{2}$ V$_{2}$ B D$_{2.9}$ -वने; T$_{3}$ -वरं ( for -वरे ). V$_{1}$ D$_{2.9}$ पुण्ये; T$_{3}$ रम्यं ( for रम्ये ). D$_{6.7}$ T$_{3.4}$ अत्र ( for तत्र ). Ñ$_{1}$ V$_{1}$ किं नार्यो नाध्यगच्छत; Ñ$_{2}$ V$_{2}$ B$_{1-3}$ D$_{1-5.9}$ किं चा( Ñ$_{2}$ V$_{2}$ B$_{1}$ यच्चा; B$_{2}$ तथा; D$_{5}$ किं वा )स्मिन्न ( D$_{3.4.9}$ °न्ना )धिगच्छथ; B$_{4}$ किं नास्मिन्नाभ्यगच्छथ ( for the post. half ). ]

23 M$_{4}$ om. $23^{a}$ ( cf. v.l. 18 ). G$_{3}$ M$_{10}$ om. $23^{abc}$ ( cf. v.l. 22 ). —$^{a}$ ) Ñ$_{1}$ D$_{2.9}$ मूलपुष्पैः; V$_{1}$ D$_{1.3.4}$ मूलपुष्प-; V$_{2}$ ( before corr. ) B$_{3.4}$ पुष्पमूल-; D$_{5}$ कंदमूल ; Cg as in text ( for मूलपत्र- ). Ñ$_{2}$ V$_{2}$ B$_{1.2}$ पुष्पैः ( for सर्वा ). —$^{b}$ ) Ñ$_{1}$ V$_{1}$ D$_{1-5.9}$ सर्वशः; Ñ$_{2}$ V$_{2.3}$ B$_{3.4}$ M$_{6}$ सर्वदा; B$_{2}$ सर्वथा; T$_{3.4}$ नित्यशः ( for नित्यदा ). B$_{1}$ सर्वदा वर्तयिष्यथ. —$^{c}$ ) Ñ$_{1}$ -पुरुषं. Ś V$_{1.3}$ D$_{2.3.5.6.8.9.12}$ M$_{4}$ किंपुरुषा ( for °षान् ). —$^{d}$ ) Ñ$_{1}$ भर्तारम् ( for भर्तॄन्सम्- ). B$_{1}$ -अभि- ( for -उप- ). D$_{5}$ -लिप्सथ; T$_{3}$ -लभ्यथ; G$_{1}$ -लक्ष्यथ ( for -लप्स्यथ ). ❀ Cm : स्त्रिय इति । किंपुरुषस्त्रियो यूयं किंपुरुषान्नाम प्रसिद्धान् उपलप्स्यथ ।; Cg : स्त्रियः किंपुरुषस्त्रियो यूयं किंपुरुषान्नाम प्रसिद्धान् भर्तॄन् समुपलप्स्यथ । अन्विष्य प्राप्स्यथेत्यर्थः ।; so also Ck.t. ❀

24 $^{a}$ ) V$_{2}$ B D$_{2.3.5.9}$ T$_{2-4}$ G$_{2}$ M$_{5.6.9.10}$ तच् ; D$_{1.4}$ ते; K ( ed. ) Cg तां ( for ताः ). D$_{5}$ -सुतस्य ( unmetric ) ( for -पुत्रस्य ). —$^{b}$ ) Ś V$_{3}$ D$_{8.12}$ M$_{6}$ सर्वाः; D$_{6.7.10.11}$ M$_{4}$ स्त्रियः; G$_{1.2}$ M$_{1.2.5.7-10}$ वाक्यं ( for वाचं ). Ś$_{3}$ D$_{8}$ -पुरुषे ( for -पुरुषी- ). G$_{3}$ -कृतां; Cm.g.k.t as in text ( for -कृताः ). Ñ V$_{1}$ B$_{3}$ D$_{1-5.9}$ T$_{3.4}$ भूताः( Ñ$_{2}$ सर्वा; B$_{3}$ भूत्वा; D$_{1.4}$ [ with hiatus ] आज्ञां; T$_{3.4}$ स्त्रियः ) किंपुरुषास्ततः( Ñ$_{1}$ °था ); V$_{2}$ B$_{1.2.4}$ सर्वाः किं ( V$_{2}$ °र्वार्थे )पुरुषाभवन् . —$^{c}$ ) G$_{2}$ वासं च ( for उपासां- ). Ñ$_{2}$ V$_{2}$ B$_{2-4}$ चैव( V$_{2}$ °वं ); D$_{6}$ G$_{1.2}$ M$_{1.5.10}$ शैले; T$_{1.2}$ G$_{3}$ M$_{3}$ तस्मिन् ; M$_{7}$ सर्वे ( for शैलं ). ❀ Cg.k : शैलमुप शैलस्य समीपे इत्यर्थः । Ct : शैलमुप शैलसमीपे आसांचक्रिरे. ❀ —$^{d}$ ) M$_{3}$ तान् ; M$_{6}$ तं. M$_{3}$ बहुलांस् ( for बहुधा ). T$_{3.4}$ तथा ( for तदा ). Ñ$_{2}$ V$_{2}$ B शैलं( B$_{1}$ ताश्च ) सर्वा ह्य( Ñ$_{2}$ °स्त्व )शेषतः; D$_{6.7.10.11}$ वध्वस्ता बहुलास्तदा. —For $24^{cd}$, Ś Ñ$_{1}$ V$_{1.3}$ D$_{1-5.8.9.12}$ subst.; while Ñ$_{2}$ V$_{2}$ B T$_{3.4}$ ins. after $24^{ab}$ :

1240* आजग्मुः पर्वतोद्देशं सोमपुत्रस्य शासनात् ।

[ Ś Ñ$_{1}$ D$_{8.12}$ जग्मुस्तं; V$_{3}$ ययुस्तं ( for आजग्मुः ). Ś V$_{3}$ D$_{8.9}$ T$_{3.4}$ पूर्वतोद्देशं; D$_{9}$ T$_{3.4}$ पर्वतोद्देशे. Ñ$_{2}$ V$_{2}$ B$_{1.2}$ जग्मुः शैलवृतं देशं ( for the prior half ). ]

—After 24, M$_{7}$ ins. :

1241* दृष्ट्वा बुधस्त्विलां तां
नारीभूतां शशाङ्कसदृशास्याम् ।
मन्मथपरीतचेताः
प्राह वचः सुभ्रु मां भजस्वेति ।

Colophon. V$_{1}$ om. —*Sarga name* : Ś D$_{8.12}$ इडोपाख्यानं; Ñ$_{1}$ D$_{2-4.9}$ किंपुरुषीयः; Ñ$_{2}$ V$_{2.3}$ B D$_{6}$ किंपुरुषोत्पत्तिः; D$_{1}$ किंपुरुषयोगः; D$_{5}$ किंपुरुषस्त्रियः; D$_{3}$ बुधदर्शनं. —*Sarga no.* ( figures, words or both ) : Ś Ñ$_{1}$ V$_{2.3}$ D$_{2.12}$ om.; Ñ$_{2}$ 93; B$_{1}$ 92; B$_{4}$ T$_{4}$ 96; D$_{1.4.5}$ 80; D$_{2}$ 85; D$_{6.7.10.11}$ T$_{1.2}$ G M$_{1-5.7.9.10}$ 88; D$_{8}$ 84; D$_{9}$ 91; T$_{3}$ 95; M$_{6}$ 86; M$_{8}$ 87. —After colophon, D$_{2}$ concludes with राम; T$_{4}$ with श्रीरामार्पणमस्तु । श्रीरामाय नमो नमः; G M$_{2.5.8}$ with श्रीरामाय नमः; M$_{10}$ with श्रीरामचन्द्राय नमः.

# ८०

G. 7. 95. 1
B. 7. 89. 1
L. 7. 91 1

श्रुत्वा किंपुरुषोत्पत्तिं लक्ष्मणो भरतस्तदा ।
आश्चर्यमिति चाब्रूतामुभौ रामं जनेश्वरम् ॥ १
अथ रामः कथामेतां भूय एव महायशाः ।
कथयामास धर्मात्मा प्रजापतिसुतस्य वै ॥ २
सर्वास्ता विद्रुता दृष्ट्वा किंनरीर्ऋषिसत्तमः ।
उवाच रूपसम्पन्नां तां स्त्रियं प्रहसन्निव ॥ ३
सोमस्याहं सुदयितः सुतः सुरुचिरानने ।
भजस्व मां वरारोहे भक्त्या स्निग्धेन चक्षुषा ॥ ४
तस्य तद्वचनं श्रुत्वा शून्ये स्वजनवर्जिता ।
इला सुरुचिरप्रख्यं प्रत्युवाच महाग्रहम् ॥ ५
अहं कामकरी सौम्य तवास्मि वशवर्तिनी ।
प्रशाधि मां सोमसुत यथेच्छसि तथा कुरु ॥ ६
तस्यास्तदद्भुतप्रख्यं श्रुत्वा हर्षसमन्वितः ।
स वै कामी सह तया रेमे चन्द्रमसः सुतः ॥ ७

## 80

V1 cont. the previous Sarga. D12 begins with ॐ.

1 b) Ś V3 D8.12 भरतो लक्ष्मणस् ( by transp. ). Ś D6–8.10.11 G1.2 M5 तथा ( for तदा ). Ñ V1.2 ( after corr. marg. as in text ) B3.4 D1–5.9 T3.4 उभौ ( D1 °भौ तौ [ hypm. ] ) भरतलक्ष्मणौ. — c) Ś V3 D8.12 तं ब्रूत; Ñ V1 D5 काकुत्स्थौ; V2 ( before corr. as in B2; after corr. marg. ) B1.2 [ अ ]वोचेताम्; B3.4 D1–4.9 T3.4 काकुत्स्थं; D10.11 T1.2 G3 तं ( D10 [ marg. ] तौ; D11 च ) ब्रूताम्; L ( ed. ) तौ ब्रूत ( for चाब्रूताम् ). ❀ Cg : अब्रूताम्; Ck : ब्रूतामब्रूताम्; Ct : ब्रूतामब्रुवताम्. ❀ — d) Ñ V1 D1–5.9 T3.4 तौ तदा ( Ñ2 V1 °था ) प्रत्यनंदतां; V2 ( after corr. marg. as in text ) B3.4 तदा प्रतिननंदतुः.

2 a) Ñ2 V2 B3 ततो ( for अथ ). V2 B3.4 भूय; B1 G2 एनां; M3 ( after corr. *sec. m.* as in text ) एकां ( for एतां ). — b) V2 B4 एनामेव; B3 मधुरां सु- ( for भूय एव ). — d) Ñ1 D1.4.9 ह; V1 D2.5 हि; D3 किं ( sic ) ( for वै ). Ś D8 12 -सुतस्थले; B3.4 -सुताश्रितां ( for -सुतस्य वै ).

3 a) Ñ2 B2 अथ ता; V2 ( before corr.; after corr. marg. as in B2 ) B3.4 सर्वतो ( for सर्वास्ता ). Ñ V1.3 D7.9–11 T3.4 विद्रुता. B1 अथ तां विद्रुतां दृष्ट्वा; D1.3–5 M7 सर्वांस्तान्विद्रुतान्दृष्ट्वा; D6 T1.2 G3 M3 सर्वासां निष्क्रमं दृष्ट्वा. — b) Ñ B1 किंनरीम्; D1.3–5 M7 किंनरान्; D6 T1.2 G3 M3 तासां तु ( with hiatus ) ( for किंनरीर् ). Ś V3 D8.12 किंनर्यो ( Ś D8 °रीर् ) गिरिसत्तमात्; V2 ( after corr. marg. as in text ) B3 4 ता नारीः शशिनः सुतः; T3.4 किंनरैस्तु बुधस्तदा. — d) Ś B4 D8.12 स्त्रियं तां ( by transp. ); B1.3 स्त्रियं स; D5 नारीं तां ( for तां स्त्रियं ). Ś V2 ( *sup. lin.* also as in Ñ2 ).3 B1.2 D8.12 वचः; Ñ2 B4 ततः ( for इव ). ❀ Cg : सर्वा इति। सर्वासां इलाव्यतिरिक्तानां विद्रुतत्वात् हासः कामविकारमूल एव ।; Ct : विद्रुता गता दृष्ट्वा। विद्रुताः इति पाठान्तरम् । प्रहसन्निव सर्वासां स्वबुद्धया निराकरणात् प्रहासः. ❀

4 a) T1.2 G3 M3 सुरुचिरः; G2 स दयितः ( for सुदयितः ). M7 अहं सोमस्य दयितः; M8.9 सोमस्य चाहं दयितः. — b) M7.8 पुत्रः ( for सुतः ). — c) D2.9 मां भजस्व ( by transp. ). — d) Ñ2 V2 B1.3.4 प्रीति-; V1 D6 भर्तृं; B2 स्वयं; D7 T2 G2.3 M1–6.8–10 भक्तं; Cg.k.t as in text ( for भक्त्या ). Ñ1 D1–5.9 T3.4 G1 भर्तृं ( G1 °क्तं ) स्निग्धे ( D2.9 T3.4 °स्नेहे ) न चेतसा ( T3.4 चक्षुषा ); M7 स्निग्धेन स्वचक्षुषा. ❀ Cg.k.t : स्निग्धं स्नेहयुक्तम्. ❀

5 a) Ñ1 V2 ( after corr. marg. as in text ) B1.4 D5 वाक्यमाज्ञाय ( Ñ1 D5 °कर्ण्य ); V1 D1–4.9 वाक्यमाकर्ण्य ( for वचनं श्रुत्वा ). — b) Ś3 D8 12 शून्य-; B2 वने; D1.11 श्रुत्वा; T1.2 G3 M3 सैषा ( for शून्ये ). B1.4 सा ( for स्व- ). Ñ2 V B D2.3.7.9.10 T3.4 -वर्जिते. D5 श्रुत्वा जनविसर्जिता. — c) Ś Ñ1 V1.3 D1–5.8.9.12 इडा. T2 G2 M1.5.10 -प्रख्या ( for -प्रख्यं ). Ñ2 V2 B इला सु ( V2 सं; B3 च ) रुचिरं वाक्यं. — d) Ñ1 महाव्रतं; V3 °मुनिं; D2.9 सुखावहं; D6.7.10.11 °प्रभं ( for महाग्रहम् ). ❀ Cg : महाग्रहो ग्रहदेवः. ❀

6 a) Ś Ñ V B D1–5.8.9.12 M6 इयं; Cm.g as in text ( for अहं ). Ñ2 V2 ( also *sup. lin.* as in text ) B3 कामपरा; B1.4 D5.10.11 Cg.t °चरी ( B4 °रा ); D1.4 कर्त्री; Cm as in text ( for कामकरी ). D5 सौम्या. — b) B1.3 [ अ ]हं ( for [ अ ]स्मि ). — c) B2 D3 सोमपुत्र. — V3 lacuna for 6d–7a. — d) Ñ1 D1–3.5–7.9 यदी ( D2.6.7 °दि ) च्छसि; D4 यदीप्ससि. Ñ V1 B D1–5.9 महामते ( B1.4 °व्रत ) ( for तथा कुरु ).

7 V3 lacuna for a (cf. v.l. 6). Ś1 D8 om. 7. — a) G2 ततस् ( for तस्यास् ). Ñ V1.2 B D1–5.9 तत्त ( V1 सत ) स्या ( B2 तस्याः सु ) मधुरं वाक्यं; T3.4 M7 तस्यास्तद्वचनं ( M7 °दद्भुतं ) श्रुत्वा. — b) T3.4 हर्षेण तु; M7 वाक्यं हर्ष- ( for श्रुत्वा हर्ष- ). D2.3.9 -समन्वितं. D6.7.10.11 श्रुत्वा हर्षमुपागतः. — T1 om. ( hapl. ? ) 7cd. — cd) Ś2.3 D12 स च; Ñ2 V2 B1.2 transp. कामी and रेमे. B1 तदा ( for स वै ). Ñ2 V2 B1.2 transp. कामी and रेमे. B3.4 सोम- M3 सोम ( M3 चंद्र ) सुतस्तदा; B2 चंद्रसमप्रभुः. — For 7cd, स्कामविहाराय तां ( B4 °र्थी सं ) प्रगृह्य शुचिस्मितां. — Ñ1 V1 D1–5.9 subst. :

बुधस्य माधवो मासस्तामिलां रुचिराननाम् ।
गतो रमयतोऽत्यर्थं क्षणवत्तस्य कामिनः ॥ ८
अथ मासे तु संपूर्णे पूर्णेन्दुसदृशाननः ।
प्रजापतिसुतः श्रीमाञ्शयने प्रत्यबुध्यत ॥ ९
सोऽपश्यत्सोमजं तत्र तप्यन्तं सलिलाशये ।
ऊर्ध्वबाहुं निरालम्बं तं राजा प्रत्यभाषत ॥ १०
भगवन्पर्वतं दुर्गं प्रविष्टोऽस्मि सहानुगः ।
न च पश्यामि तत्सैन्यं क नु ते मामका गताः ॥ ११
तच्छ्रुत्वा तस्य राजर्षेर्नष्टसंज्ञस्य भाषितम् ।
प्रत्युवाच शुभं वाक्यं सान्त्वयन्परया गिरा ॥ १२
अश्मवर्षेण महता भृत्यास्ते विनिपातिताः ।
त्वं चाश्रमपदे सुप्तो वातवर्षभयार्दितः ॥ १३
समाश्वसिहि भद्रं ते निर्भयो विगतज्वरः ।
फलमूलाशनो वीर वस चेह यथासुखम् ॥ १४
स राजा तेन वाक्येन प्रत्याश्वस्तो महायशाः ।
प्रत्युवाच शुभं वाक्यं दीनो भृत्यजनक्षयात् ॥ १५ G. 7. 96. 16 B. 7. 89. 15 L. 7. 91. 16

1242* तां स कामविहाराय प्रतिजग्राह वीर्यवान् ।

[D1.4.5 सकामो(D5 °मां) (for स काम-). V1 सोथ कामं विहायाशु (for the prior half).]

8 V3 reads $^{ab}$ after corr. in marg.—$^{a}$) Ñ V1.2 (before corr. as in B3).3 B2 D1–5.9 M6 स तस्य(Ñ1 °स्यां); B1 तस्य स; B3.4 तस्यासौ (for बुधस्य). Ś1 तस्य मासस्ततश्चैक; Ś2.3 D12 स तस्य नृपतेर्मास; D8 तस्य मास: स नृपतेर्.—$^{b}$) Ś D1.3–5.8.12 इडां सु-; V2 (before corr. as in B3) B1.2 T1.2 G3 M3.6 इलां सु-; V3 इडां तां (for तामिलां). Ñ1 V1 D2.9 इडाया:(Ñ1 °यां) समनीयत; Ñ2 B3.4 इलया सह धीमत:.—For 8$^{cd}$, Ś Ñ V B D1–6.8.9.12 M6 subst.:

1243* क्षणभूत इवात्यर्थं तदा रमयतो गतः ।

[M6 क्षणी- (for क्षण-). Ñ1 V1 -भूतन्. Ś1 D8 तया; Ś2.3 यथा; D12 तथा (for तदा). Ñ1 V1.2(after corr. marg. as above) B3.4 D2.9 व्यप(Ñ1 B3.4 °ती)याद्रमतो वने (for the post. half).]

9 $^{a}$) G1 मासेंदु- (for मासे तु). T1.2 G3 M3 च पूर्णे तु; M6 सुसं° (for तु संपूर्णे).—$^{b}$) V2 (after corr. marg. as in text) B3.4 पूर्णचंद्रनिभानन:.—$^{c}$) D9 om.; M5 -समः; Cm.g.k.t as in text (for -सुत:).—$^{d}$) Ś Ñ1 V1 B3.4 D1–5.8.9.12 शयनात्; Ñ2 B1 M5 शयान:.

10 $^{a}$) Ñ2 V3 (after corr. marg. as in text) B3.4 स ददर्श बुधं तत्र.—$^{b}$) Ñ1 V1.3 D2.6.9–11 M5 तपंतं; D7 पश्यंतं (for तप्यन्तं). V2 (before corr.) B3.4 सलिले तपः (for °लाशये). Ñ2 V2 (after corr. m.) B1.2 M6 तपस्यंतं जलाशये.—$^{c}$) B2 -पादं; T2 G1 M1 -बाहुर्; M6 -बाहु- (for -बाहुं).—$^{d}$) D1.2.4 स (for तं).

11 $^{a}$) B2 तुंगं (for दुर्गं).—$^{b}$) Ś D8.12 M6 बलानुगः (for सहा°).—$^{c}$) M7 क (for न). T1.2 G1.3 M1–5.8–10 तत्सर्वं; G2 तान्सर्वान् (for तत्सैन्यं).—$^{d}$) Ś D8.12 कुत्र; Ñ1 क च (for क नु). Ñ1 M2.6 मे; D9 वै (for ते). D2 क नु सेना समागता.

12 D11 reads 12 twice.—$^{b}$) D1.4 कार्दमस्य तु भाषितं.—$^{c}$) Ś B3.4 D8.12 बुधो; Ñ1 V1.3 D1–5.9 ततो (for शुभं).—$^{d}$) Ś1 सांत्वया. Ś Ñ1 V1 D3.5.8.9.12 श्लक्ष्णया; D2 प्लुतया (for परया). Ñ2 B1.2 M6 मधुरं(Ñ2 अधिकं) तदा (B2 नृपं; M6 गिरं); V3 (after corr. marg. as in B1) B3.4 निरतं नृपं; D1.4 मधुराक्षरं (for परया गिरा). T1.2 G3 M3 सांत्वं मधुरया गिरा.—After 12, Ś Ñ V B D1–5.8.9.12 T2–4 ins.:

1244* शृणु सर्वं यथातथ्यं राजर्षे शुभलक्षण ।
संस्तम्भयस्व चात्मानं मा च शोके मनः कृथाः ।

[(l. 1) D1 स त्वं; D2.9 तत्त्वं (for सर्वं). B2 तथा (for यथा-). Ś Ñ V1.2 D8.12 T2 -तत्त्वं; D2.9 सर्वं (for -तथ्यं). Ñ1 V1.3 D2.3.12 T4 -लक्षणं (for -लक्षण). Ñ2 कर्दमात्मज.—(l. 2) Ś Ñ1 V3 B4 D1–4.8.9.12 संस्तंभय स्वमा(V3 तथा)त्मानं (for the prior half). B1 स्म (for च). D2 नमः (meta.) (for मनः).]

13 $^{b}$) B1 ते भृत्या (by transp.). Ś Ñ1 V B3.4 D2.3.5.8.9.12 T3.4 वि(B3 च; D9 तु) नि(D2 तु वि; T3 [ऽ]ति वि)सूदिताः; D1.4 च विनाशिताः (for विनिपातिताः).—$^{c}$) Ś1.2 D8.12 T4 आश्रमपदे. B2 तस्थौ (sic); B4 गुप्तो (for सुप्तो).—$^{d}$) V1 D1–5.9 -बलार्दि(D1.4 °ह)तः; M4 -भयान्वितः (for -भयार्दितः).

14 $^{a}$) Ś Ñ1 D8.12 राजेंद्र; Ñ2 V1.2 B D1–4.9 M6 राजर्षे (for भद्रं ते).—$^{b}$) D1.4 निर्भये.—$^{c}$) B3 -[अ]शनैर्. G2 दिव्ये (for वीर).—$^{d}$) D6.7.10.11 निवसेह; M5 वसेह च (for वस चेह). Ś Ñ1 V1 D1–5.8.9.12 वसेह(D5 *वसे:) कतिचित्क्षपाः(D1 °त्समाः); Ñ2 V2 (before corr. as in V3; after corr. marg.) B1 M6.7.10 कंचित्कालं समा(M7.10 वसा)श्रमे; V3 B2–4 वस काश्चिदिह क्षपाः; T3.4 निवसेह कति क्षपाः.

15 $^{a}$) D5 [अ]नेन (for तेन).—$^{b}$) D6.7.10.11 महामतिः (for °यशाः).—$^{c}$) Ñ1 D1.2–5 T1.2 G3 M3 ततो (for शुभं).—$^{d}$) D1.4 [ऽ]मृतस्व- (for भृत्य-). T1.2 G3 M3 -क्षयाद्भृशं; T3.4 G2 M6 -बलक्षयात् (for -जनक्षयात्).

G 7.56.17 B. 7.89.16 L 7.91.17

त्यक्ष्याम्यहं स्वकं राज्यं नाहं भृत्यैर्विनाकृतः ।
वर्तयेयं क्षणं ब्रह्मन्समनुज्ञातुमर्हसि ॥ १६

सुतो धर्मपरो ब्रह्मञ्ज्येष्ठो मम महायशाः ।
शशबिन्दुरिति ख्यातः स मे राज्यं प्रपत्स्यते ॥ १७

न हि शक्ष्याम्यहं गत्वा भृत्यदारान्सुखान्वितान् ।
प्रतिवक्तुं महातेजः किंचिदप्यशुभं वचः ॥ १८

तथा ब्रुवति राजेन्द्रे बुधः परममद्भुतम् ।
सान्त्वपूर्वमथोवाच वासस्त इह रोचताम् ॥ १९

न संतापस्त्वया कार्यः कार्दमेय महाबल ।
संवत्सरोपितस्येह कारयिष्यामि ते हितम् ॥ २०

तस्य तद्वचनं श्रुत्वा बुधस्याक्लिष्टकर्मणः ।
वासाय विदधे बुद्धिं यदुक्तं ब्रह्मवादिना ॥ २१

16 $V_3$ lacuna for $^{ab}$.—$^{a}$) $B_2$ त्यजामि. Ś$_{2.3}$ Ñ$_1$ $D_{12}$ शुभं; $V_2$ स्वयं; $B_1$ इदं; $T_1$ $G_{1.3}$ $M_3$ Ck सुतं; Cg.t as in text (for स्वकं). Ś$_1$ $V_1$ $D_3$ शुभं वाक्यं; Ñ$_2$ $B_{2-4}$ स्वयं (Ñ$_2$ गत्वा [unmetric]) प्राणान्; $D_{2.9}$ $M_5$ स्वकं देहं (for स्वकं राज्यं).—$^{b}$) $V_2$ $B_3$ हि; $B_2$ च (for [अ]हं). Ś Ñ $V_1$ $D_{8.9.12}$ $T_4$ न तु (Ñ$_1$ $V_1$ न च; Ñ$_2$ न हि; $T_4$ दीनो) भृत्य-; $D_{1-5}$ नाहं भृत्य- (for नाहं भृत्यैर्). $V_2$ निराकृतः; $B_3$ (marg. also as in text) विनास्थितः; $D_5$ -विनाशनं; $G_1$ विना हतः; Cm.g.k.t as in text (for विनाकृतः). $T_3$ दीनो भृत्यविनाशकृत्.—$^{c}$) Ś Ñ$_1$ $V_{1.3}$ $D_{2.8.9.12}$ अहं; $T_{3.4}$ क्षयं; Cg.k.t as in text (for क्षणं).—$D_9$ om. (hapl.?) $16^{d}$–$17^{c}$.—$^{d}$) $B_{1.3.4}$ $D_6$ $T_{3.4}$ माम्; Cg.k.t as in text (for सम्-).

17 $D_9$ om. $^{abc}$ (cf. v.l. 16).—$^{a}$) Ś$_{1.2}$ $D_{8.12}$ तथा; $V_2$ (after corr. marg. as in text) $B_{3.4}$ पुत्रो; (for सुतो). $G_1$ धर्मचरो. Ś $D_{8.12}$ ज्येष्ठो; $V_2$ (after corr. marg.) $M_7$ राजन् (for ब्रह्मन्). Ñ$_1$ अतो ब्रह्मपरो ब्रह्मन्.—$^{b}$) Ś $D_{8.12}$ मम राजा; Ñ$_1$ $V_1$ $D_{2.3.5}$ मम ज्येष्ठो (by transp.); $D_{1.4}$ मम श्रेष्ठो (for ज्येष्ठो मम).—$^{c}$) Ś$_1$ शशबिंदु; Ñ$_1$ $D_4$ $T_{3.4}$ $M_{3-5}$ शशिबिंदुर्; $D_3$ शिशुबिंदुर्.—$^{d}$) $M_7$ प्रशास्यते; Cg.k.t as in text (for प्रपत्स्यते). Ś $D_{8.12}$ राज्यं मे समवाप्स्यति; Ñ$_1$ $V_1$ $D_{1-5.9}$ $T_{3.4}$ राज्यं वै (D$_{1.3-5}$ मे) प्रतिपत्स्यते; Ñ$_2$ $V_{2.3}$ $B_{1.2}$ $M_6$ स च ($V_3$ $M_6$ मे) राज्यमवाप्स्यति ($V_2$ °ते); $B_{3.4}$ बाह्लिभूमौ नराधिपः.

18 $^{a}$) $M_5$ च; Cg as in text (for हि). Ś$_3$ $D_{12}$ शक्यामि; $B_{1-3}$ $D_{3.5}$ शक्नोमि; $D_{6.7}$ $M_7$ पश्यामि; Cg.k.t as in text (for शक्ष्यामि). Ś Ñ$_1$ $V_{1.3}$ $D_{1-5.8.12}$ $T_{3.4}$ गंतुं; $B_1$ ब्रह्मन्; $D_9$ त्वत्र; $D_{10.11}$ Cg.k.t हित्वा; $M_5$ भित्त्वा (for गत्वा).—$^{b}$) Ś $D_{8.12}$ पुत्र-; $M_1$ भृत्यान् (for भृत्य-). Ś $V_3$ $D_{8.12}$ सुखैधितान्; Ñ$_2$ $B_{1.2}$ सुखस्थितान्; $V_2$ (after corr. marg. as in Ñ$_2$) $B_{3.4}$ $T_1$ $G_{1.3}$ $M_5$ सुदुःखितान्; $D_7$ सुतान्वितान्; $M_7$ समाहितान्; Cg.k.t as in text (for सुखान्वितान्). Ñ$_1$ $V_1$ $D_{1-5.9}$ भृत्यदारविनाकृतः; $T_{3.4}$ °वर्गविनाशकः.—$^{c}$) $M_9$ om. वक्तुं. Ś $V_3$ $D_{8.12}$ महासत्त्व; Ñ$_2$ $B_1$ $D_{6.7}$ $M_{1.5.6}$ °तेजाः; $V_2$ (after corr. marg. as in Ñ$_2$) $B_{2-4}$ °प्राज्ञ (for °तेजः).—$V_3$ lacuna for $^{d}$.—For $18^{cd}$, Ñ$_1$ $V_1$ $D_{1-5.9}$ $T_{3.4}$ subst.:

1245* प्रतियातुं महासत्त्व पुरं देवपुरोपमम् ।

[$D_{2.9}$ प्रतिगंतुं (for °यातुं). Ñ$_1$ पुरंदर- (for पुरं देव-). $D_1$ -पुरोत्तमं.]

19 $^{ab}$) Ś $D_{8.12}$ ततो (for तथा). Ñ$_2$ $V_1$ $B_{1-3}$ $D_{1.2.4.5.9}$ [उ]क्तवति (for ब्रुवति). Ś Ñ $V_{1.2}$ $B_{1.2.4}$ $D_{1-5.8.9.12}$ बुधः सोमसुतः प्रभुः (Ś $D_{8.12}$ शुभः); $D_{6.7}$ $T_{3.4}$ बुधः परमबुद्धिमान् (for $^{b}$). $M_9$ बुधस्तु शोचमानं तं राजानममितप्रभं.—$^{d}$) $G_2$ $M_1$ तु; $M_6$ (with hiatus) ते (for त).

❀ Ck: अद्भुतमागम्य अद्भुतकर्मसिद्धिहेतुभूतं परमं वचः सान्त्वपूर्वं तव कियत्कालवासेन सौख्यं भविष्यतीत्येवमादि सान्त्ववादपूर्वं ते इह किंचित्कालं वासो रोचतामित्यथोवाच; so also Ct. ❀—For $19^{cd}$, Ś Ñ V B $D_{1-5.8.9.12}$ subst.:

1246* प्रत्युवाच शुभं वाक्यं दुःखार्तं राजसत्तमम् ।

[$D_1$ सतां; $D_{4.5}$ स तं (for शुभं). Ñ$_2$ राज *** (damaged); $V_2$ (after corr. marg. as above) $B_{3.4}$ कर्दमात्मजं; $B_2$ °संमतं (for राजसत्तमम्). $B_1$ सांत्वयन्मधुरं तदा; $D_1$ दुःखशोकविनाशनं (for the post. half).]

20 $M_7$ om. 20.—$^{b}$) Ś $V_3$ $B_3$ $D_{8.12}$ $M_6$ महायशः; Ñ$_1$ $V_1$ महीपते; Ñ$_2$ $D_{1-5.9}$ °मते; $V_2$ $B_{1.2.4}$ °द्युते (for महाबल).—After $20^{ab}$, Ñ$_2$ $V_2$ B ins.:

1247* फलमूलाशनो भूत्वा ममाश्रमपदे वस ।

—$^{c}$) $V_2$ (after corr. marg.) $B_{2-4}$ [अ]हं; $D_{3.7.10.11}$ $T_{3.4}$ [अ]द्य (for [इ]ह). Ś $D_{8.12}$ संवत्सरे गते ($D_{12}$ °रेपिते) वीर; Ñ $V_{1.3}$ $B_1$ $D_{1-5.9}$ $M_{2.4.9}$ संवत्सरोषिते ($B_1$ $M_{2.4.9}$ °तः; $D_{2.9}$ °तो) शूर (Ñ$_2$ $V_3$ $D_{1-5.9}$ वीर); $M_6$ सर्वं सहोषिते वीर.—$^{d}$) Ś Ñ$_2$ $V_2$ (before corr.; after corr. marg. as in $B_1$).$_3$ $B_{3.4}$ $D_{8.12}$ $M_6$ कथयिष्यामि ते शुभं (Ñ$_2$ हितं); Ñ$_1$ $V_1$ $B_2$ $D_{1-5.9}$ $T_2$ कथयिष्ये शुभं ($D_5$ पुनस्; $T_2$ हितं) त्वयि ($B_2$ तव); $B_1$ जनयिष्ये सुतं तव.—After 20, Ñ$_2$ $V_2$ B ins.:

1248* पुनः समेष्यति भवान्सर्वभृत्यजनेन ह ।

[$B_2$ च (for ह).]

21 $^{a}$) Ñ $V_1$ $D_{1-5.9}$ इति तस्य वचः श्रुत्वा.—$^{c}$) Ñ$_1$ $D_{1-5}$ [अ]सि-; $B_2$ $D_9$ नि- (for वि-). Ñ$_2$ $V_2$ (after corr. marg. as in text) चकार बुद्धिं वासाय.—$^{d}$) Ñ $V_1$

G. 7. 107. 20 B. 7. 100. 18 L. 7. 102. 19 निवेश्य ते पुरवरे आत्मजौ संनिवेश्य च ।
आगमिष्यति मे भूयः सकाशमतिधार्मिकः ॥ १८
ब्रह्मर्षिमेवमुक्त्वा तु भरतं सबलानुगम् ।
आज्ञापयामास तदा कुमारौ चाभ्यषेचयत् ॥ १९
नक्षत्रेण च सौम्येन पुरस्कृत्याङ्गिरःसुतम् ।
भरतः सह सैन्येन कुमाराभ्यां च निर्ययौ ॥ २०
सा सेना शक्रयुक्तेव नगरान्निर्ययावथ ।
राघवानुगता दूरं दुराधर्षा सुरासुरैः ॥ २१
मांसाशीनि च सत्त्वानि रक्षांसि सुमहान्ति च ।
अनुजग्मुश्च भरतं रुधिरस्य पिपासया ॥ २२
भूतग्रामाश्च बहवो मांसभक्षाः सुदारुणाः ।
गन्धर्वपुत्रमांसानि भोक्तुकामाः सहस्रशः ॥ २३

---

$D_6$ राघवानुगौ. —$^{d}$) Ś$_3$ $D_{12}$ स्वे; $M_5$ तत्- (for द्वे). Ñ$_2$ V $B_{1-3}$ $D_{1-5.9}$ $M_6$ पुरे द्वे (by transp.); $G_3$ पुराणि. Ś Ñ$_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ तु करि($D_{12}$ भवि)ष्यति; Ñ$_2$ $V_2$ $B_{1-3}$ रचयिष्यति; $B_4$ $T_1$ $G_2$ विभजिष्यति; $D_6$ (marg.) विहरिष्यतः; $G_1$ $M_{2.6.7.10}$ विजयिष्यतः($M_6$ °ति); $M_5$ निवसिष्यतः.

18 Note hiatus between $^{a}$ and $^{b}$. —$^{a}$) Ś $V_3$ $D_8$ निविश्य (for निवेश्य). $D_{2.5.12}$ $T_{1.2}$ $G_{1.3}$ $M_{2.7.8}$ तौ; $T_3$ च (for ते). $T_4$ मिथिलेशः (for निवेश्य ते). Ś Ñ$_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ $T_{3.4}$ पुरे रम्ये; Ñ$_2$ B $M_6$ पुर(Ñ$_2$ °रे)श्रेष्ठे; $V_2$ (before corr. as in B; after corr. m.) पुरे वीरः; Cm.t as in text (for पुरवरे). —$^{b}$) Ś Ñ$_1$ $V_1$ $D_{1-5.8.9.12}$ ह्यात्मजौ; $V_2$ (after corr. m.) सुतौ ताव्; $T_2$ $G_{1.2}$ $M_{2.4.7-10}$ चात्मजौ($M_4$ °जे); $M_5$ स्वात्मजौ; Cm.t as in text (for आत्मजौ). Ś $D_{1-5.8.9.12}$ विनिवेश्य($D_3$ °युज्य; $D_5$ °योज्य); $V_2$ (after corr. m.) $B_4$ अभिषिच्य (for संनिवेश्य). $V_{1.2}$ (after corr. m. as in text) ह (for च). $V_3$ स्वात्मजेषु निवेश्य च; $T_{3.4}$ ह्यात्मजौ चारुविक्रमौ. —$^{c}$) $D_{2.3.12}$ $M_6$ ते; $M_7$ वै (for मे). Ś$_1$ Ñ$_2$ $V_{1.2}$ B वीरः; Ś$_{2.3}$ $D_{8.12}$ शूरः; Ñ$_1$ $V_3$ $D_{1-5.9}$ ब्रह्मन् (for भूयः). —$^{d}$) Ś Ñ$_1$ $V_3$ $D_{1-5.8.9.12}$ समीपम् (for सकाशम्). Ñ$_1$ $D_2$ $T_4$ इति; Ñ$_2$ $V_{2.3}$ B इह (for अति-). Ś $D_{8.12}$ भरतः पुनः (for अतिधार्मिकः).

19 $^{a}$) $G_2$ महर्षिम्. Ś Ñ V B $D_{1-4.8.9.12}$ $M_6$ एवमुक्त्वा तु(Ñ$_2$ $B_{1-3}$ $D_9$ च; $D_2$ स)ब्रह्मर्षिं(Ś $D_{8.12}$ काकुत्स्थो; Ñ$_2$ $V_2$ B तमृषिं); $D_5$ $T_{3.4}$ स एवमुक्त्वा ब्रह्मर्षिं. —$^{b}$) $M_{6.7}$ भरतः. $B_4$ च (for स-). $V_2$ B $D_{1.2.4.9}$ -पदा($B_4$ सहा)नुगं($D_{1.4}$ °गः); $M_1$ -बलागतं; $M_{7.8}$ -बलानुगः. —$^{c}$) $V_2$ $B_{1.2.4}$ प्रेषयामास च($V_2$ स); $B_3$ संप्रेषयामास (for आज्ञापयामास). Ñ$_1$ $V_{1.3}$ $D_{1-5.9}$ ततः (for तदा). Ñ$_2$ उपविश्य ततो रामः. —$^{d}$) Ś $D_{8.12}$ चाभिषेच्य तौ; $D_6$ $G_2$ $M_{10}$ अभ्यषेचयत्.

20 $^{a}$) Ñ$_1$ सु-; $V_1$ $G_2$ [ए]व; $V_3$ $D_{1.3-5}$ तु (for च). $M_7$ धर्मेण (for सौम्येन). —$^{b}$) Ś Ñ$_2$ $V_2$ B $D_{8.12}$ नमस्कृत्य($B_{3.4}$ °त्वा) (for पुरस्कृत्य). $D_3$ om. सुतम्. Ś $D_{8.12}$ द्विजोत्तमान्; Ñ$_2$ $V_2$ B $M_6$ महामुनीन् ($M_6$ °निं); Ct as in text (for [अ]ङ्गिरःसुतम्). —$^{c}$) Ś $D_{3.12}$ भरतं. Ñ$_2$ $V_2$ B पुत्राभ्यां (for सैन्येन). Ś $V_{1.3}$ $D_{1-5.8.9.12}$ सेनया सार्धं (for सह सैन्येन). Ñ$_1$ सेनया भरतः सार्धं. —$^{d}$) Ś Ñ$_1$ $V_{1.3}$ $D_{1-5.8.9.12}$ कुमारौ च; Ñ$_2$ $V_2$ B स्वबलेन (for कुमाराभ्यां). Ś $V_3$ $D_{8.12}$ वि($D_{8.12}$ व्य)सर्जयत्; Ñ$_1$ $V_1$ $D_{1.3-5}$ विसर्जितौ; $V_2$ $B_1$ $D_{7.10.11}$ विनिर्ययौ; $D_{2.9}$ विवर्धितौ (for च निर्ययौ).

21 $V_1$ reads 21–22$^{b}$ after 24$^{ab}$. —$^{a}$) Ś Ñ$_2$ $V_2$ $B_{2-4}$ $D_{8.12}$ $M_6$ बलसंपन्ना; Ñ$_1$ $V_{1.3}$ $D_{1.2.4.5.9}$ चक्र($V_3$ $D_{1.4}$ क्रम)युक्तेन; $D_3$ क्रमयोगेन; $T_{3.4}$ चतुरंगेण; $M_{2.4.8.10}$ °गुप्तेन; Cm.g.k.t as in text (for शक्रयुक्तेव). $B_1$ सु सेनाबलसंपन्नः. —$^{b}$) Ś Ñ $V_1$ $D_{1.3-5.8.9.12}$ महती; $V_3$ $D_2$ सुमहत्; $B_{1.2.4}$ $M_6$ साकेतान्($B_{2.4}$ °ता); $B_3$ सत्कृता; Cg as in text (for नगरान्). $T_{1.2}$ $G_3$ $M_3$ प्रययाव्; Cg as in text (for निर्य°). $T_4$ तथा; $G_1$ यथा; $M_7$ तदा (for अथ). Ñ$_1$ $V_{1.3}$ $D_{1-5.9}$ $M_6$ प्रययौ($V_3$ °जगौ) तदा (for निर्ययावथ). —$M_1$ om. 21$^{c}$–25$^{b}$. —$^{c}$) Ś Ñ V B $D_{1-5.8.9.12}$ $T_{3.4}$ $M_6$ रामेण (for राघव-). Ś $B_1$ $D_1$ [अ]नुगतं (for °गता). Ñ$_1$ om.; $D_{1-4}$ पूर्वं; $D_{6.7}$ नित्यं (for दूरं). —$^{d}$) $B_1$ दुराधर्षं. Ś Ñ V B D T $G_3$ $M_{3.6}$ सुरैरपि; $M_7$ * * सुरैः (for सुरासुरैः).

22 $M_1$ om. 22 (cf. v.l. 21). $V_1$ reads 21–22$^{b}$ after 24$^{ab}$. —$^{a}$) Ś $D_{8.12}$ मांसाशनानि; $V_{1.3}$ $D_{1-5.9}$ $T_{1.2}$ $G_3$ $M_{3.9}$ मांसादानि च (for °शीनि च). Ñ$_1$ क्रव्यादाश्च पिशाचाश्च; $D_{6.7.10.11}$ $T_{3.4}$ $G_{1.2}$ $M_{5.7.8.10}$ मांसाशि($T_4$ °दि)नश्च ये सत्त्वा. —$^{b}$) Ñ$_1$ $V_3$ च (for सु-). Ñ$_2$ $V_2$ B सुबहूनि च($B_{1.2}$ °न्यपि); $V_1$ $D_{2.9}$ सुमहान्त्यपि; $M_7$ सुसमाहिताः. —$^{c}$) $D_{6.7.10.11}$ $T_{3.4}$ हि; $M_2$ om. (subm.) (for च). Ś Ñ V $B_{1.3}$ $D_{1-5.8.9.12}$ अनुगच्छंति; $B_{2.4}$ अन्वगच्छंत; $G_2$ $M_{4.7.9.10}$ अनुप्रजग्मुर्. $V_3$ काकुत्स्थं (for भरतं). —$^{d}$) Ś Ñ$_1$ $V_{1.3}$ $D_{2.8.9.12}$ पिपासंतो ह्य($V_3$ °च्य)सृग्बहु; Ñ$_2$ $V_2$ B $M_6$ रुधिरं तु($M_6$ °राणां) पिपासवः; $D_{1.4}$ पिपासू सृग्बहूनि च (sic); $D_{3.5}$ पिपासून्यसृगुत्तमं.

23 $M_1$ om. 23 (cf. v.l. 21). $T_3$ $M_4$ om. (hapl.?) 23–25$^{b}$. —$^{a}$) $M_5$ भूतप्रहाश्. Ñ$_2$ $V_2$ $B_{1.2}$ सु- (for च). $T_{1.2}$ $G_3$ $M_3$ व —$^{b}$) $T_{1.2}$ $M_8$ मांसभक्ष्याश्च($M_8$ °क्ताः). $T_4$ -मांसास्थि- (for सु-). Ś $D_{3.12}$ रुधिराणि पिपासवः. —$^{c}$) $T_4$ -मांसास्थि- (for °नि). Ś $D_{8.12}$ गंधर्वांस्तान्समासाद्य. —$^{d}$) Ś Ñ V B $D_{1-5.8.9.12}$ महाबलाः(Ñ$_2$ $V_2$ B $D_5$ °स्वनाः; $V_1$ $D_3$ °मनाः; $D_{1.4}$ °शनाः); $T_4$ समाययुः; $M_6$ महारणे; $M_{10}$ समंततः (for सहस्रशः).

सिंहव्याघ्रसृगालानां खेचराणां च पक्षिणाम् ।
बहूनि वै सहस्राणि सेनाया ययुरग्रतः ॥ २४

अध्यर्धमासमुषिता पथि सेना निरामया ।
हृष्टपुष्टजनाकीर्णा केकयं समुपागमत् ॥ २५

G. 7. 107. 27
B. 7. 100. 25
L. 7. 100. 26

इति श्रीरामायणे उत्तरकाण्डे नवतितमः सर्गः ॥ ९० ॥

24 T3 M1.4 om. 24 (cf. v.l. 21 and 23). —a) Ś Ñ1 V1.3 D1–5.8.9 -स्रृगालानां; Ñ2 V2 B -मृगाश्चैव; D6.7.10.11 T4 G2 -वराहाणां (for -सृगालानां). —b) Ñ2 V2 B1.3.4 खेचराश्चैव पक्षिणः; B2 पक्षिणः खेचरा अपि. —After 24ab, V1 reads 21–22b. —c) Ś Ñ1 V1.3 D1–5.8.9.12 T4 M6 सुबहूनि; Ñ2 V2 B बहुसत्त्व- (for बहूनि वै). —D11 reads from इ up to d in marg. —d) D7 सेनायां; M7.9 सेनया; Cm.g.k.t as in text (for सेनाया). Ś Ñ V B D1–5.8.9.12 T4 सेनाग्रे (V1 °यां) सं(Ñ2 V2 B1 °ग्रेण; B2.3 °ग्रे च; D2.9 °ग्रेषु)प्रतस्थिरे; D6(m. also) सेनाग्रं संप्रतस्थिरे.

25 T3 M1.4 om. 25ab (for M1, cf. v.l. 21 and for the rest, 23). —a) Ś D8.12 अस्वरयं; D1.3.4 अध्यर्धं (for अध्यर्ध-). G3 उषिताः. Ñ2 V2 B अर्धमासमुषित्वा सा(Ñ2 °त्वा तु; V2 B1 °त्वासौ). —b) M7 युधि (for पथि). D2.9 सेना पथि (by transp.). D5 निराशया; G3 निरामयाः. —c) B2 D2.3 G3 M2.10 -जनाकीर्णान्(B2 °र्णं; G3 °र्णाः). —d) Ś Ñ V B2.3 D2.5.8.12 M3 कैकेयान्; B1.4 D1.3.4.9 T3.4 M10 के(D1.3.4.9 कै)कयान्; D3 M5 केकेयं; D7 G2 M4.6.7.9 कैकेयं; Cg.k.t केकयं (as in text). Ñ1 V1.3 B1 D1.3–7 T3.4 M5 समुपाविशत्; D2.9 सुप्रवेशयत्; G3 समुपागमन्; L (ed.) समुपाद्रवत्. —After 25, M7 ins.:

1394* अहंयुभिस्तप्तसुवर्णनेत्रै-
मृगेन्द्रनादैः सितवक्त्रदंष्ट्रैः ।
तदाक्षपादैः पृथुशैलदन्नै-
श्रकम्पिताङ्गा धरणी बभूव ।

Colophon. —*Sarga name*: Ś1 भरतनिर्यापणं; Ś2.3 B1.2 D8 भरतनिर्याणं; Ñ V3 B3 D3.12 सेनानिर्याणो(B3 D3 °णं); V1 सेनानिर्गमनं; V2 B4 भरतप्रयाणो(B4 °णं); D1.2.4.5.9 भ(D2 श्रीभ)रतसेनानिर्याणो(D2.9 °णं). —*Sarga no.* (figures, words or both): Ś Ñ1 V2.3 D2.4.8.12 om., Ñ2 105; V1 79; B1 D9 104; B2 D1 91; B3 T3 106; B4 T4 108; D3 M6 96; D6.7.10.11 T1.2 G M1–5.7.9.10 100; M8 99. —After colophon, T4 concludes with श्रीरामार्पणमस्तु। श्रीरामाय नमो नमः।; G M1.2.5.8 with श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

# ९१

G. 7.108.1
B. 7.101.1
L. 7.103.1

श्रुत्वा सेनापतिं प्राप्तं भरतं केकयाधिपः ।
युधाजिद्गार्ग्यसहितं परां प्रीतिमुपागमत् ॥ १
स निर्ययौ जनौघेन महता केकयाधिपः ।
त्वरमाणोऽभिचक्राम गन्धर्वान्देवरूपिणः ॥ २
भरतश्च युधाजिच्च समेतौ लघुविक्रमौ ।
गन्धर्वनगरं प्राप्तौ सबलौ सपदानुगौ ॥ ३
श्रुत्वा तु भरतं प्राप्तं गन्धर्वास्ते समागताः ।
योद्धुकामा महावीर्या विनदन्तः समन्ततः ॥ ४
ततः समभवद्युद्धं तुमुलं लोमहर्षणम् ।
सप्तरात्रं महाभीमं न चान्यतरयोर्जयः ॥ ५
ततो रामानुजः क्रुद्धः कालस्यास्त्रं सुदारुणम् ।
संवर्तं नाम भरतो गन्धर्वेष्वभ्ययोजयत् ॥ ६

## 91

$D_{12}$ begins with श्रीगुरवे नमः.

1 $^a$) $B_3$ सेनामभि-; $D_{2.9}$ °धिपं; $G_2$ Ck °पतिः; Cg.t as in text (for सेनापतिं). —$^b$) $\tilde{N}_2$ $V_2$ $B_{1-3}$ $M_6$ के($M_6$ कै)कयीसुतं; $D_{1-5.7.9.12}$ $G_2$ $M_7$ कैक($D_3$ °के[unmetric]) याधिपः.—After $1^{ab}$, $V_2$ reads $2^{cd}$ —$^{cd}$) $V_3$ $D_{6.7.10.11}$ $G_1$ गर्ग-; $D_{1.4}$ आर्य-; $T_2$ $M_1$ गार्ग-; $M_3$ गर्ग्य- (for गार्ग्य-). Ś $\tilde{N}_1$ V $B_3$ $D_{1-4.7.8.12}$ $T_{3.4}$ $G_1$ $M_7$ -सहितः. $B_4$ परं हर्षम् (for परां प्रीतिम्). $B_1$ G (ed.) युधाजित्परमां ($B_1$ सुधाजितः परां) प्रीतिमुपागमदनंतरं.

2 $^a$) $M_8$ वि- (for स). Ś $\tilde{N}_2$ $V_1$ B $D_{1-5.8.9.12}$ $T_4$ $M_6$ बल-; $V_2$ पुर- (for जन-). —$^b$) $V_3$ भरतं (for महता). $D_{1-4.7.9}$ $M_7$ कैकय-. —$V_2$ reads $2^{cd}$ after $1^{ab}$. —$^{cd}$) $Ś_2$ [ऽ]ति-; $\tilde{N}_1$ प्र-; $V_1$ $T_{3.4}$ [ऽ]थ (for ऽभि-). $D_{7.10.11}$ के($D_7$ कै)कयाधिपः; $T_{1.2}$ $G_{2.3}$ $M_{3.6}$ काम° (for देव-रूपिणः). $\tilde{N}_1$ $V_{1.3}$ $D_{1-6.9}$ $T_{3.4}$ गंधर्वनगरं प्रति; $M_3$ गंधर्वं कामरूपिणं (for $^d$). $\tilde{N}_2$ $V_2$ B भरतेन समागम्य मंत्रयामास चैव हि($B_4$ ह).

3 $^a$) $Ś_{2.3}$ [अ]युधाजिच्. $\tilde{N}_2$ $V_2$ B युधाजिद्भरतश्चैव. —$^b$) $B_4$ ततस्तौ; $D_5$ समौ तौ (for समेतौ). $T_{3.4}$ बहु-; Ct as in text (for लघु-). $Ś_2$ $D_{10.11}$ Ct -विक्रमैः. $\tilde{N}_2$ $V_2$ $B_{1-3}$ प्रतस्थाते महाबलौ. —$\tilde{N}_1$ om. $3^{cd}$. —$^c$) $V_{1.3}$ $D_{1-5.9}$ $T_{3.4}$ -विषयं (for -नगरं). $V_{1.3}$ $T_{3.4}$ तं तु; $D_{2.9}$ तत्र (for प्राप्तौ). $\tilde{N}_2$ $V_2$ B गतौ गंधर्वनगरं. —$^d$) $T_2$ समेतौ; Cm.g.k.t as in text (for सबलौ). $M_4$ सबलौघ- (for सबलौ स-). $V_2$ (before corr. as in text; after corr. marg.) $B_{2.3}$ च सह-; $M_3$ सबल- (for सपद-). $D_3$ सपदांतरौ; $D_{6.7}$ सह सैनिकैः $M_6$ सहवाहनौ; Cm.g.k.t as in text (for सपदानुगौ). $V_{1.3}$ $D_{2.9}$ $T_{3.4}$ गत्वा($V_3$ °तो) रामानुजस्तदा ($V_3$ $D_{2.9}$ °तः). —After 3, $T_{3.4}$ ins. :

1395* कुमारसहितो वीरो योद्धुकाम उपस्थितः ।

4 $M_6$ repeats $4^{ab}$ after l. 1 of 1397*. —$^a$) $Ś_1$ om. तु (subm.). $M_5$ श्रुत्वा तु नगरं प्राप्तौ. —$^b$) $\tilde{N}_1$ $T_{1.2}$ $G_1$(after corr. as in text)$_{.3}$ $M_{3.5.7}$ 'ते समाहिताः; $\tilde{N}_2$ $V_2$ (before corr. as in text; after corr. marg.) $B_{1-3}$ ते समंततः; $V_3$ समुपागताः; $M_1$ ते महा-बलाः (for ते समागताः). —$^c$) $B_2$ योद्धुकामं. $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.9}$ ततः($D_{2.9}$ स्थिताः) सर्वे; $\tilde{N}_2$ $V_2$ $B_{1.3}$ महानादं; $B_1$ °त्मानं (for महावीर्या). —$^d$) $Ś_1$ $D_{10.11}$ $M_9$ व्यनदंतः($D_{10.11}$ °स्ते); $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.9}$ गर्जंति स्म; $B_2$ न विदंतो; $B_1$ $D_6$ $T_{3.4}$ $G_1$ $M_{2.4}$ नि($M_{2.4}$ ह्य)नदंतः; $M_3$ व्यनदन्वै; $G_1$ निनदंतः; $M_1$ ह्यनंतं तं; $M_6$ विमदंतः; Cg.k.t quote व्यनदन् (for विनदन्तः). Ś $D_8$ समाहिताः; $\tilde{N}_2$ $V_2$ (before corr.; after corr. marg. as in text) $B_{1-3}$ महाबलाः; $D_{1-4.9}$ ततस्ततः; $M_{3.10}$ सहस्रशः (for समन्ततः). $T_{1.2}$ $G_3$ व्यनद($T_2$ °तं)न्सुसमाहिताः; $M_7$ निर्ययुर्युद्धकांक्षिणः. —After 4, $\tilde{N}_2$ $V_2$ $B_{1.3.4}$ ins. :

1396* सहसा ते ययुः सर्वे गन्धर्वाः कालचोदिताः ।
संनद्धा बद्धतूणीरा विविधायुधपाणयः ।

[l. 1) $B_{3.4}$ [ऽ]भ्ययुः (for ययुः). $B_1$ -देशिताः (for -चोदिताः). —(l. 2) $\tilde{N}_2$ $B_4$ बहु- (for बद्ध-).]

5 $^a$) $D_4$ om. ततः. —$^b$) $M_7$ अतुलं (for तुमुलं). $Ś_1$ T $G_{2.3}$ M रोम- (for लोम-). —$^{cd}$) Ś $D_{8.12}$ $M_6$ स्त्रवि(Ś तु त्रि)रतं; $\tilde{N}_1$ $V_1$ $D_{2.5.9}$ तदासीद्वै; $\tilde{N}_2$ $V_2$ B महाघोरं; $D_{1.3.4}$ तदा सिद्धैर्; $T_4$ अतीवासीन् (for महाभीमं). $G_3$ तथा (for न च). Ś $D_{8.12}$ [अ]न्येतरयोर् (for [अ]न्य°). $G_1$ $M_4$ जयं. $\tilde{N}_2$ $V_2$ B न चाभूद्विजयः क्वचित् (for $^d$). $V_3$ स तदा युध्यतो वालीन्न जयो न पराजयः (sic). —After 5, Ś $D_{8.12}$ read $8^{ab}$; while $V_3$ $D_{6.7.10.11}$ S ins. :

1397* खड्गशक्तिधनुर्ग्राहा नद्यः शोणितसंस्रवाः ।
नृकलेवरवाहिन्यः प्रवृत्ताः सर्वतो दिशम् ।

[(l. 1) $G_2$ -ग्राह-; Cg.k.t as above (for -ग्राहा). $D_7$ K (ed.) शौणित-. $M_9$ ** *णित- (for नद्यः शोणित-). $D_7$ $T_{2.4}$ $M_{3.8}$ Cm -संभ्र($D_7$ °भ)वाः (for -संस्रवाः). —After l. 1, $M_6$ repeats $4^{ab}$.]

6 $^b$) $V_3$ कालपाशं; $D_5$ कालशस्त्रं. Ś $D_{8.12}$ तु (for सु-). $\tilde{N}_1$ $V_3$ संवर्तनं नाम —$^c$) $D_{1.2.10}$ सवर्तं (for संवर्तं). Ś $D_{8.12}$ [अ]रि तदा($V_3$ °तो). —$^d$) $M_6$ गंधर्वेभ्यो. Ś $D_{8.12}$ प्रयुक्तवान् ($D_{12}$ [अ]प्य) योजयत्; $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.9}$ $T_{3.4}$ प्रयुक्तवान्; $\tilde{N}_2$ $V_2$ $B_{1.2.4}$ न्ययोजयत्; $D_{6.7.10.11}$ $T_1$ $M_{3.5.9}$ [अ]भ्य-चोदयत्; $M_{6.8}$ ह्ययोजयत्.

ते बद्धाः कालपाशेन संवर्तेन विदारिताः ।
क्षणेनाभिहतास्तिस्रस्तत्र कोट्यो महात्मना ॥ ७
तं घातं घोरसंकाशं न स्मरन्ति दिवौकसः ।
निमेषान्तरमात्रेण तादृशानां महात्मनाम् ॥ ८
हतेषु तेषु वीरेषु भरतः कैकयीसुतः ।
निवेशयामास तदा समृद्धे द्वे पुरोत्तमे ।
तक्षं तक्षशिलायां तु पुष्करं पुष्करावतौ ॥ ९
गन्धर्वदेशो रुचिरो गान्धारविषयश्च सः ।
वर्षैः पञ्चभिराकीर्णो विषयैर्नागरैस्तथा ॥ १०
धनरत्नौघसंपूर्णे काननैरुपशोभिते ।
अन्योन्यसंघर्षकृते स्पर्धया गुणविस्तरे ॥ ११ G. 7. 108. 12 B. 7. 101. 12 L. 7. 103. 11

7 $^{a}$) D$_{2.9}$ ते हताः; M$_5$ बद्धास्ते (by transp.). Ñ$_1$ V$_3$ D$_{2.9}$ -चक्रेण; B$_{1.3.4}$ -कल्पेन (for -पाशेन). —$^{b}$) Ñ$_2$ संवर्ताख्ये; B$_2$ सर्वैतास्त्र- (for संवर्तेन). V$_3$ महाबलाः; B$_2$ (before corr.; after corr. marg. as in text) -विमोहिताः (for विदारिताः). B$_{1.3.4}$ संवर्तास्त्रेण दारिताः. —$^{cd}$) Ś D$_{8.12}$ क्षणे तस्मिन्. V$_2$ B$_{1-3}$ निहतास्त्र्( V$_2$ °स्); B$_4$ [ए]व हतास् (for [अ]भि°). Ñ$_2$ V$_1$ B$_{1-3}$ चैव; D$_6$ ते तु; D$_{7.10.11}$ T$_{3.4}$ तेन (for तिस्रस्). Ñ$_1$ V$_3$ D$_{1-5.9}$ M$_6$ क्षणेन तस्मिन्वि( D$_5$ °त्र नि)हतास् (for $^{c}$). Ñ V$_{1.3}$ B D$_{1-7.9-11}$ T$_{3.4}$ M$_6$ तिस्रः (for तत्र). Ś V$_2$ B$_4$ D$_{8.12}$ T$_{1.2}$ G$_{1.3}$ M$_{3-5}$ transp. तिस्रस् and तत्र. Ś Ñ$_1$ V$_{1.3}$ B$_4$ D$_{1-5.8.9.12}$ M$_6$ महाबलाः; Ñ$_2$ V$_2$ B$_{1-3}$ महौजसः; D$_{6.7}$ T$_{1.2}$ G$_{1.3}$ M$_{1.2.4.5.7.8.10}$ महात्मनां( M$_1$ °नः).

8 D$_{1.4}$ T$_2$ om. 8. Ś D$_{8.12}$ read 8$^{ab}$ after 5. —$^{a}$) Ś D$_{5.8.12}$ घोरं; Ñ$_1$ V$_{1.3}$ वधं; G$_1$ यांतं (for घातं). D$_{2.3.9}$ ते घोरा; M$_5$ यद्घातं; M$_9$ om. (for तं घातं). D$_2$ -संकाशा. Ñ$_2$ V$_2$ B$_{1-3}$ एवं घोरं हि ( Ñ$_2$ V$_2$ तु ) समरं( B$_2$ मानुष्यं ); B$_4$ ते तथा समरं घोरं; D$_{6.7.10.11}$ T$_{3.4}$ तद्युद्धं तादृशं घोरं. —$^{b}$) D$_9$ G$_3$ [अ]स्मरंत; T$_4$ G$_4$ M$_{8.9}$ स्मरंते; Cm.g.t स्मरन्ति (as in text). Ñ$_1$ V$_{1.3}$ D$_{2.3.5.9}$ दिवि स्थि( D$_5$ स्मृ )ताः (for दिवौकसः). —$^{c}$) D$_{2.3.5}$ निमिष-. —$^{d}$) D$_{3.5}$ महाक्षयं( D$_5$ °यः); G$_1$ महौजसां (for महात्मनाम्). Ñ$_2$ V$_2$ B यः कृतो भरतेन ह; T$_{3.4}$ भरतेन निपातिताः.

9 $^{a}$) M$_1$ गतेषु (for ह°). D$_{1.4}$ भरत:; D$_{6.7.10.11}$ G$_2$ M$_{3.4}$ सर्वेषु (for वीरेषु). Ñ$_2$ V$_2$ B$_{1-3}$ G (ed.) ह( B$_3$ श्रु )त्वा चैव हि तान्सर्वा( G [ed.] °न्वीरा )न्. —$^{b}$) D$_{1.4}$ स वीरः (for भरतः). V$_1$ D$_{2.9-11}$ T$_1$ केकयी-; D$_{3.6}$ कैकेयी- (unmetric). Ñ$_2$ V$_2$ B$_{1-3}$ गंधर्वान्भरतस्तथा( Ñ$_2$ B$_3$ °दा ). —$^{c}$) T$_2$ विवेशयामास. Ś Ñ$_1$ V$_{2.3}$ B$_{3.4}$ D$_{1-5.8.9.12}$ ततः (for तदा). —$^{d}$) G$_1$ स्वसुतौ (for समृद्धे). V$_3$ ते (for द्वे). Ñ$_1$ V$_1$ B$_4$ पुरे ततः( Ñ$_1$ °दा ) (for पुरोत्तमे). M$_6$ पुर्यौ रामसुतावुभौ. —$^{e}$) V$_2$ तक्षस्; B$_1$ तत्र (for तक्षं). Ñ$_2$ V$_2$ B G (ed.) -शि( B$_2$ -श; G [ed.] शी )लां चैव; M$_3$ -शलायां तु. —$^{f}$) Ñ$_2$ V$_2$ B$_{2-4}$ D$_{6.7.10.11}$ T$_{1.2}$ G$_{2.3}$ M$_{3-6}$ Cm.t पुष्कलं ( Ñ$_2$ V$_2$ B$_{2-4}$ °रः ); B$_1$ पुरीं वै (for पुष्करं). Ñ$_2$ V$_2$ B D$_{6.7.10.11}$ T$_{1.2.4}$ G$_{2.3}$ M$_{1-6.8-10}$ Cm.t पुष्कला( V$_2$ B$_{2.3}$ M$_{4.8.10}$ °रा )व( M$_1$ °य )ते( Ñ$_2$ V$_2$ B °तीं; D$_{6.7}$ T$_{1.2.4}$ M$_{2.9}$ °तौ ). —For 9$^{ef}$, Ś Ñ$_1$ V$_{1.3}$ D$_{1-5.8.9.12}$ subst. :

1398* पुष्करं पुष्करावत्यां तक्षं तक्षशिलां प्रति ।

[ D$_9$ पुष्करावर्तें. D$_3$ पुष्कलं पुष्कलावत्यां (for the prior half). V$_3$ तथा (for प्रति). Ś D$_{8.12}$ -शिलापतिं. ]

10 $^{a}$) Ś Ñ V B$_{1.3.4}$ D T$_{1.3.4}$ Cm.t -देशे; B$_2$ -देश-; G$_2$ M$_{5.7-10}$ -देशौ. Ś Ñ V$_{1.2}$ B T$_{3.4}$ M$_{5.8-10}$ रुचिरे ( M$_{5.8-10}$ °रौ ); V$_3$ M$_7$ विषये( M$_7$ °यौ ); G$_2$ विपुलौ (for रुचिरो). —$^{b}$) Ś D$_{2.9.12}$ G$_1$ गं( D$_2$ गां )धर्व°; Ñ$_1$ B$_4$ D$_{1.4-7.9-11}$ T$_4$ M$_5$ °विषये; D$_{1.4.8}$ गंधार°. M$_5$ °विषयी; Cm.t cite गान्धारदेशे (for गान्धारविषयश्च). Ś V$_{1.3}$ D$_{2.3.8.9.12}$ T$_{3.4}$ [ऽ]भवत्; Ñ$_1$ V$_2$ (before corr.) D$_{1.4.5}$ च तत्; G$_2$ च यः (for च सः). Ñ$_2$ V$_2$ (after corr. marg.) B$_{1-3}$ गंधर्वैरुपशोभिते. —D$_{6.7.10.11}$ T$_{1.2}$ om. 10$^{cd}$. —$^{c}$) V वर्षै (for वर्षैः). Ñ$_2$ V B$_{2.4}$ आकीर्णे; B$_1$ T$_2$ आकीर्णैर्; G$_{2.3}$ M$_{3.5.7.9.10}$ आकीर्णौ (for आकीर्णो). Ś D$_{8.12}$ अपूर्णैः पंचभिर्वर्षैर्. —$^{d}$) Ś Ñ$_2$ V$_2$ B$_4$ D$_8$ नगरे; M$_{6.7}$ विषयो; M$_8$ विषये; M$_{9.10}$ विषयौ (for विषयैर्). T$_2$ G$_{2.3}$ M$_{2-4.7.8}$ नगरैस्; M$_6$ नगरे (for नागरैस्). Ś Ñ$_2$ V$_2$ (aftre corr. marg. as in B$_1$) B$_4$ D$_8$ ते( Ñ$_2$ द्वे ) बभूवतुः; B$_{1.3}$ विपुलैश्च ह; B$_2$ विपुलैः शुभैः (for नागरैस्तथा). Ñ$_1$ V$_{1.3}$ D$_{1-5.9}$ T$_{3.4}$ गंधर्व( D$_{2.9}$ नृगस्य )विषयस्तदा ( Ñ$_1$ D$_5$ °ये तदा; D$_{2.9}$ T$_4$ °यस्तथा ); D$_{12}$ नागर ते बभूव ह (sic).

11 $^{a}$) Ś D$_{8.12}$ M$_{6.8}$ -[ओ]घरत्न- (by transp.); B$_2$ -पुत्रौघ-; M$_{7.10}$ -रत्नैश्च (for -रत्नौघ-). Ñ$_1$ V D$_{1-4.6.7.9-11}$ T$_3$ -संकीर्णे( Ñ$_1$ °र्णैः; D$_{1-4.9}$ T$_2$ र्णः ); B$_2$ T$_4$ M$_{5.7}$ -संपूर्णैः( T$_4$ °र्णः ); B$_3$ -संपन्ने; D$_5$ -संयुक्तः (for -संपूर्णे). —$^{b}$) M$_5$ सज्जनैर् (for काननैर्). Ñ$_1$ V$_{1.3}$ D$_{1-5.9}$ T$_{3.4}$ M$_{5.7}$ -शोभितः( Ñ$_1$ M$_{5.7}$ °तैः ). —Ñ$_1$ om. 11$^{cd}$. —$^{c}$) Ñ$_2$ B$_{2.3}$ D$_{11}$ T$_1$ G$_{1.3}$ M$_3$ अन्योन्यं; Cm.t अन्योन्य- (as in text). Ś V B$_{1.3}$ D$_{8.12}$ संहर्ष-; M$_{1.4}$ °घात- (for संघर्ष-). V$_1$ D$_{1.3-5.12}$ T$_{3.4}$ M$_7$ -कृतः( D$_{3.5}$ T$_4$ M$_7$ °त- ) (for -कृते). Ñ$_2$ B$_2$ चक्रतुस्तौ तु; D$_{2.9}$ -हर्षसंयु( D$_9$ °यु )क्तः; T$_{1.2}$ G$_3$ M$_3$ संघर्षयति; Cm.t as in text (for -संघर्षकृते). —$^{d}$) Ś D$_{8.12}$ भूति-; B$_2$ [अ]द्भुत-; M$_7$ बहु- (for गुण-). D$_{7.10.11}$ T$_2$ G$_{2.3}$ M$_{1-3.5}$ Cm.t -विस्तरैः. Ñ$_2$ [अ]द्भुतविक्रमौ; V$_{1.3}$ D$_{1-5.9}$ [अ]द्भुतविस्तरः( V$_1$ °दर्शनः; V$_3$ °विस्तरैः ); T$_{3.4}$ [अ]भूत्स( T$_4$ °त्सु )विस्तरः; M$_4$ विस्तरैरुभे (for गुणविस्तरे). V$_2$ (before corr.; after corr. marg. as in B$_3$) स्पर्धास्ते नगरीस्तव (sic); B$_{1.3.4}$ स्पर्धास्तवन( B$_1$ °र्धाचत्वर )विस्तरे ( B$_4$ °स्मृते ); M$_6$ स्पर्धमाने परस्परं.

G. 7. 108. 13
B. 7. 101. 13
L. 7. 103. 12

उभे सुरुचिरप्रख्ये व्यवहारैरकल्मषैः ।
उद्यानयानौघवृते सुविभक्तान्तरापणे ॥ १२
उभे पुरवरे रम्ये विस्तरैरुपशोभिते ।
गृहमुख्यैः सुरुचिरैर्विमानैः समवर्णिभिः ॥ १३
शोभिते शोभनीयैश्च देवायतनविस्तरैः ।
निवेश्य पञ्चभिर्वर्षैर्भरतो राघवानुजः ।
पुनरायान्महाबाहुरयोध्यां कैकयीसुतः ॥ १४
सोऽभिवाद्य महात्मानं साक्षाद्धर्ममिवापरम् ।
राघवं भरतः श्रीमान्ब्रह्माणमिव वासवः ॥ १५
शशंस च यथा वृत्तं गन्धर्ववधमुत्तमम् ।
निवेशनं च देशस्य श्रुत्वा प्रीतोऽस्य राघवः ॥ १६

इति श्रीरामायणे उत्तरकाण्डे एकनवतितमः सर्गः ॥ ९१ ॥

12 Ś1 om. $12^{ab}$. —$^{a}$) B1 G1 M4 शुभे; Cg as in text ( for उभे ). M6 -प्रख्यैर्. Ś2.3 D8.12 पुत्र( D12 °र )योस्ते व्यवर्धातां; Ñ1 V1.3 D2.9 T3.4 तयोस्तु पुर्यों( V3 ***** [ lacuna ] )रुभयोर्; B4 पुरे तयार्थे वर्धेतां (sic); D1.3–5 तयोस्तु पुण्यकथयोर्. —D6 om. $12^{b}$–$13^{c}$. —$^{b}$) Ś2.3 L ( ed. ) उप( Ś2.3 ** )हारैर् ( for व्यवहारैर् ). Ś2.3 Ñ V2 B D1.3–5.7.8.10–12 T1.2 G1.3 M3.6 Cm.g.k.t अकिल्बिषैः ( for अकल्मषैः ). —$^{c}$) D1.4 उत्थान- ( for उद्यान- ). Ś D8.12 -वन-; V2 ( before corr. as in Ś; after corr. marg ) -[ आ ]राम-; B2 -पान- ( for -यान- ). Ś V2 D7.8.10–12 -संपूर्णे; Ñ1 V1.3 D1–5.9 T3.4 -[ आ ]वसथैः; Ñ2 B -संपन्ने ( for -[ ओ ]घवृते ). —$^{d}$) Ñ1 V1.3 D1–5.9 T3.4 प्र-; V2 सं- ( for सु- ). Ñ1 V1.3 D1–5.9 T3.4 -[ आ ]पणैः.

13 D6 om. $13^{abc}$ ( cf. v.l. 12 ). G1 reads $13^{ab}$ after 1399*. —$^{a}$) Ś1.2 D8.12 ते वै; M2 शुभे ( for उभे ). Ś Ñ V B D1–5.8.9.12 पुरोत्तमे; M6 पुर्युत्तरे; M8 सुरुचिरे ( for पुरवरे ). D1.4 तत्र ( for रम्ये ). —$^{b}$) V3 काननैर्; G2 M1.2.4.8 Cg.k विस्तारैर्; Cm.t as in text ( for विस्तरैर् ). Ś Ñ V1 B1–3 D1–5.8.9.12 काननोत्तम-( B2 °र- ); B4 सरोभिः परि- ( for विस्तरैरुप- ). Ś2.3 Ñ1 V1 B2 D1–5.8.9.12 -भूषिते ( for -शोभिते ). —M1 om. ( hapl. ? ) $13^{c}$–$14^{b}$. —$^{c}$) B2 मृग-; D4 गृहे ( for गृह- ). V3 -मुखैश्; D5 -पूगैश् ( for -मुख्यैः ). Ñ1 V1.3 D1–5.9 च ( for सु- ). D12 -रचितैर् ( for -रुचिरैर् ). —$^{d}$) Ś Ñ1 V B4 D1–9.12 T G M3.5.7.8 Ck विमान-( D4 °नं ); M2.4.10 समान-; Cg.t as in text ( for विमानैः ). Ñ2 B1–3 घन-; V2 D5 -शत-; B4 G1 M2.4.10 -वर-; D2 -गत-; M6 उप- ( for सम- ). Ś D8.12 -दर्शनैः; Ñ2 B -संनिभैः; V2 -संकुलैः; D5 G2 M5 -वर्तिभिः; M6 -संस्थितैः ( for -वर्णिभिः ). D6.7.10.11 T3.4 Cg वसु( D10.11 Cg वहु )-भिर्वृते ( for समवर्णिभिः ).

14 Ñ2 V2 B D12 M1 om. $14^{ab}$ ( for M1 cf. v.l. 13 ). —$^{a}$) Ś V1.3 D8 M7.9 शोभितैः( M7 °ता ); Ñ1 शोभने; D2 शोभेते; D3 शोभते ( for शोभिते ). D9 शोभमानैश्. —$^{b}$) Ñ1 V1.3 D1–5.9 देवतायतनोप( Ñ1 V1 °त्त )मैः; —After $14^{ab}$, D6.7.10.11 T G M2–4.8–10 ins.:

1399* सालैस्तालैः समाकीर्णे चम्पकैरुपशोभिते ।

[ M4.8.10 तालैः सालैस् ( by transp. ). G1 तमालैश्च; G3 M1.3 समाकीर्णैश्( M8 °र्ण- ) ( for °कीर्णे ). D6.7.10.11 T3.4 तालै( T1 °डै )स्तमालैस्तिलकैर् ( for the prior half ). —T1 damaged from the post. half up to $14^{d}$. D6.7.10.11 वकुलैर्; T3.4 पनसैर् ( for चम्पकैर् ). G1 चोप- ( for उप- ). D6 -शोभितं. ]

—Thereafter, G1 reads $13^{ab}$.

—Ñ1 V1 D2 om. $14^{c}$–16. —$^{c}$) G2 निवेद्य ( for निवेश्य ). V3 विप्रैर् ( for वर्षैर् ). —M1 om. $14^{e}$–$16^{b}$. —$^{f}$) Ś1 Ñ1 V2.3 B D8.10.11 केकयी-; D3.6 कैकेयी- ( unmetric ). B1 केकयात्मजः; T1.2 G2.3 M3 लक्ष्मणाग्रजः.

15 Ñ1 V1 D2 M1 om. 15 ( cf. v.l. 14 ). —$^{a}$) T1.2 G3 सोभिगम्य; M3 सोभ्यगच्छन्; M7 अभिवाद्य ( for सोऽभिवाद्य ). —$^{b}$) B2 स्थितं; M2.4–9 [ अ ]व्ययं ( for [ अ ]परम् ). —$^{c}$) B2 तथैव; B4 तं चैव ( for राघवं ). B1 परमः ( for भरतः ). —$^{d}$) D1 ब्राह्मणम्; D8 उल्बणम् ( for ब्रह्माणम् ).

16 Ś1 Ñ1 V1 D2 om. 16; M1 om. $16^{ab}$ ( for all except Ś1, cf. v.l. 14 ). —$^{a}$) T4 om. शशंस. D4 वद् ( for च ). Ś2 om.; Ś3 Ñ2 V2 B D1.4.5.8.9.12 ततोऽशं( Ś1 *** )सद्; M6 प्रशशंस; Ct as in text ( for शशंस च ). —$^{b}$) D1.3–5 आदितः; M2.4 आत्मना ( for उत्तमम् ) D9 गंधर्वाणां वधं तदा. —D9 om. $16^{cd}$. —$^{c}$) V3 स निवेशं; B1 विवे° ( for निवेशनं ). D5 प्र- ( for च ). D3 M6 देवस्य; D8.12 संदेश्यं; Ct as in text ( for देशस्य ). —$^{d}$) Ś2.3 प्रीतिं ( for प्रीतो ). Ś2.3 V2 B2.4 D8.12 M6.7 स; Ñ2 V3 B1.3 T4 G1 च ( for ऽस्य ). M3 हितोभवत् ( for ऽस्य राघवः ). D1.3–5 तयोश्च पुरमुख्ययोः.

Colophon D5 om. colophon : —*Sarga name* : Ś B1 D8.12 गंधर्ववधः; Ñ1 D1–4.9 गां( D3 गं )धारनिवेशः; Ñ2 V2 B2.4 गंधर्वविषयनिवेशः( Ñ2 °शनं; B2 °वासः ); V1.3 गंधर्वनिवेशः( V3 °शनः ); B3 विषयनिवेशं. —*Sarga no.* ( figures, words or both ): Ś Ñ1 V2.3 D2.4.8.12 om.; Ñ2 106; V1 80; B1 D9 105; B2 D1 92; B3 T3 107; B4 T4 109; D3 M6 97; D6.7.10.11 T1.2 G3 M10 101; G1.2 M1–5.7–9 100. —After colophon, T4 concludes with श्रीरामार्पणमस्तु । श्रीरामाय नमो नमः; G M1.2.5.8.10 with श्रीरामाय नमः.

# ९२

तच्छ्रुत्वा हर्षमापेदे राघवो भ्रातृभिः सह ।
वाक्यं चाद्भुतसंकाशं भ्रातॄन्प्रोवाच राघवः ॥ १
इमौ कुमारौ सौमित्रे तव धर्मविशारदौ ।
अङ्गदश्चन्द्रकेतुश्च राज्यार्हौ दृढधन्विनौ ॥ २
इमौ राज्येऽभिषेक्ष्यामि देशः साधु विधीयताम् ।
रमणीयो ह्यसंबाधो रमेतां यत्र धन्विनौ ॥ ३
न राज्ञां यत्र पीडा स्यान्नाश्रमाणां विनाशनम् ।
स देशो दृश्यतां सौम्य नापराध्यामहे यथा ॥ ४
तथोक्तवति रामे तु भरतः प्रत्युवाच ह ।
अयं कारापथो देशः सुरमण्यो निरामयः ॥ ५
निवेश्यतां तत्र पुरमङ्गदस्य महात्मनः ।
चन्द्रकेतोश्च रुचिरं चन्द्रकान्तं निरामयम् ॥ ६
तद्वाक्यं भरतेनोक्तं प्रतिजग्राह राघवः ।
तं च कृत्वा वशे देशमङ्गदस्य न्यवेशयत् ॥ ७ G. 7. 109. 7 B. 7. 102. 7 L. 7. 104. 7

## 92

1 $^{b}$) Ñ V B4 D1–5.9 T3.4 G1 भ्रातृभिः( Ñ1 V3 D1–5.9 °भ्यां ) सह राघवः. ❀ Cv : तच्छ्रुत्वादौ द्वित्वे बहुवचनप्रयोगः एकव्यतिरिक्तं बह्विति दर्शनात् ; Ct : भ्रातृभिरिति बहुवचनं द्वित्वे आर्षम्. ❀ —M4 transp. $1^{cd}$ and $2^{ab}$. —$^{c}$) Ñ2 B2 M8 om. च. V3 lacuna from सं up to तॄ in $^{d}$. Ñ1 वाक्यमद्भुततमं रामः ( hypm. ); V1 वाक्यं चैवाद्भुतं रामः; D2.9 वाक्यमत्यद्भुततमं. —$^{d}$) Ś Ñ2 V2 ( after corr. m. ) B1–3 D8.12 रामो भ्रातॄनुवाच ह; Ñ1 V1 प्रोवाच सर्वभ्रातृषु; V2 ( before corr. ) B4 रामो( V2 भूयो ) भ्रातॄनभाषत; V3 * * प्रोवाच धर्मवित् ; D1.3–5 उवाच भरतानुजं; D2.9 M3 रामः( M3 तदा ) प्रोवाच भ्रातृषु( M3 लक्ष्मणं ). ❀ Cm : भ्रातॄन्प्रोवाच । भ्रातॄनिति बहुवचनं द्वितीयाद्विवचनार्थे. ❀

2 M6 om. $2^{ab}$. M4 transp. $1^{cd}$ and $2^{ab}$.—$^{a}$) D2.9 उभौ; D8 यौ * ( for इमौ ). —$^{b}$) Ś D8.12 नृप-; Ñ1 नित्य-; V3 न च; B2 सर्व-; D9 श्रुतौ ( for तव ). —$^{c}$) D12 चित्रकेतुश्. V3 अंगदश्चंद्रकश्चैव; B1 G2 अंगदं चंद्रकेतुं च. —$^{d}$) Ñ1 V1.3 D1–5.9 समर्थौ; V2 D10.11 राज्यार्थे. Ś2 damaged for दृढ. D2.9–11 T3.4 G1.2 M3.6 Ck.t -विक्रमौ ( for -धन्विनौ ).

3 M5 om. ( hapl. ) 3.—$^{a}$) Ñ2 V1.2 B उभौ ( for इमौ ). M7 [ ऽ ]भिषेक्ष्यामो; Cm.k.t as in text ( for ऽभिषेक्ष्यामि ). —$^{b}$) Ñ2 देशं; V1 देवाः ( for देशः ). V2 B देशं साधु निरूपय. ❀ Cm.t : विधीयतां निरीक्ष्यताम्. ❀ —$^{c}$) M8 हि संवासो ( for ह्यसंबाधो ). Ś Ñ1 V1.3 D1–5.8.9.12 M6 L ( ed. ) रम्य( M6 पुण्य )श्च वन( D1.4 M6 न च; L [ ed. ] जन )संबाधो( Ñ1 V1 D2.9 °चारो; V3 °वासो ); Ñ2 V2 B रमणीयमसंबाधं. —$^{d}$) Ś D8.12 वसेतां ( for रमेतां ). V2 वने ( unmetric ); V3 सत्र ( for यत्र ). Ś V3 D1.4.8.12 M6 धार्मिकौ; Ñ1 V1 D2.3.5.9 धर्मिणौ; Ñ2 B1 संस्थितौ; V2 B2–4 सुस्थितौ ( for धन्विनौ ).

4 $^{a}$) V3 lacuna for न राज्ञां यत्र. B2 बाधा ( for पीडा ). M9 यत्र राज्ञां यत्र * *. —$^{b}$) M1 विनाशतः. Ñ V B D1–5.9 T3.4 न चैवाश्रमवासिनां. —$^{c}$) T1.2 M3 प्रदेशो. D3 दिश्यतां ( for दृश्यतां ). M3 सौम्यो; M5 वीर. —$^{d}$) M1 damaged for महे यथा. B3 D2.9 M9 वयं; Ct as in text ( for यथा ).

5 $^{b}$) V2 तं ( for ह ). —$^{c}$) D1.4 अथ ( for अयं ). Ś Ñ1 V1 D1–5.8.9.12 राम ( Ś2 lacuna; Ś3 कारु )वनोद्देशो; Ñ2 B1.3.4 D10.11 M6.7 कारुपथो देशो; V3 T4 कामपथो देशः; B2 चारुपथो देशो; D6.7 T1.2 G M3.5 तारा( D6 °रु ) पथो दे( T1.2 G3 °थोद्दे )शो; T3 राम महादेशो; M1.2.4.10 कारा( M4 काक; M10 कौर )पथोद्देशः; G ( ed. ) कारपथोद्देशो; L ( ed. ) कारपथो देशो. ❀ Cm : कारपथाख्यः। तारापथ इति वा पाठः । पाश्चात्यदेशविशेषः ।; Cg : कारुपथः कारुपथाख्यः पाश्चात्यदेशविशेषः ।; Ck : कारपथः कारपथाख्यः पाश्चात्यदेशविशेषः ।; Ct : कारुपथस्तदाख्यः पाश्चात्योदीच्यदेशविशेषः. ❀ —$^{d}$) Ś Ñ2 V2 B D6–8.10–12 T1.3.4 M3.6 रमणीयो; Ñ1 V1 D1–5.9 सुखो ( Ñ1 D2.9 °ख )रम्यो; V3 सुसुरम्यो; G1 सुरम्यश्च ( for सुरमण्यो ). M8 सुरमण्यं निरामयं.

6 B3 om. 6-$7^{b}$. —$^{a}$) D1.4 निर्माप्यतां ( for निवेश्यतां ). Ñ1 D3.5 अत्र; V3 अस्य; D2 पुत्र ( for तत्र ). M6 अंगदस्य ( for तत्र पुरम् ). Ś D8.12 अंगदस्य पुरीं वीर; Ñ2 V2 B1.2.4 ( all except B2, with hiatus ) निवेशय पुरीं वीर( B2 °राम् ). —$^{b}$) Ś D8.12 निवेशय; Ñ1 V1.3 D1.2.4.9 ह्यं( V3 त्वं )गदस्य; M6 पुरं तत्र; Cm.g.k.t as in text ( for अङ्गदस्य ). —$^{c}$) Ñ1 V B2.4 D2.9 तु; D10.11 T G3 M3 सु- ( for च ). Ś D8.12 अपि पुरं; Ñ2 तु रुचिरां; D6.7 सुरुचिरश्. —$^{d}$) Ś Ñ1 V B1.2.4 D2.3.8.9.12 चंद्रवक्त्रं; Ñ2 °कांतां; D5 चंद्रवक्रं ( for चन्द्रकान्तं ). Ñ2 V2 B1.2.4 मनोरमं( Ñ2 °मां ) ( for निरामयम् ). D6.7 T3 M6 चंद्रकांतो निरामयः.

7 B3 om. $7^{ab}$ ( cf. v.l. 6 ). —$^{a}$) D9 यद्वाक्यं ( for तद्वाक्यं ). —$^{c}$) Cm quote यथोद्देशं. Ś Ñ1 V1.3 D1–5.8.9.12 तच्चकार य( V1 [ with hiatus ] अ )थोद्देशं ( D1.4 °दिष्टं ); Ñ2 B L ( ed. ) तं चकार पथं दे( L [ ed. ] °थोद्दे )शं; M6 तं च तारापथे देशे. —$^{d}$) Ś D8.12 G1 M6( with hiatus ). 8.10 अंगदं च( G1 M6 सं-; M3.10 स ); Cm.t as in text ( for अङ्गदस्य ). Ñ1 V1.3 D1–3.9 निवेशनं( V3 [ also ]

G. 7. 109. 8
B. 7. 102. 8
L. 7. 104. 8

अङ्गदीया पुरी रम्या अङ्गदस्य निवेशिता ।
रमणीया सुगुप्ता च रामेणाक्लिष्टकर्मणा ॥ ८
चन्द्रकेतोस्तु मल्लस्य मल्लभूम्यां निवेशिता ।
चन्द्रकान्तेति विख्याता दिव्या स्वर्गपुरी यथा ॥ ९
ततो रामः परां प्रीतिं भरतो लक्ष्मणस्तथा ।
ययुर्युधि दुराधर्षा अभिषेकं च चक्रिरे ॥ १०
अभिषिच्य कुमारौ द्वौ प्रस्थाप्य सबलानुगौ ।
अङ्गदं पश्चिमां भूमिं चन्द्रकेतुमुदङ्मुखम् ॥ ११
अङ्गदं चापि सौमित्रिर्लक्ष्मणोऽनुजगाम ह ।
चन्द्रकेतोस्तु भरतः पार्ष्णिग्राहो बभूव ह ॥ १२
लक्ष्मणस्त्वङ्गदीयायां संवत्सरमथोषितः ।
पुत्रे स्थिते दुराधर्षे अयोध्यां पुनरागमत् ॥ १३
भरतोऽपि तथैवोष्य संवत्सरमथाधिकम् ।
अयोध्यां पुनरागम्य रामपादावुपागमत् ॥ १४

D9 °ने ); B1 M1 निवेशयत् ; G2 न्यवेदयत्; Ct as in text ( for न्यवेशयत् ).

8 D2.9 om. $8^{ab}$. Note hiatus between $^{a}$ and $^{b}$. —$^{a}$) Ś D8.12 सांगदाख्या; V3 M6 सांग( V3 lacuna )दीया; B2 M10 अंगदीय-. D5 पुरा धन्या ( for पुरी रम्या ). —M7 repeats $^{b}$ in place of $^{d}$. —$^{b}$) Ś V2 D8.12 अं( V2 त्वं )-गदाय; Ñ1 B3.4 D6.7.10.11 [ अ ]प्यंगदस्य; V1 D1.3–5 T3.4 M5.6 ह्यंग°; G1 °देन; G2 M10 ह्यंगदेन; G ( ed. ) त्वंग°; Ct as in text ( for अङ्गदस्य ). V3 त्वंगदं वाक्यमब्रवीत् ( sic ). —After $8^{ab}$, V3 reads erroneously sargas 97–100. —$^{c}$) M6 सा ( for च ). D2.9 रमणीये वनोद्देशे.

9 $^{a}$) Ś D12 T2 सुमल्लस्य; Ñ1 V1.3 D1–5.9 T3.4 तु( D1.2.9 T3.4 च ) बालस्य; Ñ2 B कुमारस्य; D6.7.10.11 G1 M1.2.4.5.7–9 च म°; D8 समस्तस्य; Cv.m.g.k.t quote मल्लस्य ( for तु मल्लस्य ). V2 चंद्रकेतुकुमारस्य. —$^{b}$) Ś D8.12 पुरी भूमौ; Ñ2 मंदभूमिरु; B मल्लभूमिं; D1.4 वनभूमौ; D3.5 चंद्रभूमौ; M5 °भूमौ; G ( ed. ) °भूमिरु; Cm.g.k.t as in text ( for मल्लभूम्यां ). Ñ1 V1 D2.9 T3 सं( Ñ1 स )प्रस्थाप्य महाबलः( D9 °लं ); V3 T4 ददौ तस्य महात्मनः( T4 °बलः ). —$^{c}$) Ñ2 V1.3 B1–3 D1–5.9 T3 चंद्रवक्त्रेति( B1 °वक्त्रा च ) ( for चन्द्रकान्तेति ). T3.4 विख्यातां. Ś Ñ1 D8.12 ( all with hiatus) चंद्रवक्त्रा इति ख्याता. —$^{d}$) T3.4 दिव्यां. V3 T3.4 -पुरीमिव ( for -पुरी यथा ).

10 $^{b}$) Ś Ñ V B D1–5.8.9.12 M6 भरतश्च स( V1 °तः सह )लक्ष्मणः; D6.7.10.11 T3.4 लक्ष्मणो भरतस्तथा. —$^{c}$) Ñ2 ततो; D1.3–5 ययौ; D2.9 यस्तु ( for ययुर् ). V2 D2.5–7.9–11 Ct युद्धे; Cm as in text ( for युधि ). V3 प्रययुः सु-. Ś Ñ2 V2 B1.2 D1.5.8.12 M10 दुराधर्षौ; D2–4 ( all with hiatus ) °धर्षो; D9 ( with hiatus ) °धर्षे; Cm.t as in text ( for °धर्षा ). —$^{d}$) V1.3 M6 ह्यभिषेकं; Cm.t as in text ( for अभिषेकं ). Ñ1 V1 D2.9 च( D9 अ ) कारयन्( D2.9 °यत् ) ( for च चक्रिरे ). Ś Ñ2 V2 B D1.3–5.8.12 कुमारौ चाभ्य-षेचयन्( Ñ2 D1.3–5 °यत् ).

11 $^{a}$) Ś D8 M2.4.5 तौ; Ñ2 V1.2 B4 तु; V3 यत् ; B1–3 च; D5 स ( for द्वौ ). —$^{b}$) Ś D8.12 च महामनाः; Ñ1 D2.9 सु( Ñ1 च )महाबलः; V2 B T3.4 M6 च( B2 T3.4 सु ) महाबलौ; D6.7.10.11 सुसमाहितौ; M10 सबलानुगः; Cm as in text ( for °नुगौ ). Ñ2 V3 प्रस्थापयदरिंदमः; V1 D1.3–5 प्रस्थापयद्राति( D3.5 °थारि )हा; K ( ed. ) प्रस्थापयति राघवः. —$^{c}$) Ś D2.8.9.12 अंगदः ( for अङ्गदं ). Ñ1 भूतां ( for भूमिं ). —$^{d}$) Ś2 damaged; Ñ2 V2 B त( B1.3 अ )थोत्तरां; D1.3.6 M6 उदङ्मुखीं( D6 °खां ); G1 M8.10 उदक्कुवं; Cm as in text ( for उदङ्मुखम् ). Ś1.3 D2.8.9.12 चंद्रकेतुरुदङ्मुखः ( D2.9 °खीं ).

12 $^{a}$) Ñ2 V1.3 B D2.9 अंगदस्य च( B4 तु ); D1.3–5 °दं तत्र ( for °दं चापि ). Ñ1 सौमित्रं; G2 सौमित्रिं. —$^{b}$) G1 हा; M6 सः ( for ह ). —$^{c}$) M6 चंद्रकेतुं. B1.3 च; M8 ह ( for तु ). D9 महतः ( for भरतः ). —$^{d}$) Ñ1 V1 D2.9 पृष्ठ-ग्राहो. G3 हा; M6 सः ( for ह ). Ś Ñ2 V2 B D1.3–5.8.11 पार्ष्णि( D1.3–5 पृष्ठं ) जग्राह वीर्यवान्.

13 $^{a}$) V2 च ( for तु ). Ś D12 [ अं ]गदाख्या( Ś1 damaged from ख्या up to थो in $^{b}$ )यां; D9 [ अं ]गदीयां तु. —$^{b}$) Ś1 ( with hiatus )संवत्सरे. D1.5 अथाधिकं ( for अथोषितः ). —D1 om. ( hapl. see var. ) $13^{c}$–$14^{b}$. Note hiatus between $^{c}$ and $^{d}$. —$^{c}$) B3 दुराधर्षाम्. Ñ2 सुतं तमेव *** ( illeg. ). —$^{d}$) Ś Ñ1 V1 D2–5.9.12 T3.4 G1 ह्य( Ś D12 सो )योध्यां. D4 M6 आगतः; M1 आविशत् ( for आगमत् ).

14 D1 om. $14^{ab}$ (cf. v.l. 13). —$^{a}$) Ñ2 V2 B तथोषित्वा; V1 ततश्चैव; D2.9 तथा सौम्यः; D3 तथोपोष्य; D4 तथाप्युष्य ( for तथैवोष्य ). —$^{b}$) Ś2 damaged for वत्सर. Ś Ñ2 V2 B D8.12 उदारधीः; Ñ1 V1.3 D10.11 T1.3 G1 M3.6 अतोधिकं; D3.7 G3 M10 अथो° ( for अथाधिकम् ). —$^{c}$) M6 साकेतं ( for अयोध्यां ). B2.3 D1 आगत्य. Ś D8.12 सं( Ś1.2 सा )केतं चाभि( D8 ** )संगम्य. —M7 om. ( hapl. ) $14^{d}$–$15^{a}$. —$^{d}$) Ś3 D8.12 रामपादान्; B4 रामपादम्. Ś Ñ2 V2 B D8.12 उपासितुं; Ñ1 अभ्यवादयत् ( hypm. ); V3 न्यवेष्य तत्; D10.11 उपास्त सः; V1 D3.5 T4 न्यषेवत; D9 न्यषेवतः; D1.4 निषेव्रते; D2 भ्यषेचयत् ( metri causa ); T3 न्यवर्तत; M6 उपस्पृशत् ( for उपागमत् ).

उभौ सौमित्रिभरतौ रामपादावनुव्रतौ ।
कालं गतमपि स्नेहान्न जज्ञातेऽतिधार्मिकौ ॥ १५
एवं वर्षसहस्राणि दश तेषां ययुस्तदा ।
धर्मे प्रयतमानानां पौरकार्येषु नित्यदा ॥ १६

विहृत्य कालं परिपूर्णमानसाः
श्रिया वृता धर्मपथे परे स्थिताः ।
त्रयः समिद्धा इव दीप्ततेजसो
हुताग्नयः साधु महाध्वरे त्रयः ॥ १७

G. 7. 109. 17
B. 7. 102. 17
L. 7. 104. 17

इति श्रीरामायणे उत्तरकाण्डे द्विनवतितमः सर्गः ॥ ९२ ॥

15 M7 om. 15a (cf. v.l. 14). —ab) Ñ1 V1 D1.3.4 भरतसौमित्री. Ś D1.2.4.8 उपाश्रितौ; V1 damaged; T3.4 अनुव्रजौ; G1 °द्रुतौ (for अनुव्रतौ). Ñ1 नित्यं राममुपासतुः; Ñ2 V2 B रामपादासिवं( B3.4 [ also ] °नं )दितौ (for b). V3 D2.9 नित्यं( V3 उभौ ) राममुपासंतौ तदा भरतलक्ष्मणौ. —c) Ś D8.12 M6.7 अति-; M4 इति (for अपि). —d) Ś D8.12 जानीतो( Ś3 °ते ); D6.7 T3.4 जानाते (for जज्ञाते). T1.2 G3 M3 सुधार्मिकौ. Ñ1 V1.3 D1–5.9 धर्मिणौ नाव( V3 न व्य; D1.4 नान्व )बुध्यतां; Ñ2 B धार्मिकौ नावगच्छतां. ❀ Cg.k.t : न जज्ञाते जानातेर्लिट् द्विवचनम् । नावगतवन्तौ । संधिः छान्दसः. ❀

16 a) B1.3 दश (for वर्ष-). —b) Ś2 damaged for दश. V3 चैकं; D1.3.4 [ ए ]कं च (for तेषां). D12 T2 M3.5 तथा (for तदा). Ñ1 V1 D9 दशैकं च महात्मनां; Ñ2 B दश वर्षशतानि च; V3 दशैव विन्यचक्रमुः; D2 ययुस्तेषां दश तदा; D5 दशैकं च तदा ययुः. —After 16ab, Ñ2 V2 B ins. :

1400* ययुस्तेषां सुमनसां यशः प्रथयतां भुवि ।;

while M5 ins. after 16ab :

1401* प्राणिनो रक्षमाणानां दश वर्षशतानि च ।

—c) D7 प्रयतमानायां. —d) Ś Ñ2 V2 B D8.12 चैव हि; D6 सर्वदा; T2–4 G1.3 M6 नित्यशः (for नित्यदा).

17 a) B2 विकृत्य. D2 काले; D7 कामं (for कालं). —b) Ñ1 [ अ ]न्विता; D3 कृता; D5 घृता (for वृता). Ñ1 V1 धर्मपरे; D10.11 °पुरे; Ck quotes धर्मपुरं (for धर्मपथे). Ñ1 V1 M6 प्रतिष्ठिताः; Ñ2 V2 (before corr. as in B2) B1 D10.11 च संस्थिताः; B2 T4 परिस्थिताः; K (ed.) सुसंस्थिताः (for परे स्थिताः). Ś D8.12 धर्मपथि स्थिताः परे; V3 D1.3–5 T1.2 M3.5 धर्मपरे पथि( T2 °थे ) स्थिताः; B3.4 धर्मपथेषु संस्थिताः; D2.9 धर्मपराः स्थिताः पथि. —c) Ś D8.12 ज्वलत्-; Ñ1 V1 D1–5.9 भृशं; V2 B2.4 तपः-; M10 बभुः (for त्रयः). Ñ V2 B D2.3.5.9 समृद्धा. B4 शुभ- (for इव). D1 दिष्ट- (for दीप्त-). Ś3 D7.10.11 T3.4 समिद्धाहुति°. Ñ2 B1.3 -तेजसा. V3 भृशं समृद्धाः स्वगुणेन संवृताः. —d) B (ed.) साधु-. T2 स्थिताः; M6 यथा (for त्रयः). Ś D8.12 मता यथाध्व( Ś1.2 °थांव )रे. Ñ1 V1 D1–5.9 त्रयोग्नयः साधु हुता महर्षिभिः( Ñ1 V1 °हाध्वरे ); Ñ2 V2 B हुताग्नि( B2 °श ) कल्पाः प्रबभुर्नरोत्तमाः( V2 °रेंद्राः; B1 °राधिपाः ); V3 स्वसंवृतास्ते सुसुदुःमहर्षिभिः (sic); M3 महाध्वरे साधु हुताग्नयोग्नयः.

Colophon. —*Sarga name* : Ś V1 D8.12 पुत्राभिषेकः; Ñ1 लक्ष्मणभरतपुत्राभिषेकः; Ñ2 लक्ष्मणभरतसमागमः; V2 B4 लक्ष्मणपुत्रयोरभिषेकः; B1 कुमाराणां पुरनिवेशः; B2 भरतपुत्राभिषेकः; B3 लक्ष्मणसुतयोरभिषेकः; D1.3–5 लक्ष्मणपुत्राभिषेकः; D2.9 पुत्राभिषेचनः. —*Sarga no.* (figures, words or both) : Ś Ñ1 V2.3 B4 D2.8.12 om.; Ñ2 107; V1 81; B1 D9 106; B2 D1.4 93; B3 T3 108; D3 M8 98; D5 91; D6.7.10.11 T1.2 G M1–5.7.9.10 102; T4 110; M8 101. —After colophon, T4 concludes with श्रीरामार्पणमस्तु । श्रीरामाय नमो नमः; G1 M1.2.5.8 with श्रीरामाय नमः; M10 with श्रीरामचन्द्राय नमः.

# ९३

G. 7. 110. 1
B. 7. 103. 1
L. 7. 105. 1 कस्यचित्त्वथ कालस्य रामे धर्मपथे स्थिते ।
कालस्तापसरूपेण राजद्वारमुपागमत् ॥ १
सोऽब्रवील्लक्ष्मणं वाक्यं धृतिमन्तं यशस्विनम् ।
मां निवेदय रामाय संप्राप्तं कार्यगौरवात् ॥ २
दूतो ह्यतिबलस्याहं महर्षेरमितौजसः ।
रामं दिदृक्षुरायातः कार्येण हि महाबल ॥ ३
तस्य तद्वचनं श्रुत्वा सौमित्रिस्त्वरयान्वितः ।
न्यवेदयत रामाय तापसस्य विवक्षितम् ॥ ४
जयस्व राजन्धर्मेण उभौ लोकौ महाद्युते ।
दूतस्त्वां द्रष्टुमायातस्तपस्वी भास्करप्रभः ॥ ५
तद्वाक्यं लक्ष्मणेनोक्तं श्रुत्वा राम उवाच ह ।
प्रवेश्यतां मुनिस्तात महौजास्तस्य वाक्यधृक् ॥ ६

## 93

D12 begins with ॐ.

1 $^{a}$) Ñ1 V1.3 D1–5.9 ततः काले तु कस्मिंश्चित्( V3 गते तस्मिन् ). —$^{b}$) Ñ1 V1 D2.9 T3.4 रामे; D1.3–5 गते ( for रामे ). Ś D8.12 राज्य-; D9 धर्मे ( for धर्म- ). Ś Ñ V2.3 B1.3 D2.3.8.9.12 M6 -पथि; D6.7.10.11 M8 Ct -परे; Ck as in text ( for -पथे ). Ñ1 V1 D1–5.9 T3.4 स्थितं ( for स्थिते ). B4 रामे धर्मेष्ववस्थिते. —After 1$^{c}$, V3 reads 7.97.1$^{b}$–6$^{b}$, 7$^{c}$–8 and 9$^{c}$. —$^{d}$) Ś V1 D3.5.8.12 रामं द्रष्टुम्; D1.4 द्रष्टुं रामम् ( for राजद्वारम् ). V3 D2.9 T3.4 सहसा ( V3 रामं भो ) द्रष्टुमागतः.

2 D10 om.; B ( ed. ) reads 2 within brackets. —$^{a}$) B2 द्वास्थं ( for वाक्यं ). —$^{b}$) Ś Ñ1 V1.3 D2.8.12 द्युतिमंतं ( for धृति° ). V1.3 B1 D1–5.9 मन( B1 तप )स्विनं ( for यशस्विनम् ). —Ñ2 om. 2$^{c}$–3. —$^{cd}$) Ś D8.12 भो ( for मां ). Ñ1 V1.2( before corr.; after corr. marg. as in text ) D1–5.9 निवेदयस्व( V2 °य त्वं ); V3 निवेदयाशु; M10 संनिवेदय ( for मां निवेदय ). Ñ1 V2( before corr.; after corr. marg. as in text ).3 D1–5.9 प्राप्तं मां ( for संप्राप्तं ). T4 transp. रामाय and संप्राप्तं. D6.7 वाक्य- ( for कार्य- ). —After 2, V3 ins.:

1402* स गत्वा कथयामास ******** । ( lacuna )

3 Ñ2 om. 3 ( cf. v.l. 2 ). V3 om. $3^{ab}$. D2.9 repeat $3^{ab}$ after 4; D3 T3.4 repeat $3^{ab}$ after $5^{ab}$. —$^{a}$) B1 सुतो ( for दूतो ). D11 ( with hiatus ) अतिबलस्य; G3 M3 [ ऽ ]स्म्यति°. Ś3 [ अ ]थं; D2.3( both second time ).9( both times ) [ ए ]ष; T3.4 ( both second time ) [ अ ]यं ( for [ अ ]हं ). —$^{b}$) Ś Ñ1 V1 D1–5.8.9.12 T3.4 ( D2.3.9 T3.4 both times ) तस्य धीमतः; B4 अतितेजसः ( for अमितौजसः ). ❀ Cm : बलस्य महर्षेश्चतुर्मुखस्येत्यर्थः ।; Cg : महर्षेरिति । ब्रह्मण इत्यर्थः ।; Ck : अतिबलस्य महर्षेरिति जगन्महाप्राणरूपत्वाच्चतुर्वेदमुखत्वाच्च भगवान् ब्रह्मा तेन सामान्यतो विवक्षितः सत्यवचस्त्वाच्च ।; Ct : अतिबलस्य महर्षेः । जगत्प्राणरूपत्वाच्चतुर्वेदमुखत्वाच्च सत्यवचस्त्वाच्च ब्रह्मातिबलो महर्षिः. ❀ —$^{c}$) M10 रामं दिदृक्षयायातं. —$^{d}$) D6.7.10.11 M1.5.6.9 महाबलः. —For $3^{cd}$, Ś Ñ1 V B D1–5.8.9.12 T3.4 subst.:

1403* दिदृक्षुरागतो धीमांस्त्वरितं मां निवेदय ।

[ V2 B रामं ( for धीमांस् ). V3 D2.9.12 T3.4 त्वरितो. D1.4 मा. ]

4 $^{c}$) Ś1 G1 M6 निवेदयत; Ñ2 V B D1–5.9 T3.4 आचचक्षेथ( Ñ2 V2 B4 °चक्षे स; V1.3 B1–3 °चक्षे च ) ( for न्यवेदयत ). —$^{d}$) Ś D8.12 तापसागमनं शुभं; Ñ1 V1 D1–4 T3.4 स ( V1 सु )संप्राप्तं तपोधनं; Ñ2 V2.3 B D5.9 G ( ed. ) संप्राप्तं तं( G [ ed. ] तु ) तपोधनं; D10.11 तापसं तं समागतं. —After 4, D2.9 repeat $3^{ab}$.

5 D2.9 om. $5^{ab}$. Note hiatus between $^{a}$ and $^{b}$. V3 reads $5^{ab}$ ( after corr. ) in marg. —$^{ab}$) Ś D8.12 प्राप्स्व-; Ñ1 यजस्व; M6 जयेति; Cm.t as in text ( for जयस्व ). Ś Ñ2 V1.3 B3.4 D1.3–8.10–12 T1.3.4 G1.2 M2.4.7.9 राज- ( D8 °ज्य- ); Ñ1 B2 G3 M3.10 राम ( for राजन् ). D11 -मार्गेण ( for धर्मेण ). Ś V1 D1.4.8.12 G3 M10 द्युभौ; Ñ1 शुभौ; Cm.t as in text ( for उभौ ). Ś V1.3 D3.5.9 M6 महायशाः; Ñ1 D1.4.12 T3.4 °यशः; Ñ2 V2 B T1 G1 M3.5 °मते; T2 °महत् ; M7.9 °मुने: ( for °द्युते ). V1 ( before corr. ) जय राम त्वतो लोके धर्मेण सुमहामते. —After $5^{ab}$, D3 T3.4 repeat $3^{ab}$. —$^{c}$) B1 तवत्त ( for दूतस् ). D7 प्रष्टुम् ( for द्रष्टुम् ). Ś Ñ1 V1.3 B4 D1.4.5.8.12 दू( V3 त )तस्त्वद्दर्शनाकांक्षी; D2.3.9 T3.4 आगतो दर्शनाकांक्षी. —$^{d}$) D6 तापसः; D7.10.11 तपस्वा ( for तपस्वी ). Ś Ñ1 V1.3 D1–5.8.9.12 T3.4 द्वारि तिष्ठति; V2 D6.7 भास्करोपमः ( for भास्करप्रभः ). B4 मुनिर्द्वारिमुपागतः.

6 $^{a}$) Ś1 D7.10.11 लक्ष्मणोक्तं वै( D7 तु ); M7 लक्ष्मणप्रोक्तं. —$^{b}$) M5 ह्युवाच ( for उवाच ). Ś B2 D8.12 श्रुत्वा रामोऽब्रवीदिदं. —For $6^{ab}$, Ñ V B1.3.4 D1–5.9 T3.4 subst.:

1404* इति ब्रुवाणं सौमित्रिं राघवः प्रत्युवाच ह ।

[ D1.4 एवं ( for इति ). Ñ1 रामः स; V1 तं रामः ( for राघवः ). B1 काकुत्स्थं सौमित्रि ( for सौमित्रिं राघवः ). D1.3–5 प्रत्य( D5 °ति )भाषत ( for प्रत्युवाच ह ). ]

सौमित्रिस्तु तथेत्युक्त्वा प्रावेशयत तं मुनिम् ।
ज्वलन्तमिव तेजोभिः प्रदहन्तमिवांशुभिः ॥ ७
सोऽभिगम्य रघुश्रेष्ठं दीप्यमानं स्वतेजसा ।
ऋषिर्मधुरया वाचा वर्धस्वेत्याह राघवम् ॥ ८
तस्मै रामो महातेजाः पूजामर्घ्यपुरोगमाम् ।
ददौ कुशलमव्यग्रं प्रष्टुं चैवोपचक्रमे ॥ ९
पृष्टश्च कुशलं तेन रामेण वदतां वरः ।
आसने काञ्चने दिव्ये निषसाद महायशाः ॥ १०
तमुवाच ततो रामः स्वागतं ते महामुने ।
प्रापयस्व च वाक्यानि यतो दूतस्त्वमागतः ॥ ११
चोदितो राजसिंहेन मुनिर्वाक्यमुदीरयत् ।
द्वंद्वमेतत्प्रवक्तव्यं न च चक्षुर्हतं वचः ॥ १२

G. 7. 110. 12
B. 7. 103. 11
L. 7. 105. 12

—c) Ś3 प्रवर्त्यतां; B4 D3 प्रविश्यतां ( for प्रवेश्यतां ). —D11 om. ( hapl. ) from त up to स्त in d. D3 T1.2 G3 M3 तावन् ( for तात ). Ś D8.12 मुनेर्दूतो; M10 नरश्रेष्ठ ( for मुनिस्तात ). —d) T1 M3.7 वाक्यधृत्. Ś B2 D8.12 मनुजः ( B2 महौजाः ) सत्यवाग्भव; Ñ V1.2 ( before corr. as in B1; after corr. marg. ).3 B3.4 D1–5.9 T3.4 सत्कृतः शीघ्र ( B4 पूर्व )मेव च ( Ñ2 V2 B4 D5 हि; V3 तु; B3 ह ); B1 क्षिप्रं सत्कृत एव हि. ❀ Cv : तस्य वाक्यधृक् मुनेर्वाक्यधृक् ।; Cm : तस्य मुनेर्वाक्यधृक्वाक्यधारणदूत इत्यर्थः ।; Cg : तस्य वाक्यस्य धृदिति, रामवाक्यधारीति सौमित्रिविशेषणम् ।; Ck : तस्य वाक्यधृगिति रामस्याज्ञाधारीत्यर्थः ।; Ct : तस्य वाक्यधृक् । यस्य दूतस्तस्याज्ञाधारीत्यर्थः. ❀

7 V2 reads $7^{ab}$ ( after corr. ) in marg. —a) D9 च ( for तु ). V2 ( before corr. ) B4 स सौमित्रस्. —b) G1.2 M4.7.10 प्रवेशयत ( for प्रा° ). Ś Ñ2 B2 D8.12 मुनिं प्रावेशयत्स तं ( Ñ2 °यत्ततः; B2 °य *तं ); V2 ( after corr.; before corr. as in B4 ) B1.3 M6 तं मुनिं संप्रवेशयत् ( metri causa ); B4 प्रावेशयदृषिं ततः. —d) Ś B2 D8.12 M6 प्रह्व ( M6 °भा )सतं महाबलं. ❀ Cm.t : तेजोभिरंशुभिरित्येते पदे शरीरकान्तिकिरणप्रतिपादके इति ( Cm °दनपरे । अतो ) न पुनरुक्तिः. ❀ —For $7^{cd}$, Ñ V B1.3.4 D1–5.9 T3.4 subst. :

1405* तेजसा तपसा चैव ज्वलन्तमिव पावकम् ।

[ D9 चैव तेजंतं ( sic ) ( for तपसा चैव ). ]

8 a) Ñ1 V1 [ ऽ ]भ्यागत्य; V3 [ ऽ ]भिवाद्य; B1.3 [ ऽ ]धिगम्य. Ś B2 D8.12 नृपश्रेष्ठं; Ñ V1.3 B1.3.4 D1–5.9 T4 M5.6 नर° ( for रघु° ). —b) Ñ2 V2 B1.3.4 राघवं रघुनंदनं; G2 ज्वलंतमिव तेजसा. —d) T1.2 G3 M3 वर्धय ( for वर्धस्व ). Ñ2 V2 B1.3.4 ततो ( Ñ2 वचो )ब्रवीत्; V1 च राघ° ( for [ आ ]ह राघवम् ). M10 आशीर्वादमुदैरयत्.

9 a) Ś Ñ V B D1–5.8.9.12 T4 M6 महाबाहुः ( for °तेजाः ). —b) Ñ1 V1 D2 धूप°; B1 °मर्घ्यं; D1.3–5 °मर्घ-; D9 मधुपर्क-; T3.4 पाद्य° ( for पूजामर्घ्य- ). Ñ1 V1.3 D1–5.9 T3 -पुरःसरं ( V3 D1.4 °रां ); Ñ2 V2 ( before corr.; after corr. marg. as in text ) B1.3 T4 -पुरस्कृतां ( B1 T4 °तं ). Ś D8.12 पूजामध्ये पुरोगतः; M6 पूजामादाय तापसीं. —V2 reads $9^{c}$ ( after corr. ) in marg. —cd) Ś D8.12 ऋषिं; Ñ2 कृत्वा; G1 ततः ( for ददौ ). G1 आप्रष्टुं; M8.10 अव्यग्रः ( for अव्यग्रं ). Ñ1 V1.2 ( before corr. ).3 B4 D1–5.9 प्रयोज्य ( V2 B4 निवेद्य; D2 आवेद्य ) कुशलं पश्चात् ( for c ). D12 द्रष्टुम्; G1 व्यग्रं ( for प्रष्टुं ). Ś Ñ1 V1 D1–5.8.9.12 T1.2 G2.3 M3 एव; Ñ2 V3 B1.3.4 सम्- ( for चैव ). T3.4 दत्त्वोपवेश्य कुशलं पश्चात्प्रष्टुं प्रचक्रमे.

10 a) Ś Ñ2 D8.12 तु; G1 सु- ( for च ). Ñ1 V1.3 B4 D1–5.9 T3.4 रामोपि ( for पृष्टश्च ). —b) Ś Ñ2 V2 B1–3 D8.12 रामोपि; V3 पृष्टवान् ( for रामेण ). Ñ1 V1 B4 D1–5.9 T3.4 पृष्टः पृ( V1 ह )ष्टेन ( D2 °ति ) धीमता. —c) Ñ2 B4 शुभ्रे; B1.3 चित्रे ( for दिव्ये ). —For $10^{cd}$, Ñ1 V1.3 D1–5.9 T3.4 subst. :

1406* निषण्णश्चासने मुख्ये स्वास्तीर्णे चन्द्रसंनिभे ।

[ V1 तु ( for च ). D1.4 विस्तीर्णे. V3 D1.3–5 -वर्चसि ( for -संनिभे ). ]

11 a) B4 राजा ( for रामः ). —b) Ś B2 D6–8.10–12 महामते ( D6 °तेः ); D2.9 °बल; D4 °मुनेः ( for °मुने ). V3 स्वागतेति महामुनिं ( sic ). —c) Ñ2 V1.2 B1.3.4 मंत्रयस्व; D7.10.11 T1–3 G M2.3.8 प्रापयास्य; M6 प्रयच्छस्व ( for प्रापयस्व ). V3 पाद्यानि; D3 वक्ष्यामि ( for वाक्यानि ). —d) M5 येन ( for यतो ). Ś Ñ V1.2 B D1–5.8.9.12 T3.4 यदर्थं ( D9 °र्थे ) त्वमिहागतः; V3 ब्रूहि त्वं किमिहागतः.

12 a) Ś D1.2.4.5.8.9.12 नोदितो; V1 देशितो; V2 ( after corr. marg. ) प्रेषितो ( for चोदितो ). G3 रामवाक्येन ( for राजसिंहेन ). V3 इति ते रामचंद्रस्य. —b) V1 B4 अ( V1 य )थाब्रवीत्; B2 D8 T1.3 M2–4.6.10 उदैरयत्; D6.7.10.11 M5 अभाषत; T4 उवाच ह ( for उदीरयत् ). Ñ2 V2 B1.3 तं मुनिर्वाक्यमब्रवीत्. —c) V1 गुह्यमेतत्; B2 तत्त्वमेतत्; D6.7.10.11 T3.4 द्वंद्वे ह्येतत्; D9 द्वंद्व एतत् ( for द्वंद्वमेतत् ). B1 तु वक्तव्यं; B2 D2.9 प्रयोक्तव्यं; B4 मम वचो ( for प्रवक्तव्यं ). V2 ( before corr. as in text; after corr. marg. ) तस्मै रामाय महाबाहो ( hypm. ); V3 अतिगोप्यं नरश्रेष्ठ. —d) T2 चैव तु; M10 विचक्षुर् ( for च चक्षुर्- ). T1 M3 -गतं; T2 M8–10 -हितं ( for -हतं ). Ś Ñ1 B2 D1–5.8.9.12 अनालक्ष्य( D2 मनोलक्ष )गतं ( Ñ1 °क्षकरं ) वचः; Ñ2 V1.2 B1.3.4 M5 न ( V2 * ) श्रोतव्यं ( M5 वक्तव्यं ) हि ( V1 M5 च ) केनचित्; V3 नाख्यानायस्य कान्यचिद् ( corrupt ); D6.7.10.11 T3.4 हितं ( T3.4 इदं ) वै यद्यवेक्षसे ( D6.7 °सि ); G1 न चान्यात्रहितं वचः; G3 न च चुक्षुभितं वचः. ❀ Cm : द्वंद्वे हितमिति ।

G. 7. 110. 13
B. 7. 103. 12
L. 7. 105. 13

यः शृणोति निरीक्षेद्वा स वध्यस्तव राघव ।
भवेद्वै मुनिमुख्यस्य वचनं यद्यवेक्षसे ॥ १३
तथेति च प्रतिज्ञाय रामो लक्ष्मणमब्रवीत् ।
द्वारि तिष्ठ महाबाहो प्रतिहारं विसर्जय ॥ १४
स मे वध्यः खलु भवेत्कथां द्वंद्वसमीरिताम् ।
ऋषेर्मम च सौमित्रे पश्येद्वा शृणुयाच्च यः ॥ १५
ततो निक्षिप्य काकुत्स्थो लक्ष्मणं द्वारसंग्रहे ।
तमुवाच मुनिं वाक्यं कथयस्वेति राघवः ॥ १६
यत्ते मनीषितं वाक्यं येन वासि समाहितः ।
कथयस्व विशङ्कस्त्वं ममापि हृदि वर्तते ॥ १७

इति श्रीरामायणे उत्तरकाण्डे त्रिनवतितमः सर्गः ॥ ९३ ॥

---

देवानां हितं यद्यपेक्षसे यद्याकांक्षसे तदा द्वंद्व एकांते प्रवक्तव्यम् । देवगोप्यस्य गोपने देवानां हितं भवतीत्याशयः ।; Cg : द्वंद्वमेतदिति । "द्वंद्वं रहस्य" इत्यादि द्वंद्वशब्दस्य रहस्यार्थे द्विर्वचननिपातः । रहस्यमेतत्प्रवक्तव्यमित्यर्थः । द्वंद्वे हि तत्प्रवक्तव्यमिति च पाठः ।; Ck : द्वंद्वमेतदिति द्वंद्वं रहस्येत्यादिना द्विशब्दस्य रहस्यार्थे द्विर्वचननिपातः—रहस्यमेतत्प्रवक्तव्यमित्यर्थः ।; Ct : द्वंद्वे रहस्ये हितं वै यद्यवेक्षसे । देवानामिति शेषः । देवगोप्यगोपने हि देवानां हितं भवतीति भावः. ❀ —After 12, Ś $\tilde{N}_1$ $V_1$ $B_2$ $D_{1-5.8.9.12}$ $T_{3.4}$ ins. :

1407* नान्येन चैव श्रोतव्यं नाख्यातव्यं च कस्यचित् ।

[ $D_{1.4}$ तु ( for second च ). Ś $D_{8.12}$ द्रष्टव्यं नैव; $B_2$ नाभ्यातश्चैव ( sic ) ( for नाख्यातव्यं च ). ]

13 $^{a}$) Ś Ñ V $B_{2.3}$ $D_{2.3.5.8.9.12}$ $M_6$ शृणुयाद्यो ( $V_{2.3}$ $B_3$ $D_{2.9}$ $M_6$ °द्वा ); $B_1$ शृणु यो हि (sic); $D_{1.4}$ यश्च सद्यो ( for यः शृणोति ). $B_1$ त्वां ( for वा ). $D_{1.3.4}$ निरीक्षेत. $B_4$ यश्चैव शृणुयादेतत्. —$^{b}$) $V_2$ (*sup. lin.* also) तव पार्थिव; $D_{6.7.10.11}$ $T_{3.4}$ भविता तव ( for तव राघव ). $M_7$ स च वध्यस्तव प्रभो. —$^{c}$) Ś $D_8$ स त्वं हि; $\tilde{N}_1$ $D_{3.4}$ संधिं च; $\tilde{N}_2$ तस्य वै; $V_1$ सत्यं च; $V_2$ $B_{1.3}$ एतद्वै; $V_3$ संचित्य; $B_2$ ( after corr. marg.; before corr. संविदं ) महर्षेर्; $B_4$ भगवन्; $D_1$ त्वां च मां; $D_{2.9}$ संदिष्टं; $D_5$ श्रद्धेतुं ( sic ); $D_{6.7}$ $T_{3.4}$ रहो वै; $D_{12}$ स वि * ( lacuna ); $T_{1.2}$ $G_3$ भवेद्वा; $G_1$ भवान्वै ( for भवेद्वै ). $V_3$ -मुख्यश्च; $D_{1.4}$ -मुख्यं च ( for -मुख्यस्य ). —$^{d}$) $V_3$ मम वेक्षसे; $B_4$ चेदवेक्षसे; $G_{1.2}$ $M_{1.5.9.10}$ Cg यद्यपेक्षसे( $G_1$ °ते ); Cm.k.t as in text ( for यद्यवेक्षसे ).

14 $^{a}$) $B_1$ ततोपि; $M_3$ स तथा ( for तथेति ). Ś $B_2$ $D_{8.12}$ तत्; $M_3$ [ इ ]ति ( for च ). —$^{c}$) $D_1$ द्वारे. —$V_3$ lacuna from म up to 15$^{a}$. $B_4$ reads महाबाहो in marg. —$^{d}$) $\tilde{N}_2$ $B_{1.3.4}$ $D_{1.3.4.9.12}$ $M_5$ Ck प्रतीहारं; $D_{6.7}$ द्वास्थं शीघ्रं( $D_7$ सर्वं ); $T_{3.4}$ प्रतिहारान्; Cm.g.t as in text ( for प्रतिहारं ). $B_4$ $M_6$ विवर्जय; $D_{11}$ विसर्जनं ( sic ); Cm.g.k.t as in text ( for विसर्जय ). $V_1$ वचनं मे निबोधत.

15 $V_3$ lacuna for $^{a}$ (cf. v.l. 14). —$^{a}$) $G_1$ वै; Cm.k.t as in text ( for मे ). $\tilde{N}_1$ $B_2$ ( m. also ) $D_{1.4.5}$ $T_{3.4}$ वध्यस्तु खलु मे स स्याद्( $D_5$ $T_{3.4}$ सौम्य ); $\tilde{N}_2$ $V_{1.2}$ $B_{1.3.4}$ $D_{2.9}$ वध्यः स खलु मे( $D_{2.9}$ ते ) सौम्य. —$^{b}$) Ś $B_1$ ( before corr. ) $D_{8.12}$ श्रुत्वा द्वंद्व-; $D_{6.7.10.11}$ वाचं द्वंद्व-; $G_1$ कथा द्वंद्व-; Cm.g.k कथाद्वंद्वं ( for कथां द्वंद्व- ). Ś $B_2$ ( before corr. ) $D_{8.10-12}$ Cm.k.t समीरितं; $G_2$ -समीरिताः. $\tilde{N}_1$ $V_{1.3}$ $B_2$( m. also ).$_4$ $D_{1.2.4.5.9}$ $T_{3.4}$ यः कश्चि( $D_{2.9}$ यश्च य )च्छृणुयादिदं( $B_4$ °दिह; $T_{3.4}$ °दिमं ). ❀ Cg$p$ : वाचं द्वंद्वमिति च पाठः. ❀ —$^{c}$) $\tilde{N}_1$ [ ए ]व; $D_3$ om. ( subm. ) ( for च ). $\tilde{N}_1$ $V_{1.3}$ $D_{1.2.4.5.9}$ $T_{3.4}$ संवादं ( for सौमित्रे ). —$^{d}$) $B_1$ च; $D_3$ यः; $D_{12}$ मा ( for वा ). $M_{10}$ वचः ( for च यः ). $\tilde{N}_1$ $V_{1.3}$ $B_4$ $D_{1.2.4.5.9}$ $T_{3.4}$ यो निरीक्षेत वा नरः( $B_4$ वानरः; $D_5$ मानवः ). —For 15, $M_6$ subst. :

1408* महर्षेर्मम सौमित्रे द्वंद्वमेतत्समीरितम् ।
पश्येद्वा शृणुयाद्यो वा स वै वध्यो भवेदिति ।

16 $^{a}$) Ś Ñ V $B_{1-3}$ $D_{1-5.8.9.12}$ $T_{3.4}$ $M_8$ तथा; $B_4$ तदा ( for ततो ). $M_6$ संदिश्य ( for निक्षिप्य ). Ñ V $B_{1.3.4}$ $D_{1.2.4.5.9}$ सौमित्रिं( $D_9$ °त्रं ) ( for काकुत्स्थो ). —$^{b}$) $\tilde{N}_1$ $V_{1.2}$ $B_{1.2.4}$ $D_{10.11}$ $T_{1.2}$ $G_1$ $M_{2-5.8-10}$ द्वारि ( for द्वार- ). $D_{10.11}$ $M_{3.10}$ Cg.k.t संग्रहं; $T_{3.4}$ -पालकं ( for -संग्रहे ). —$^{c}$) $D_7$ मुनेर्; $D_{10.11}$ मुने ( for मुनिं ). Ñ V $B_{1.3.4}$ $D_{1.2.4.5.9}$ उवाच तं( $\tilde{N}_1$ $V_1$ °चैनं; $B_{1.3.4}$ $D_{2.9}$ °च च ) महात्मानं( $\tilde{N}_1$ $V_1$ °बाहुं ). —$^{d}$) $G_1$ सादरं ( for राघवः ).

17 $^{a}$) $D_1$ $M_7$ तत्ते; $D_8$ यत्तु; $M_6$ यत्तन् ( for यत्ते ). Ś $B_4$ ममेरितं; $V_2$ ( before corr.; after corr. as in text ) $B_4$ विवक्षितं; $B_2$ $D_{3.8.12}$ $M_7$ समीहि( $D_3$ °षि; $D_{8.12}$ °रि )तं; $M_5$ मनीषिंस्तद्; $M_6$ मनीषिणो; Cm.t as in text ( for मनीषितं ). Ś $B_2$ $D_{3.8.12}$ कार्यं ( for वाक्यं ). —$^{b}$) $Ś_1$ चास्य ( sic ); $Ś_{2.3}$ $B_{1.2}$ $D_{2.5.8.12}$ $T_3$ $G_1$ $M_{6.10}$ चासि; $V_3$ वायं; Ś $B_4$ $D_3$ $D_{6.7}$ वा च; $T_2$ [ क्षा ]यासि; $T_4$ वात्र ( for वासि ). Ś $B_4$ $D_3$ जितः; $G_1$ समागतः; $\tilde{N}_1$ $V_{1.3}$ $D_{1-5.9}$ $T_3$ विस( $D_5$ $T_3$ °व )र्जितः ( $\tilde{N}_1$ °तं ); $B_3$ समाहितं; $D_{6.7}$ [ अ ]सि प्रेषितः; $T_4$ प्रचोदितः; $M_{1.2.7}$ समीरि( $M_7$ °हि )तः; Cm.g.k.t as in text ( for समाहितः ). —$^{c}$) $\tilde{N}_2$ $B_{2-4}$ कथयाशु; $D_3$ $M_6$ कथयेह; Cm.t as in text ( for कथयस्व ). $V_2$ $B_1$ $D_{3.6.7.10.11}$ T G $M_{1-3}$ [ अ ]विशंकस् ( for विशङ्कस् ). —$^{d}$) $\tilde{N}_2$ $V_2$ $B_{1.3.4}$ $T_3$ $M_{10}$ Ś $B_3$ $D_{3.8.12}$ Cv वर्तसे; Cm.g.k.t as in text ( for वर्तते ). —For 17$^{cd}$, $\tilde{N}_1$ $V_{1.3}$ $D_{1.2.4.5.9}$ subst. : मम विप्र हितं वचः.

आजगाम महातेजा यत्र ते सचिवाः स्थिताः।

Colophon

श्रुत्वैतत्तु ततो राम आश्चर्यमिति चाब्रवीत्।
पूज्यमानाः स्थितास्तत्र ये रामस्य समीपतः।
तेऽप्याश्चर्यमिति प्राहुर्वानरा राक्षसास्तथा।
विभीषणश्च धर्मात्मा पार्श्वस्थो वाक्यमब्रवीत्।
आश्चर्यं स्मारितोऽस्म्यद्य यत्तद्वृत्तं पुरातनम्।
अगस्त्योऽथाब्रवीद्रामं सर्वमेतच्छ्रुतं त्वया।
दृष्टः सभाजितश्चासि राम गच्छामहे वयम्।

## 3

V3 ins. after 35.53[ab]; D9 ins. after Sarga 36; D7.10.11 cont. after colophon read after l. 46 of App. I No. 4; T4 M3 ins. after l. 2 of 736* (T4 after addl. colophon):

एतच्छ्रुत्वा तु निखिलं राघवोऽगस्त्यमब्रवीत्।
य एषर्क्षरजा नाम वालिसुग्रीवयोः पिता।
जननी का च भगवन्न त्वया परिकीर्तिता।
वालिसुग्रीवयोर्ब्रह्मन्माता नाम च तत्कृता।
एतद्ब्रह्मन्समाचक्ष्व कौतूहलमिदं हि नः।
स प्रोक्तो राघवेणैवमगस्त्यो वाक्यमब्रवीत्।
शृणु राम कथामेतां यथापूर्वं समासतः।
नारदः कथयामास ममाश्रममुपागतः।
कदाचिदटमानोऽसावतिथिर्मामुपागतः।
अर्चितस्तु यथान्यायं विधिदृष्टेन कर्मणा।
सुखासीनः कथामेनां मया पृष्टः स कौतुकात्।
कथयामास धर्मात्मा महर्षे श्रूयतामिति।
मेरुर्नगवरः श्रीमाञ्जाम्बूनदमयः शुभः।
तस्य यन्मध्यमं शृङ्गं सर्वदैवतपूजितम्।
तस्मिन्दिव्या सभा रम्या ब्रह्मणः शतयोजना।
तस्यामास्ते सदा देवः पद्मयोनिश्चतुर्मुखः।

---

post. half). —(l. 139) Ś D8.12 शीघ्रेण; D2 [ अ ]दीर्घेण (for दीर्घेण). V1 B4 रावणः (for राक्षसः). —(l. 140) B3 जगाम च (for आजगाम). Ñ1 V1.3 D5 M3 हतौजाश्च (M3 °स्तु); B1 D2.9 महौजाश्च (for महातेजा). Ñ1 गताः (for स्थिताः). —After l. 140, V3 T4 M3 ins.:

11* तैरेव सहितो लङ्कां जगामाशु दशाननः।

Colophon. V1 M3 om. Ñ1 reads colophon after l. 141; while D3.5 read after l. 145. —*Sarga name*: Ś1 Ñ B1.3.4 D1.3.4.6-8 महापुरुषदर्शनं (D1 °नो); Ś2.3 पुरुषदर्शनं (Ś3 °नः); V3 D12 पुरुषोत्तमदर्शनं; D5 अगस्त्यरामसंवादे महापुरुषवर्णनो. —*Sarga no.* (figures, words or both): Ś Ñ1 V3 B1.3 D7.12 om.; Ñ2 31; B4 20; D1.4.5 38; D3 T4 37; D6 4; D8 36; D9 32; D10.11 50. —After colophon, T4 concludes with श्रीरामार्पणमस्तु.

—Ñ2 B1.3.4 D6.7.10.11 T4 ins. l. 141–147 after 7.30 (for var. in B1.3 D6.7.10.11 T4 cf. 643*). —D12 ins. ॐ before l. 141. —(l. 141) D1.4 [ प ]व; D2.5.9 [ प ]वं; D3 [ प ]नं (for [ प ]तत्). D5 स (for तु). V3 दृष्ट्वैनं तु. Ñ1 V1 M3 श्रुत्वैतद्वचनं प्राह (M3 सर्वं) (for the prior half). Ñ1 V1 M3 राघवः (for चाब्रवीत्). V3 इदमब्रवीत्. —(l. 142) V3 D1.3-5 समीपगाः. —(l. 143) D2 तथा (for तेऽपि). D2.9 राक्षसैः सह (for राक्षसास्तथा). Ñ1 V1.3 D1.3-5 M3 आश्चर्यमिति ते (V3 सं; M3 तत्) प्राहुर्वानरा (V3 °हू रावणा) राक्षसैः सह. —For l. 141–143, Ñ2 B4 subst.; while D3 ins. l. 2 only after l. 141:

12* आश्चर्यमिति तद्रामो लक्ष्मणश्चाब्रवीत्तदा।
अगस्त्यवचनं श्रुत्वा वानरा राक्षसास्तथा।

[Cf. l. 1–2 of 643*. —(l. 2) D3 °स्य वचः. Ñ2 तदा (for तथा).]

—(l. 144) Ñ V1.3 B4 D1–5.9 M3 तु (Ñ2 च) रामस्य (for च धर्मात्मा). V3 रामम् (for वाक्यम्). —(l. 145) V3 ह्यस्य (for ऽस्म्यद्य). Ñ1 श्रावितो मेद्य; B4 श्रावितोस्म्यद्य (for स्मारितोऽस्म्यद्य). Ñ1 D8 यत्तु; V3 यत्र (for यत्तद्). V3 मुक्तं; D2 भूतं; D9 रूपं (for वृत्तं). —(l. 146) Ñ2 V1.3 B4 D2.3.5.9 M3 अथागस्त्यो (by transp.) (for अगस्त्योऽथ). M3 सर्वम् (for रामं). V3 D1.2.4 एतत्सर्वं (by transp.); M3 एतद्रामं (for सर्वमेतच्). Ś D8.12 श्रुतं त्वया; D2 मया श्रुतं (for श्रुतं त्वया). Ñ V1 B4 D3.5.9 एतत्सर्वं श्रुतं मया (for the post. half). —(l. 147) Ś D8.9.12 [ अ ]सिम; Ñ2 V1.3 D2 [ अ ]पि (for [ अ ]सि). Ñ1 सभाजितस्यापि (for °तश्चासि). M3 दृष्टा समाजिताश्चापि (for the prior half). Ñ V1.3 B4 D1–5.9 M3 यास्यामहे (for गच्छा°). —After l. 147, M3 ins.:

13* तस्य तद्वचनं श्रुत्वा रामो रमयतां वरः।

## 3

V3 om. l. 1–8. —(l. 2) D9 एषर्क्षराजो. —(l. 3) M3 हि (for च). D10.11 भवनं (for भगवन्). D9 T4 कास्य भवनं (T4 °*) (for का च भगवन्). D10.11 सा; T4 damaged (for न). —(l. 4) T4 damaged for सुग्रीव. T4 नाम्नी; B (ed.) चापि (for ब्रह्मन्). D9 T4 M3 माता का नामतः स्मृता (T4 °तस्त्विह); D10.11 K (ed.) माता मे नाम तत्कृता (K [ed.] °मतः कुतः); B (ed.) नामनी केन हेतुना (for the post. half). —(l. 5) T4 damaged for the prior half. —(l. 6) D9 संप्रोक्तो (for स प्रोक्तो). —(l. 7) M3 समाहितः (for समासतः). —(l. 9) D7.10.11 अतिथर्मम्; T4 damaged; K (ed.) अतिथित्वम् (for अतिथिर्माम्). —(l. 10) V3 T4 च (for तु). D7 T4 M3 यथान्याय्यं. —(l. 11) V3 D9 T4 एतां; K (ed.) त्वेनां (for एनां). M3 तु (for स). —(l. 13) V3 सुमेरुर्नगः (subm.) (for मेरुर्नगवरः). —(l. 15) V3 दिव्याश्रमे; M3 दिव्यसभा (for दिव्या सभा). K (ed.) ब्राह्मी या (for ब्रह्मणः). —(l. 16) T4 damaged for तस्यामास्ते. V3 महादेवः; D9 यदा ** (lacuna)

योगमभ्यसतस्तस्य नेत्राभ्यां यद्रसोऽस्त्रवद् ।
तद्गृहीतं भगवता पाणिना चर्चितं तु तत् ।
निक्षिप्तमात्रं तद्भूमौ ब्रह्मणा लोककर्तृणा ।
तस्मिन्नश्रुकणे राम वानरः संबभूव ह ।
उत्पन्नमात्रस्तु तदा वानरश्च नरोत्तम ।
समाश्वास्य प्रियैर्वाक्यैरुक्तः किल महात्मना ।
पश्य शैलं सुविस्तीर्णं सुरैरध्युषितं सदा ।
तस्मिन्रम्ये गिरिवरे बहुमूलफलाशनः ।
ममान्तिकचरो नित्यं भव वानरपुंगव ।
कंचित्कालमिहास्व त्वं ततः श्रेयो भविष्यति ।
एवमुक्तः स चैतेन ब्रह्मणा वानरोत्तमः ।
प्रणम्य शिरसा पादौ देवदेवस्य राघव ।
उक्तवाँल्लोककर्तारमादिदेवं जगत्पतिम् ।
यथाज्ञापयसे देव स्थितोऽहं तव शासने ।
एवमुक्त्वा हरिर्देवं ययौ हृष्टमनास्तदा ।
स तदा द्रुमखण्डेषु फलपुष्पघनेषु च ।
ब्रह्मन्प्रतिबलः शीघ्रं वने फलकृताशनः ।
चिन्वन्मधूनि मुख्यानि चिन्वन्पुष्पाण्यनेकशः ।
दिने दिने च सायाह्ने ब्रह्मणोऽन्तिकमागमत् ।
गृहीत्वा राम मुख्यानि पुष्पाणि च फलानि च ।
ब्रह्मणो देवदेवस्य पादमूले न्यवेदयत् ।
एवं तस्य गतः कालो बहु पर्यटतो गिरिम् ।
कस्यचित्त्वथ कालस्य समतीतस्य राघव ।
ऋक्षराड्वानरश्रेष्ठस्तृषया परिपीडितः ।
उत्तरं मेरुशिखरं गतस्तत्र च दृष्टवान् ।
नानाविहगसंघुष्टं प्रसन्नसलिलं सरः ।
चलत्केसरमात्मानं कृत्वा तस्य तटे स्थितः ।
ददर्श तस्मिन्सरसि वक्त्रच्छायामथात्मनः ।
कोऽयमस्मिन्मम रिपुर्वसत्यन्तर्जले महान् ।
रूपं चान्तर्गतं तत्र वीक्ष्य तत्पश्यतो हरिः ।
क्रोधाविष्टमना ह्येष नियतं मावमन्यते ।
तदस्य दुष्टभावस्य पुष्कलं कुमतेर्गृहम् ।
एवं संचिन्त्य मनसा स वै वानरचापलात् ।
आप्लुत्य चापतत्तस्मिन्ह्रदे वानरसत्तमः ।
उत्प्लुत्य तस्मात्स ह्रदादुत्थितः प्लवगः पुनः ।
तस्मिन्नेव क्षणे राम स्त्रीत्वं प्राप स वानरः ।
मनोज्ञरूपा सा नारी लावण्यललिता शुभा ।
विस्तीर्णजघना सुभ्रूर्नीलकुन्तलमूर्धजा ।
मुग्धसस्मितवक्त्रा च पीनस्तनतटा शुभा ।
ह्रदतीरे च सा भाति ऋजुयष्टिर्लता यथा ।
त्रैलोक्यसुन्दरी कान्ता सर्वचित्तप्रमाथिनी ।
लक्ष्मीव पद्मरहिता चन्द्रज्योत्स्नेव निर्मला ।

(for सदा देवः). —(l. 17) $T_4$ damaged for सतस्तस्य. $V_3$ $D_9$ $M_3$ नेत्रेभ्यो. $M_3$ [अ]द्रवत् (for ऽस्त्रवत्). $D_{7.10.11}$ यदश्रु स्र(D11 °सुस्र)वत्; $T_4$ अश्रु चापतत्. —(l. 18) $V_3$ गृहीत्वा (for °तं). $V_3$ मर्दितं; $D_9$ चार्चितं (for चर्चितं). $V_3$ $M_3$ च (for तु). —(l. 19) $V_3$ निक्षिप्यमानं. $M_3$ लोकधारिणा (for °कर्तृणा). —(l. 20) $V_3$ वैरतुतो (corrupt) (for अश्रुकणे). $T_4$ हि (for ह). —(l. 21) $V_3$ $D_9$ $T_4$ $M_3$ स (for च). —(l. 22) $V_3$ तुष्टः (for उक्तः). —(l. 23) $V_3$ पुरा; K (ed.) तदा (for सदा). —(l. 24) $V_3$ $D_9$ अस्मिन् (for त°). $V_3$ $T_4$ गिरिवरे रम्ये (by transp.). —(l. 25) $T_4$ [अं]तिकपरो (for °चरो). —(l. 26) $V_3$ $D_{7.10}$ किंचित्. $V_3$ [आ]स्थित्वा (for [आ]स्व त्वं). $M_3$ तव (for ततः). —(l. 27) $V_3$ $D_9$ वै तेन (for चैतेन). —(l. 28) $T_4$ damaged from दौ up to लोक in l. 29. —(l. 29) $V_3$ देवदेवं (for आदिदेवं). $V_3$ $D_9$ $T_4$ $M_3$ प्रजापतिं; K (ed.) जगद्गुरुं (for जगत्पतिम्). —(l. 32) $V_3$ $T_4$ ततो (for तदा). $M_3$ रमणीये तु (for द्रुमखण्डेषु). $V_3$ $T_4$ -वनेषु (for -घनेषु). $M_3$ फलपुष्पोपशोभिते (for the post. half). —(l. 33) $V_3$ $D_9$ $T_4$ $M_3$ ब्रमन्न ($T_4$ °न्प्र)तिबलः; $D_7$ ब्रह्मन्नतिबलः. K (ed.) ब्रह्मप्रतिबलः शैघ्र्ये (for the prior half). $V_3$ फलरसाशनः. —(l. 34) K (ed.) कचिन् (for चिन्वन्). $T_4$ damaged after मु up to दिने च in l. 35. —$V_3$ om. (hapl.) from the post. half up to the prior half of l. 36. —(l. 35) $D_9$ om. (hapl.) दिने. $T_4$ आययौ (for आगमत्). —(l. 36) $V_3$ om. first च (subm.). —(l. 37) $M_3$ न्यवेशयत् (for न्यवेद°). —(l. 38) $V_3$ गिरेः. —(l. 40) $V_3$ जगाम (for ऋक्षराड्). $D_9$ $T_4$ वानरवृषस्; $M_3$ वानरस्तत्र (for °श्रेष्ठस्). $V_3$ $D_9$ $T_4$ $M_3$ तृष्णया (for तृषया). —$T_4$ damaged after प up to ग in l. 41. —(l. 41) $V_3$ दहंतं तत्र दृष्टवान् (for the post. half). —(l. 42) $D_{7.9}$ $M_3$ -विहंग- (for -विहग-). $V_3$ शुचिम्; $T_4$ शुभं (for सरः). $D_9$ प्र** सलिलाशयं (for the post. half). —(l. 44) $T_4$ damaged for सरसि. $D_{10}$ वक्र- (for वक्त्र-). —(l. 45) $V_3$ कोयमात्मविपर्जने मन्तर्ज * गते महान् (corrupt). —(l. 46) $D_9$ चांतर्जलं (for °र्गतं). $V_3$ तस्य (for तत्र). K (ed.) पाश्यतो (for पश्यतो). $D_9$ हरेः. $V_3$ विकृतं कुरुते हरिः; $T_4$ damaged; $M_3$ वीक्षतो धीरजायत (for the post. half). —(l. 47) $T_4$ damaged for क्रोधा. $T_4$ न (for मा). $V_3$ यतो मामवमन्यते (for the post. half). —(l. 48) $V_3$ वयं कुर्मो विनिग्रहं; $D_9$ करिष्यामि विनिग्रहं; $T_4$ $M_3$ कर्तव्यो निग्रहो मया (for the post. half). —(l. 49) $D_9$ om. (hapl.) from वानर up to स in l. 52. —(l. 50) $V_3$ न्यपतत् (for चा°). $V_3$ स वै वानरपुंगवः (for the post. half). —(l. 51) $V_3$ चैव देवेश; $M_3$ °त्संह्लादो; K (ed.) °त्सरस (for तस्मात्स ह्रदाद्). $M_3$ मुदितः (for उत्थितः). —$T_4$ damaged from पुनः up to the prior half of l. 52. —(l. 52) $D_7$ चाप; $M_3$ आप (for प्राप). —(l. 53) $D_9$ लावण्ये (for °ण्य-). —(l. 54) $V_3$ $D_{7.9}$ $M_3$ -कुंचित- (for -कुन्तल-). —(l. 55) $V_3$ वरा; K (ed.) मुग्धा (for मुग्ध-). $V_3$ च सा (for शुभा). —(l. 56) $V_3$ $D_9$ $T_4$ $M_3$ स्थिता (for च सा). K (ed.) ह्रदतीरस्थिता. $V_3$ शुभा; K (ed.) तथा (for यथा). —(l. 57) $T_4$ damaged from क्य up to सर्व-. $V_3$ नर- (for सर्व-). $T_4$ -प्रमर्दिनी (for -प्रमाथिनी). —(l. 58) $D_9$ पद्म- (for

रूपेणाप्यभवत्सा तु श्रियं देवीमुमां यथा।
द्योतयन्ती दिशः सर्वास्तत्राभूत्सा वराङ्गना।
एतस्मिन्नन्तरे देवो निवृत्तः सुरनायकः।
पादावुपास्य देवस्य ब्रह्मणस्तेन वै पथा।
तस्यामेव च वेलायामादित्योऽपि परिभ्रमन्।
तस्मिन्नेव पदे सोऽभूद्यस्मिन्सा तनुमध्यमा।
युगपत्सा तदा दृष्टा देवाभ्यां सुरसुन्दरी।
कन्दर्पवशगौ तौ तु दृष्ट्वा तां संबभूवतुः।
ततः क्षुभितसर्वाङ्गौ सुरेन्द्रौ पन्नगाविव।
तद्रूपमद्भुतं दृष्ट्वा त्याजितौ धैर्यमात्मनः।
ततस्तस्यां सुरेन्द्रेण स्कन्नं शिरसि पातितम्।
अनासाद्यैव तां नारीं सन्निवृत्तमथाभवत्।
ततः सा वानरपतिं जज्ञे वानरमीश्वरम्।
अमोघरेतसस्तस्य वासवस्य महात्मनः।
वालेषु पतितं बीजं वाली नाम बभूव सः।
भास्करेणापि तस्यां वै कन्दर्पवशवर्तिना।
बीजं निषिक्तं ग्रीवायां विधानमनुवर्तत।
तेनापि सा वरतनुर्नोक्ता किंचिद्वचः शुभम्।
निवृत्तमदनश्चाथ सूर्योऽपि समपद्यत।
ग्रीवायां पतिते बीजे सुग्रीवः समजायत।
एवमुत्पाद्य तौ वीरौ वानरेन्द्रौ महाबलौ।
दत्त्वा तु कांचनीं मालां वानरेन्द्रस्य वालिनः।
अक्षयां गुणसंपूर्णां शक्रस्तु त्रिदिवं ययौ।
सूर्योऽपि स्वसुतस्यैव निरूप्य पवनात्मजम्।
कृत्येषु व्यवसायेषु जगाम सवितांबरम्।
तस्यां निशायां व्युष्टायामुदिते च दिवाकरे।
स तद्वानररूपं तु प्रतिपेदे पुनर्नृप।
स एव वानरो भूत्वा पुत्रौ स्वस्य प्लवंगमौ।
पिङ्गेक्षणौ हरिवरौ बलिनौ कामरूपिणौ।
मधून्यमृतकल्पानि पायितौ तेन तौ तदा।
गृह्य ऋक्षरजास्तौ तु ब्रह्मणोऽन्तिकमागमत्।
दृष्ट्वर्क्षरजसं पुत्रं ब्रह्मा लोकपितामहः।
बहुशः सान्त्वयामास पुत्राभ्यां सहितं हरिम्।
सान्त्वयित्वा ततः पश्चाद्देवदूतमथादिशत्।
गच्छ मद्वचनाद्दूत किष्किन्धां नाम वै शुभाम्।
सा ह्यस्य गुणसंपन्ना महती च पुरी शुभा।
तत्र वानरयूथानि सुबहूनि वसन्ति च।
बहुरत्नसमाकीर्णा वानरैः कामरूपिभिः।
पुण्या पुण्यवती दुर्गा चातुर्वर्ण्यपुरस्कृता।
विश्वकर्मकृता दिव्या मन्नियोगाच्च शोभना।
तत्रर्क्षरजसं दृष्ट्वा सपुत्रं वानरर्षभम्।
यूथपालान्समाहूय यांश्चान्यान्प्राकृतान्हरीन्।
तेषां संभाष्य सर्वेषां मदीयं जनसंसदि।
अभिषेचय राजानमारोप्य महदासने।

---

चन्द्र-). —(l. 59) $D_9$ $M_3$ [अ]भ्यभवत्; $T_4$ [अ]ध्यवसत्. $D_7$ नु (for तु). $D_{9-11}$ उमा. $T_4$ $M_3$ तथा (for यथा). $V_3$ गौरीव प्रतिमा तथा; K (ed., with hiatus) श्रीर्गौर्देवी उमा यथा (for the post. half). —(l. 60) B (ed.) तथा (for तत्र). —(l. 62) $T_4$ damaged from ण up to त in l. 63. $V_3$ तदा (for पथा). —(l. 63) $M_3$ तस्मिन् (for तस्याम्). $V_3$ मध्याह्न-; $D_{7.9}$ $T_4$ अथ च; $M_3$ मध्ये च (for एव च). —(l. 64) K (ed.) वने (for पदे). $V_3$ एव प्रदेशे तु; $M_3$ प्रदेशे सोप्यायाद् (for एव पदे सोऽभूद्). $V_3$ ह्यस्मिन् (for यस्मिन्). —(l. 66) $V_3$ च (for तु). —(l. 67) $V_3$ $M_3$ सुरेंद्रतपनावुभौ (for the post. half). —(l. 68) $T_4$ damaged after तद्रू up to त्याजि. $V_3$ $D_9$ $T_4$ धर्मम् (for धैर्यम्). $M_3$ त्यक्तवीर्यौ बभूवतुः (for the post. half). —(l. 69) $M_3$ रेतो वै विनिपातितं (for the post. half). —(l. 70) $D_7$ अथो (for अथ). $D_7$ $M_3$ स निवृत्तमदोभवत् (for the post. half). —For l. 69–70, $V_3$ subst.:

1* ततस्तस्याः सुरेन्द्रः स रूपं दृष्ट्वा मनोहरम्।
अपंभाष्यैव तां नारीमतिप्रीतितरोऽभवत्।

—(l. 71) $V_3$ स वानरपतिर्जज्ञौ (for सा वानरपतिं जज्ञे). $M_3$ प्रासूत बलशालिनं (for the post. half). —(l. 72) K (ed.) अमोघरेतसस्त्वात्तस्य (for the prior half). —(l. 73) $V_3$ $D_9$ $T_4$ नाम्ना (for नाम). —$T_4$ damaged from भूव up to तस्यां in l. 74. $V_3$ ह (for सः). —(l. 75) $V_3$ वीर्यं (for बीजं). K (ed.) तु सिक्तं (for निषिक्तं). $D_9$ $M_3$ अनुवर्तिना (for °र्तत). —(l. 76) $T_4$ [अ]थ (for [अ]पि). $M_3$ शोभन- (for सा वर-). $D_9$ प्रोक्ता (for नोक्ता). $V_3$ शुभा (for शुभम्). —(l. 77) $D_9$ समजायत (for °पद्यत). —(l. 78) $V_3$ वीर्ये (for बीजे). $D_{10.11}$ पतितं बीजं. —$T_4$ mostly damaged for l. 79. —(l. 79) $V_3$ उत्पादितौ वीर्यौ; $D_9$ उत्पाद्य ताभ्यां तौ; $M_3$ उत्पादितौ वीरौ. —(l. 80) $V_3$ च (for तु). —(l. 81) $D_7$ गुणसंपन्नां. $V_3$ $M_3$ अक्षयं गुणसंपूर्णं (for the prior half). —(l. 82) $V_3$ [अ]र्थं; $D_9$ $T_4$ [ए]वं; $M_3$ [ए]नं (for [ए]व). $V_3$ बलमात्मजं (for पवना°). —(l. 83) $V_3$ स्त्रयमंबरं (for सवितांबरम्). —(l. 84) $T_4$ damaged from यां up to second दि. $D_9$ रजन्यां (for निशायां). —(l. 85) K (ed.) तु (for तद्). $T_4$ तत् (for तु). —(l. 86) $V_3$ चास्य महाबलौ (for स्वस्य प्लवंगमौ). —(l. 87) $M_3$ अपश्यत् (for बलिनौ). —$D_9$ om. l. 88–89. —(l. 89) $V_3$ गृहीत्वा तत्र तौ बालौ; $M_3$ गृहीत्वार्क्षरजास्तौ तु (for the prior half). K (ed.) आगतः (for आगमत्). $T_4$ गृहीत्वर्क्ष**********ययौ (damaged). —(l. 90) $V_3$ प्राप्तं (for पुत्रं). $D_9$ दृष्ट्वार्क्षराजं सपुत्रं (for the prior half). —(l. 91) $V_3$ तदा (for हरिम्). —(l. 92) $V_3$ तथा (for अथ). —(l. 94) $M_3$ सर्व- (for ह्यस्य). —(l. 95) $V_3$ -यूथा*. $V_3$ बहूनि तत्र संनिधौ; $M_3$ बहूनि निवसंति च (for the post. half). —(l. 97) $V_3$ $D_7$ पण्या पण्य($D_7$ °ण)वती; $D_{10}$ $M_3$ पुण्या पण्य($M_3$ °ण)वती. K (ed.) -युता सदा (for -पुरस्कृता). —(l. 99) $D_7$ पृष्ट्वा; $M_3$ पुत्रं (for दृष्ट्वा). $V_3$ वानरोत्तमं (for °र्षभम्). —(l. 100) $M_3$ समाहूय. $V_3$ यूथपान्स समाहूय (for the prior half). $V_3$ पश्चात्तान्; $D_7$ तांश्चान्यान् (for यांश्चान्यान्). —(l. 101) $D_7$ संभाष्य. $M_3$ मदीये; K (ed.) मदीय-. —(l. 102) $V_3$ महदासनं. —(l. 104) $V_3$ $D_7$ अथ

दृष्टमात्राश्च ते सर्वे वानरेण च धीमता।
अस्यर्क्षरजसो नित्यं भविष्यन्ति वशानुगाः।
इत्येवमुक्ते वचने ब्रह्मणा तं हरीश्वरम्।
पुरतःकृत्य दूतोऽसौ प्रययौ तां पुरीं शुभाम्।
स प्रविश्यानिलगतिस्तां गुहां वानरोत्तमः।
स्थापयामास राजानं पितामहनियोगतः।
राज्याभिषेकविधिना स्नातोऽथाभ्यर्चितस्तथा।
स बद्धमुकुटः श्रीमानभिषिक्तः स्वलंकृतः।
आज्ञापयामास हरीन्सर्वान्मुदितमानसः।
ससद्वीपसमुद्रायां पृथिव्यां ये प्लवंगमाः।
वालिसुग्रीवयोरेष एष चर्क्षरजः पिता।
जननी चैष तु हरिरित्येतद्भद्रमस्तु ते।
यश्चैतच्छ्रावयेद्विद्वान्यश्चैतच्छृणुयान्नरः।
सिद्ध्यन्ति तस्य कार्यार्था मनसो हर्षवर्धनाः।
एतच्च सर्वं कथितं मया विभो
प्रविस्तरेणेह यथार्थतस्तत्।
उत्पत्तिरेषा रजनीचराणा-
मुक्ता तथैवेह हरीश्वराणाम्।

Colophon

एतां श्रुत्वा कथां दिव्यां पौराणीं राघवस्तदा।
भ्रातृभिः सहितो वीरो विस्मयं परमं ययौ।
राघवोऽथ ऋषेर्वाक्यं श्रुत्वा वचनमब्रवीत्।
कथेयं महती पुण्या त्वत्प्रसादाच्छ्रुता मया।
बृहत्कौतूहलेनास्मि संवृतो मुनिपुंगव।
उत्पत्तिर्यादृशी दिव्या वालिसुग्रीवयोर्द्विज।
किं चित्रं मम ब्रह्मर्षे सुरेन्द्रतपनावुभौ।
जातौ वानरशार्दूलौ बलेन बलिनां वरौ।
एवमुक्ते तु रामेण कुम्भयोनिरभाषत।
एवमेतन्महाबाहो वृत्तमासीत्पुरा किल।
अथापरां कथां दिव्यां शृणु राजन्सनातनीम्।
यदर्थं राम वैदेही रावणेन पुरा हृता।
तत्तेऽहं कीर्तयिष्यामि समाधिं श्रवणे कुरु।
पुरा कृतयुगे राम प्रजापतिसुतं प्रभुम्।
सनत्कुमारमासीनं रावणो राक्षसाधिपः।
वपुषा सूर्यसंकाशं ज्वलन्तमिव तेजसा।
विनयावनतो भूत्वा ह्यभिवाद्य कृताञ्जलिः।
उक्तवान्रावणो राम तमृषिं सत्यवादिनम्।
को ह्यस्मिन्प्रवरो लोके देवानां बलवत्तरः।
यं समाश्रित्य विबुधा जयन्ति समरे रिपून्।
कं यजन्ति द्विजा नित्यं कं ध्यायन्ति च योगिनः।
एतन्मे शंस भगवन्विस्तरेण तपोधन।
विदित्वा हृद्गतं तस्य ध्यानदृष्टिर्महायशाः।
उवाच रावणं प्रेम्णा श्रूयतामिति पुत्रक।
यो वै भर्ता जगत्कृत्स्नं यस्योत्पत्तिं न विद्महे।
सुरासुरैर्नतो नित्यं हरिर्नारायणः प्रभुः।
यस्य नाभ्युद्भवो ब्रह्मा विश्वस्य जगतः पतिः।
येन सर्वमिदं सृष्टं विश्वं स्थावरजङ्गमम्।
तं समाश्रित्य विबुधा विधिना हरिमध्वरे।
पिबन्ति ह्यमृतं चैव मानिताश्च यजन्ति तम्।
पुराणैश्चैव वेदैश्च पञ्चरात्रैस्तथैव च।
ध्यायन्ति योगिनो नित्यं क्रतुभिश्च यजन्ति तम्।
दैत्यदानवरक्षांसि ये चान्ये चामरद्विषः।
सर्वाञ्जयति संग्रामे सदा सर्वैः स पूज्यते।
श्रुत्वा महर्षेस्तद्वाक्यं रावणो राक्षसाधिपः।
उवाच प्रणतो भूत्वा पुनरेव महामुनिम्।
दैत्यदानवरक्षांसि ये हताः समरेऽरयः।

(for अस्य). —$V_{3}$ om. l. 105-170. —(l. 105) K (ed.) तु (for तं). —(l. 106) $D_{7.9}$ $T_{4}$ $M_{3}$ गुहां (for पुरीं). —(l. 107) $T_{4}$ संप्रविश्य. —(l. 109) $T_{4}$ $M_{3}$ राजाभिषेक-. $D_{9}$ स्थापितो (for स्नातोऽथ). $M_{3}$ तदा (for तथा). —(l. 112) $D_{9}$ -स * द्रायां. —(l. 113) $D_{7}$ (with hiatus).$_{9}$ $T_{4}$ $M_{3}$ एव (for first एष). $D_{7}$ एकरत्वृक्षरजाः; $D_{9}$ त्वेपर्क्षरजसः; $T_{4}$ त्वेष त्वृक्षरजाः; $M_{3}$ ह्येष त्वृक्षरजः; K (ed.) ह्येश त्वृक्षरजाः. —(l. 114) $D_{7.9}$ $M_{3}$ [ए]व (for [ए]ष). —(l. 116) $T_{4}$ सर्वे- (for तस्य). $D_{7}$ $M_{3}$ कार्याणि (for कार्यार्था). $T_{4}$ हर्षवर्धकाः; $M_{3}$ हर्षदानि वै. —(l. 117) $D_{9}$ मयापि (for मया विभो). —(l. 118) $T_{4}$ [ए]व (for [इ]ह). $D_{7}$ $T_{4}$ $M_{3}$ तव (for तत्).

Colophon. $V_{3}$ $M_{3}$ om. —*Sarga no.* (figures, words or both): $D_{7}$ 38; $D_{9}$ $T_{4}$ 40; $D_{10.11}$ 1; K (ed.) 6 प्रक्षिप्त. —After colophon, $T_{4}$ concludes with श्रीरामार्पणमस्तु.

—(l. 121) $M_{3}$ पुराणां (for पौराणीं). K (ed.) ततः (for तदा). —(l. 122) $D_{9}$ धीरो (for वीरो). —(l. 123) $D_{9}$ $M_{3}$ वाक्याद्दृष्टो; $T_{4}$ वाक्याद्दृष्ट्वा (for वाक्यं श्रुत्वा). —(l. 125) $D_{10.11}$ °हले वास्मिन्; $T_{4}$ °हलाच्चास्मिन्; $M_{3}$ °हलश्चास्मि. $D_{7}$ $M_{3}$ संवृत्तो. —(l. 127) $T_{4}$ तु महाब्रह्मन् (for मम ब्रह्मर्षे). $M_{3}$ ब्रह्मर्षे मम किं चित्रं (for the prior half). $D_{9}$ -तनयाव् (for -तपनाव्). —(l. 128) $D_{9}$ बलिनौ (for बलेन). —(l. 129) $M_{3}$ च (for तु). —(l. 131) $D_{9}$ $T_{4}$ $M_{3}$ पुरातनीं (for सनातनीम्). —(l. 132) $D_{9}$ $T_{4}$ $M_{3}$ हृता पुरा (by transp.). —(l. 136) $D_{9}$ सदृशं; $T_{4}$ damaged; $M_{3}$ ददर्श (for वपुषा). —(l. 138) $D_{7}$ राम तमृषिं सर्वज्ञं (for रावणो राम तमृषिं). —(l. 139) $D_{9}$ यो (for को). —(l. 141) $M_{3}$ कथयंति; B (ed.) कं जयंति (for कं यजन्ति). $D_{9}$ *जा; K (ed.) जना (for द्विजा). —(l. 142) $M_{3}$ भगवान्. —(l. 143) $M_{3}$ ध्यानदृष्ट्या (for °दृष्टिर्). —(l. 144) $D_{9}$ प्रेक्ष्य (for प्रेम्णा). —(l. 145) K (ed.) बिभर्ति (for वै भर्ता). $T_{4}$ damaged for जगत्. $D_{9}$ [उ]त्पत्तिर्. —(l. 149) $M_{3}$ विधिना विबुधा (by transp.). —(l. 150) $T_{4}$ damaged for पिबन्ति ह्य. $D_{9}$ $M_{3}$ मानवाश्च (for मानिताश्च). —$T_{4}$ damaged from जन्ति up to l. 151. $D_{7}$ जयंति (for यजन्ति). —(l. 151) $D_{10}$ पौराणैश्च. $M_{3}$ देवैश्च (meta.) (for वेदैश्च). $M_{3}$ पांचरात्रैस्त. $D_{9}$ पंचरात्रागमैरपि (for the post. half). —(l. 154) $M_{3}$ जयंति. $M_{3}$ तं स्मृत्वानन्यचेतसः (for the post. half). —(l. 155) $T_{4}$ damaged for महर्षे and from धिपः up to पुन in l. 156. —(l. 157) $D_{9}$ $T_{4}$ पुरा (for ऽरयः). —(l. 158)

कां गतिं प्रतिपद्यन्ते किं च ते हरिणा हताः ।
रावणस्य वचः श्रुत्वा प्रत्युवाच महामुनिः ।
दैवतैर्निहता नित्यं प्राप्नुवन्ति दिवःस्थलम् ।
पुनस्तस्मात्परिभ्रष्टा जायन्ते वसुधातले ।
पूर्वार्जितैः सुखैर्दुःखैर्जायन्ते च म्रियन्ति च ।
ये ये हताश्चक्रधरेण राजं-
त्रैलोक्यनाथेन जनार्दनेन ।
ते ते गतास्तन्निलयं नरेन्द्राः
क्रोधोऽपि देवस्य वरेण तुल्यः ।
श्रुत्वा ततस्तद्वचनं निशाचरः
सनत्कुमारस्य मुखाद्विनिर्गतम् ।
तथा प्रहृष्टः स बभूव विस्मितः
कथं नु यास्यामि हरिं महाहवे ।

Colophon

एवं चिन्तयतस्तस्य रावणस्य दुरात्मनः ।
पुनरेवापरं वाक्यं व्याजहार महामुनिः ।
मनसश्चेप्सितं यत्तद्भविष्यति महाहवे ।
सुखी भव महाबाहो कंचित्कालमुदीक्षय ।
एवं श्रुत्वा महाबाहुस्तमृषिं प्रत्युवाच सः ।
कीदृशं लक्षणं तस्य ब्रूहि सर्वमशेषतः ।
राक्षसेशवचः श्रुत्वा स मुनिः प्रत्यभाषत ।
श्रूयतां सर्वमाख्यास्ये तव राक्षसपुंगव ।
स हि सर्वगतो देवः सूक्ष्मोऽव्यक्तः सनातनः ।
तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ।
स भूमौ दिवि पाताले पर्वतेषु वनेषु च ।
स्थावरेषु च सर्वेषु नदीषु नगरीषु च ।
ओंकारश्चैव सत्यं च सावित्री पृथिवी च सः ।
धराधरधरो देवो ह्यनन्त इति विश्रुतः ।
अहश्च रात्रिश्च उभे च संध्ये
दिवाकरश्चैव यमश्च सोमः ।
स एव कालो ह्यनिलोऽनलश्च
स ब्रह्मरुद्रेन्द्र स एव चापः ।
विद्योतति ज्वलति भाति लोका-
न्सृजत्ययं संहरति प्रशास्ति ।
क्रीडां करोत्यव्ययलोकनाथो
विष्णुः पुराणो भवनाशकैकः ।
अथवा बहुनानेन किमुक्तेन दशानन ।
तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ।
नीलोत्पलदलश्यामः किञ्जल्कारुणवाससा ।
प्रावृट्काले यथा व्योम्नि सतडित्तोयदो यथा ।
श्रीमान्मेघवपुः श्यामः शुभः पङ्कजलोचनः ।
श्रीवत्सेनोरसा युक्तः शशाङ्ककृतलक्षणः ।
तस्य नित्यं शरीरस्था मेघस्येव शतह्रदाः ।

---

$T_4$ समपद्यंते. K (ed.) के (for किं). $D_9$ $T_4$ वा (for च). —(l. 160) $T_4$ damaged from लम् up to the prior half of l. 161. $D_9$ नभस्तलं (for दिवःस्थलम्). —(l. 164) K (ed.) त्रिलोक- (for त्रैलोक्य-). —(l. 165) $D_9$ तन्निलये; K (ed.) तत्र लयं (for तन्निलयं). $D_7$ नरेंद्र. —(l. 167) $T_4$ damaged for श्रुत्वा तत. —(l. 170) $D_7$ प्रयास्यामि; B (ed.) न यास्यामि (for नु यास्यामि).

Colophon : $V_3$ $M_3$ om. —*Sarga no.* (figures, words or both): $D_7$ om.; $D_9$ $T_4$ 41; $D_{10,11}$ 2; K (ed.) 7 प्रक्षिप्त. —After colophon, $T_4$ concludes with श्रीरामार्पणमस्तु.

—(l. 171) $T_4$ damaged up to रा in रावणस्य. —(l. 172) $V_3$ प्रत्युवाच (for व्याजहार). —(l. 173) $V_3$ ते वै; $D_9$ यत्तु; K (ed.) यत्ते (for यत्तद्). $M_3$ तवाहवे. —(l. 174) $D_{11}$ महा * * (for महाबाहो). $V_3$ $D_9$ किंचित्. $T_4$ उदीक्षयन्. —(l. 175) $T_4$ एतच्च् (for एवं). $V_3$ उक्तो (for श्रुत्वा). —(l. 176) $T_4$ damaged from स up to चः in l. 177. $V_3$ स त्वम् (for सर्वम्). —(l. 177) $V_3$ रावणस्य; K (ed.) राक्षसस्य (for राक्षसेश-). $D_{7.9}$ $T_4$ $M_3$ प्रत्युवाच तं (for प्रत्यभाषत). $V_3$ प्रत्युवाच महामुनिः (for the post. half). —(l. 178) $V_3$ त्वयि (for तव). —(l. 179) $V_3$ सूक्ष्मो (for देवः). $T_4$ सर्वगुणोपेतः (for °गतो देवः). $V_3$ व्यक्ताव्यक्तः (for सूक्ष्मोऽव्यक्तः). —(l. 180) K (ed.) प्रोतं (for व्याप्तं). —$D_9$ om. (hapl.); $T_4$ damaged for l. 182. —(l. 182) $V_3$ सागरेषु (for स्थावरेषु). K (ed.) वनेषु (for नदीषु). $V_3$ नगरेषु. —(l. 183) $V_3$ कारणं (for ओंकारश्). $D_{10,11}$ सत्यश्च (for सत्यं). $D_7$ -वसु (for च सः). —(l. 185) Note hiatus between रात्रिश्च and उभे. —(l. 186) $V_3$ [अ]पि (for [ए]व). —(l. 187) $M_3$ सर्पोतिकायो (for स एव कालो). K (ed.) ह्यनलश्च वायुः (for ह्यनिलोऽनलश्च). —$T_4$ damaged for l. 188. —(l. 188) $D_9$ ब्रह्मेंद्ररुद्राश्च. $D_7$ -गणस्तथापः (for स एव चापः). $V_3$ ब्रह्मा स रुद्रः सलिलं स एव; $M_3$ (with hiatus) स ब्रह्मरुद्राश्च स एव आपः; K (ed.) स ब्रह्मरुद्रौ च स एव बालः. —(l. 189) $V_3$ $D_{7.9}$ $M_3$ विद्योतति($V_3$ °ते) ज्वलति वर्षति वाति ($D_7$ $M_3$ भाति च पाति; $D_9$ भाति ववाति) लोकान्; $T_4$ * * * ति ज्वलति याति च * * लोकान् (damaged). —(l. 190) $V_3$ प्रयाति तपति संहरति प्रशास्ति; $D_7$ सर्वान्सृजत्यवति संहरति प्रशास्ति. —(l. 191) $V_3$ विकरोति च लोकनाथो; $D_9$ जगति प्रथितो महात्मा (for [अ]व्ययलोकनाथो). —(l. 192) $D_7$ भवनाशनैकः; $D_9$ पुरुषौघनाशनः; $T_4$ पुरुषश्च नैक˚; $M_3$ भवनाशहेतुः. $V_3$ विष्णु. प्रधानपुरुषो भयनाशकश्च. —(l. 193) $V_3$ $T_4$ बहुनोक्तेन; $D_7$ $M_3$ बहुना तेन. $V_3$ किमनेन; $T_4$ damaged (for किमुक्तेन). —(l. 194) $T_4$ damaged from मिदं up to नीलो in l. 195. —(l. 195) $V_3$ -वस्त्रधानः (corrupt); $D_9$ -वाससः; $M_3$ -मेदनः; K (ed.) -वस्त्रकः (for -वाससा). —(l. 196) $V_3$ जलदो (for तोयदो). $D_9$ $T_4$ तथा (for यथा). —(l. 197) $D_{7.9}$ शुभ- (for शुभः). K (ed.) पंकजारुणलोचनः (for the post. half). $V_3$ श्रीमानस्य महाबाहुः पुंडरीकनिभेक्षणः. —(l. 198) $T_4$ समायुक्तः (for [उ]रसा युक्तः). $T_4$ damaged for कृतलक्षणः. $D_9$ -[अ]द्भुत- (for -कृत-). —(l. 199) $T_4$ damaged from शत up to

संग्रामरूपिणी लक्ष्मीर्देहमावृत्य तिष्ठति।
न शक्यः स सुरैर्द्रष्टुं नासुरैर्न च पन्नगैः।
यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति।
न हि यज्ञफलैस्तात न तपोभिस्तु संचितैः।
शक्यते भगवान्द्रष्टुं न दानेन न चेज्यया।
तद्भक्तैस्तद्गतप्राणैस्तच्चित्तैस्तत्परायणैः।
शक्यते भगवान्द्रष्टुं ज्ञाननिर्दग्धकिल्बिषैः।
अथवा पृच्छय रक्षेन्द्र यदि तं द्रष्टुमिच्छसि।
कथयिष्यामि ते सर्वं श्रूयतां यदि रोचते।
कृते युगे व्यतीते वै मुखे त्रेतायुगस्य तु।
हितार्थं देवमर्त्यानां भविता नृपविग्रहः।
इक्ष्वाकूणां च यो राजा भाव्यो दशरथो भुवि।
तस्य सूनुर्महातेजा रामो नाम भविष्यति।
महातेजा महाबुद्धिर्महाबलपराक्रमः।
महाबाहुर्महासत्त्वः क्षमया पृथिवीसमः।
आदित्य इव दुष्प्रेक्ष्यः समरे शत्रुभिस्तदा।
भविता हि तदा रामो नरो नारायणः प्रभुः।
पितुर्नियोगात्स विभुर्दण्डके विविधे वने।
विचरिष्यति धर्मात्मा सह भ्रात्रा महामनाः।
तस्य पत्नी महाभागा लक्ष्मी सीतेति विश्रुता।
दुहिता जनकस्यैषा उत्थिता वसुधातलात्।
रूपेणाप्रतिमा लोके सर्वलक्षणलक्षिता।
छायेवानुगता रामं निशाकरमिव प्रभा।
शीलाचारगुणोपेता साध्वी धैर्यसमन्विता।
सहस्रांशो रश्मिरिव ह्येका मूर्तिरिव स्थिता।
एवं ते सर्वमाख्यातं मया रावण विस्तरात्।
महतो देवदेवस्य शाश्वतस्याव्ययस्य च।
एवं श्रुत्वा महाबाहू राक्षसेन्द्रः प्रतापवान्।
त्वया सह विरोधेच्छुश्चिन्तयामास राघव।
सनत्कुमारात्तद्वाक्यं चिन्तयानो मुहुर्मुहुः।
रावणो मुमुदे श्रीमान्युद्धार्थं विचचार ह।
श्रुत्वा च तां कथां रामो विस्मयोत्फुल्ललोचनः।
शिरसश्चालनं कृत्वा विस्मयं परमं गतः।
श्रुत्वा तु वाक्यं स नरेश्वरस्तदा
मुदा युतो विस्मयमानचक्षुः।
पुनश्च तं ज्ञानवतां प्रधान-
मुवाच वाक्यं वद मे पुरातनम्।

Colophon

ततः पुनर्महातेजाः कुम्भयोनिर्महायशाः।
उवाच रामं प्रणतं पितामह इवेश्वरम्।
श्रूयतामिति चोवाच रामं सत्यपराक्रमम्।
कथाशेषं महातेजाः कथयामास स प्रभुः।
यथाख्यानं श्रुतं चैव यथावृत्तं यथा तथा।

---

संग्रा in l. 200. $V_3$ गिरेरिव महानदी ( for the post. half ). —( l. 200 ) $D_9$ समग्रा रूपिणी. $V_3$ दिवम् ( for देहम् ). —( l. 201 ) $V_3$ स न शक्यः ( by transp.); $D_7$ न च शक्यः; $D_9$ $T_4$ न स शक्यः ( by transp.); $M_3$ स शक्यो न ( by transp.) ( for न शक्यः स ). $D_{10}$ [ ऽ ]मरैर् ( for सुरैर् ). $V_3$ अपि ( for न च ). —( l. 202 ) $V_3$ भयप्रसादं कुरुते तमेवं द्रष्टुमर्हसि. —( l. 203 ) $V_3$ स्थातुं ( for तात ). $V_3$ सुसंचितैः; $D_9$ $T_4$ च संचितैः. —$D_9$ om. ( hapl. ) from the post. half of l. 204 up to the prior half of l. 206. —$T_4$ damaged from यणैः in l. 205 up to भ in l. 206. —( l. 206 ) $D_{11}$ -निर्दिग्ध-. $T_4$ $M_3$ -कल्मषैः. —( l. 207 ) $V_3$ देवेंद्र; $D_9$ राजेंद्र ( for रक्षेन्द्र ). $D_7$ अथापृच्छे राक्षसेंद्र; $M_3$ अथवा राक्षसेंद्र त्वं ( for the prior half ). $V_3$ यदिदं ( for यदि तं ). —( l. 208 ) $T_4$ तव ( for ते ). —( l. 209 ) $V_3$ $D_9$ $T_4$ $M_3$ तु ( for वै ). $V_3$ मुख्ये and च ( for मुखे and तु respy. ). —( l. 210 ) $V_3$ देवमुख्यानां. —$T_4$ damaged from हः up to the prior half of l. 211. $V_3$ नरविग्रहः. —( l. 211 ) $V_3$ भावी ( for भाव्यो ). —$M_3$ om. ( hapl. ) l. 214. —( l. 215 ) $T_4$ damaged from the post. half up to हि in l. 216. $V_3$ $D_9$ $M_3$ सदा ( for तदा ). —( l. 216 ) $M_3$ तथा ( for तदा ). —( l. 217 ) $V_3$ विष्णुर् ( for विभुर् ). $V_3$ विपिने; $M_3$ विजने ( for विविधे ). —( l. 218 ) B (ed.) भ्रात्रा सह ( by transp. ). $V_3$ महात्मना; $T_4$ $M_3$ महायशाः ( for °मनाः ). $D_{10.11}$ स भ्रात्रा स महामनाः (for the post. half). —$T_4$ mostly damaged for l. 220. —( l. 220 ) Note hiatus between two halves. $V_3$ [ प ]त्र; $M_3$ [ इ ]ष्टा ( for [ ए ]षा ). —( l. 223 ) $M_3$ चारुशील- ( for शीलाचार- ). —( l. 224 ) $V_3$ रश्मिर्यथा सहस्रांशोर् ( for the prior half ). $V_3$ एक-; $M_3$ ह्येक- ( for ह्येका ). —( l. 225 ) $T_4$ damaged after माख्या up to मह in l. 226. —( l. 227 ) $V_3$ उक्तो ( for श्रुत्वा ). —( l. 228 ) $V_3$ स (subm.) ( for सह ). $V_3$ विरोधं तु; $M_3$ विरोधेप्सुश्. —After l. 228, $V_3$ ins. :

2* सनत्कुमारात्तद्वाक्यं श्रुत्वा राक्षसपुंगवः।
अनुज्ञातः पुरीं प्रायात्प्रतिपद्य महात्मने।

—( l. 229 ) $V_3$ वाक्यं सनत्कुमारस्य; $M_3$ सनत्कुमारवाक्यं तु ( for the prior half ). $V_3$ पुनः पुनः ( for मुहुर्मुहुः ). —( l. 230 ) $T_4$ damaged after मुमु. $V_3$ $M_3$ युद्धार्थी. —( l. 231 ) $V_3$ $D_9$ $T_4$ तु ( for च ). —( l. 232 ) $V_3$ ह्यादौ कथय मे कथां; K (ed.) तमर्थं परिचिंतयन् ( for the post. half ). —( l. 233 ) $V_3$ स नरेश्वरस्य; $T_4$ भुवनेश्वरस्तदा. —$T_4$ damaged for l. 236. —( l. 236 ) $V_3$ स्वभाववाक्यं ( for उवाच वाक्यं ). $V_3$ ते ( for मे ).

Colophon: $M_3$ om. —*Sarga name*: $V_3$ रावणचिंताकरणो. —*Sarga no.* ( figures, words or both ) : $V_3$ $D_7$ om.; $D_9$ $T_4$ 42; $D_{10.11}$ 3; K ( ed. ) 8 ( प्रक्षिप्त ). —After colophon, $T_4$ concludes with श्रीरामार्पणमस्तु.

—( l. 237 ) $V_3$ महातपाः ( for °यशाः ). —( l. 239 ) $T_4$ damaged from ति up to स. $V_3$ होवाच; $M_3$ चामंत्र्य ( for चोवाच ). —( l. 241 ) $T_4$ तथावृत्तं; $M_3$ यथाख्यानं ( for यथावृत्तं ). $V_3$ कृतं तथा; $D_7$ तथा तथा; $D_9$ $T_4$ $M_3$ च तत्तथा ( for यथा

प्रीतात्मा कथयामास राघवाय महामतिः ।
एतदर्थं महाबाहो रावणेन दुरात्मना ।
सुता जनकराजस्य हृता राम महामते ।
एतां कथां महाबाहो नारदः सुमहायशाः ।
कथयामास दुर्धर्ष मेरौ गिरिवरोत्तमे ।
देवगन्धर्वसिद्धानामृषीणां च महात्मनाम् ।
कथाशेषं पुनः सोऽथ कथयामास राघव ।
नारदः सुमहातेजाः प्रहसन्निव मानद ।
तां कथां श्रृणु राजेन्द्र महापापप्रणाशिनीम् ।
यां तु श्रुत्वा महाबाहो ऋषयो दैवतैः सह ।
ऊचुस्तं नारदं सर्वे हर्षपर्याकुलेक्षणम् ।
यश्चेमां श्रावयेन्नित्यं श‍ृणुयाद्वापि भक्तितः ।
स पुत्रपौत्रवान्राम स्वर्गलोके महीयते ।

Colophon

ततः स राक्षसो राम पर्यटन्पृथिवीमिमाम् ।
विजयार्थी महाशूरं राक्षसैः परिवारितः ।
दैत्यदानवरक्षःसु यं श्रृणोति बलाधिकम् ।
तमाह्वयति युद्धार्थी रावणो बलदर्पितः ।
एवं स पर्यटन्सर्वां पृथिवीं पृथिवीपते ।
ब्रह्मलोकान्निवर्तन्तं समासाद्याथ रावणः ।
व्रजन्तं मेघपृष्ठस्थमंशुमन्तमिवापरम् ।
तमभिसृत्य प्रीतात्मा ह्यभिवाद्य कृताञ्जलिः ।
उवाच हृष्टमनसा नारदं रावणस्तदा ।
आब्रह्मभवनाल्लोकास्त्वया दृष्टा ह्यनेकशः ।
कस्मिँल्लोके महाभाग मानवा बलवत्तराः ।
योद्धुमिच्छामि तैः सार्धं यथाकामं यदृच्छया ।
चिन्तयित्वा मुहूर्तं तु नारदः प्रत्युवाच तम् ।
अस्ति राजन्महाद्वीपं क्षीरोदस्य समीपतः ।
यत्र ते चन्द्रसंकाशा मानवाः सुमहाबलाः ।
महाकाया महावीर्या मेघस्तनितनिःस्वनाः ।
महामात्रा धैर्यवन्तो महापरिघबाहवः ।
श्वेतद्वीपे मया दृष्टा मानवा राक्षसाधिप ।
बलवीर्यसमोपेतान्यादृशांस्त्वमिहेच्छसि ।
नारदस्य वचः श्रुत्वा रावणः प्रत्युवाच ह ।
कथं नारद जायन्ते तस्मिन्द्वीपे महाबलाः ।
श्वेतद्वीपे कथं वासः प्राप्तस्तैस्तु महात्मभिः ।
एतन्मे सर्वमाख्याहि प्रभो नारद तत्त्वतः ।
त्वया दृष्टं जगत्सर्वं हस्तामलकवत्सदा ।
रावणस्य वचः श्रुत्वा नारदः प्रत्युवाच ह ।
अनन्यमनसो नित्यं नारायणपरायणाः ।
तदाराधनसक्ताश्च तच्चित्तास्तत्परायणाः ।
एकान्तभावानुगतास्ते नरा राक्षसाधिप ।
तच्चित्तास्तद्गतप्राणा नरा नारायणं सदा ।
श्वेतद्वीपे तु तैर्वास अर्जितः सुमहात्मभिः ।

---

तथा). —(l. 243) $T_4$ damaged from महा up to सुता in l. 244. $D_7$ महात्मना (for दुरा°). —(l. 244) $V_3$ श्रुत्वा (for सुता). $V_3$ कन्या मनोरमा; $D_9$ राम * * * ते (for राम महामते). —(l. 245) $V_3$ महाराज (for °बाहो). —$D_9$ om. from the post. half up to the prior half of l. 246. $V_3$ च महातपाः; $M_3$ स महायशाः. —(l. 249) $V_3$ तु; $D_{11}$ स (for सु-). —(l. 250) B (ed.) -प्रणाशनीं. —(l. 251) $V_3$ मुनयो (for ऋषयो). —(l. 252) $V_3$ प्रेक्षंते; $D_{11}$ ऊचुस्ते (for ऊचुस्तं). $V_3$ $D_9$ $T_4$ $M_3$ -कुलेक्षणाः. —(l. 253) $V_3$ [ए]नां (for [इ]मां). $V_3$ विद्वान् (for नित्यं). $M_3$ च (for वा).

Colophon: $V_3$ $M_3$ om. —*Sarga no.* (figures, words or both): $D_7$ om.; $D_9$ $T_4$ 43; $D_{10.11}$ 4; K (ed.) 9 (प्रक्षिप्त). —After colophon, $T_4$ concludes with श्रीरामार्पणमस्तु.

—(l. 255) K (ed.) रावणो (for राक्षसो). $D_{7.10.11}$ पृथिवीतले ($D_7$ °तलं). —(l. 256) $V_3$ $D_9$ विजयार्थं. $D_9$ महावीरै (for °शूरं). —$T_4$ damaged from परि up to दैत्य in l. 257. —(l. 257) $V_3$ -यक्षाणां and महाबलं (for -रक्षःसु and बलाधिकम् respy.). —(l. 258) $T_4$ युद्धाय (for °र्थी). $D_9$ तमाह्वयत युद्धार्थं (for the prior half). —(l. 259) $D_{10.11}$ संपर्यटन्. —(l. 260) K (ed.) निवृत्तं तम् (for निवर्तन्तं). $D_9$ स (for [अ]थ). K (ed.) आससादाथ नारदं (for the post. half). —(l. 261) $T_4$ damaged for मेघपृष्ठस्थ. $D_9$ इवांबुदः (for इवापरम्). $V_3$ सतोयमिव तोयदं (for the post. half). —(l. 262) $V_3$ $D_9$ तमभिद्रुत्य; $M_3$ तं चाभिपद्य; K (ed.) तं चाभिसृत्य (for तमभिसृत्य). $D_9$ ह्यभिद्रुत्य (for °वाद्य). —(l. 263) $V_3$ संहृष्टमना; $D_{10.11}$ हृष्टमनसो; $M_3$ °चित्तः स (for हृष्टमनसा). $V_3$ रावणो रक्षसां वरः; $M_3$ रावणो नारदं तथा (for the post. half). —(l. 264) $D_{10.11}$ -भवनं; B (ed.) -भुवनं (for -भवनाल्). $V_3$ सहस्रशः (for ह्यनेकशः). —(l. 265) $V_3$ महाबाहो (for °भाग). —(l. 266) K (ed.) यथासुखं (for यदृच्छया). —After l. 266, $M_3$ ins.:

3* तच्छ्रुत्वा नारदो वाक्यं रावणस्य दुरात्मनः ।

—(l. 267) $M_3$ महात्मा (for नारदः). $V_3$ ह (for तम्). —(l. 268) $V_3$ $M_3$ -द्वीपः; $D_9$ -द्वीपे. —(l. 269) $D_{10.11}$ तत्र (for यत्र). $V_3$ om. ते (subm.). —$T_4$ mostly damaged for l. 270. —(l. 271) $M_3$ महात्मानो (for °मात्रा). $V_3$ महासत्त्वा महाधैर्या (for the prior half). —(l. 273) $V_3$ -मदोत्पेता; $D_9$ -बलोपेतान्; K (ed.) -समायुक्तान् (for -समोपेतान्). $M_3$ बलवीर्यैः सदोपेतान् (for the prior half). $V_3$ यादृशास्. —(l. 277) $V_3$ समस्तम् (for मे सर्वम्). $V_3$ वदतासुर (for प्रभो नारद). —(l. 278) $M_3$ कृत्स्नं (for सर्वं). $V_3$ क * द्दामलकं यथा (for the post. half). —(l. 279) K (ed.) तं (for ह). —(l. 280) $M_3$ -मानसा (for -मनसो). —(l. 281) $D_7$ सदा (for तद्). —(l. 283) $V_3$ तदति- (for तद्गत-). K (ed.) श्रिताः (for सदा). $V_3$ $D_9$ $M_3$ रावण ($D_9$ °क्षस) ते त($M_3$ स)दा; $T_4$ रावण सर्वदा (for नारायणं सदा). —(l. 284) Metri causa. $V_3$ $M_3$ यैर् (for तैर्). $V_3$ वासम्. $T_4$ $M_3$ आर्जितः. $D_9$ $M_3$ तु (for सु-). K (ed.) पुण्यकृत्तमैः (for सुमहात्मभिः). $V_3$ अर्जितं सुकृतात्मभिः (for the post.

ये हता लोकनाथेन शार्ङ्गमानम्य संयुगे।
चक्रायुधेन देवेन तेषां वासस्त्रिविष्टपे।
न हि यज्ञफलैस्तात न तपोभिर्न संयमैः।
न च दानफलैर्मुख्यैः स लोकः प्राप्यते सुखम्।
नारदस्य वचः श्रुत्वा दशग्रीवः सुविस्मितः।
ध्यात्वा तु सुचिरं कालं तेन योत्स्यामि संयुगे।
आपृच्छय नारदं प्रायाच्छ्वेतद्वीपाय रावणः।
नारदोऽपि चिरं ध्यात्वा कौतूहलसमन्वितः।
दिदृक्षुः परमाश्चर्यं तत्रैव त्वरितं ययौ।
स हि केलिकरो विप्रो नित्यं च समरप्रियः।
रावणोऽपि ययौ तत्र राक्षसैः सह राघव।
महता सिंहनादेन दारयन्स दिशो दश।
गते तु नारदे तत्र रावणोऽपि महायशाः।
प्राप्य श्वेतं महाद्वीपं दुर्लभं यत्सुरैरपि।
तेजसा तस्य द्वीपस्य रावणस्य बलीयसः।
तत्तस्य पुष्पकं यानं वातवेगसमाहतम्।
अवस्थातुं न शक्नोति वाताहत इवाम्बुदः।
सचिवा राक्षसेन्द्रस्य द्वीपमासाद्य दुर्दृशम्।
अब्रुवन्रावणं भीता राक्षसा जातसाध्वसाः।
राक्षसेन्द्र वयं मूढा भ्रष्टसंज्ञा विचेतसः।
अवस्थातुं न शक्ष्यामो युद्धं कर्तुं कथंचन।
एवमुक्त्वा दुद्रुवुस्ते सर्वे एव निशाचराः।
रावणोऽपि हि तद्यानं पुष्पकं हेमभूषितम्।
विसर्जयामास तदा सह तैः क्षणदाचरैः।
गते तु पुष्पके राम रावणो राक्षसाधिपः।
कृत्वा रूपं महाभीमं सर्वराक्षसवर्जितः।
प्रविवेश तदा तस्मिञ्छ्वेतद्वीपे स रावणः।
प्रविशन्नेव तत्राशु नारीभिरुपलक्षितः।
एकया स स्मितं कृत्वा हस्ते गृह्य दशाननः।
पृष्टश्चागमनं ब्रूहि किमर्थमिह चागतः।
को वा त्वं कस्य वा पुत्रः केन वा प्रहितो वद।
इत्युक्तो रावणो राजन्क्रुद्धो वचनमब्रवीत्।
अहं विश्रवसः पुत्रो रावणो नाम राक्षसः।
युद्धार्थमिह संप्राप्तो न च पश्यामि कंचन।
एवं कथयतस्तस्य रावणस्य दुरात्मनः।
प्राहसंस्ते ततः सर्वे सुस्वनं युवतीजनाः।
तासामेका ततः क्रुद्धा बालवद्गृह्य लीलया।
भ्रामितस्तु सखीमध्ये मध्ये गृह्य दशाननम्।
सखीमन्यां समाहूय पश्य त्वं कीटकं धृतम्।
दशास्यं विंशतिभुजं कृष्णाञ्जनसमप्रभम्।
हस्ताद्धस्तं स च क्षिप्तो भ्राम्यते भ्रमलालसः।
भ्राम्यमाणेन बलिना राक्षसेन विपश्चिता।
पाणावेकाथ संदष्टा रोषेण वनिता शुभा।
मुक्तस्तयाशुभः कीटो धुन्वन्त्या हस्तवेदनात्।
गृहीत्वान्या तु रक्षेन्द्रमुत्पपात विहायसा।

half). —(l. 285) $M_3$ आयम्य (for आनम्य). —(l. 286) $V_3$ चक्रं शुर्खेन देवस्य (corrupt) (for the prior half). —(l. 287) $V_3$ नान्यैस्तपोभिर्नैव (for तात न तपोभिर्न). —(l. 288) $D_9$ संख्यः (for मुख्यैः). $V_3$ स्वयं (for सुखम्). —(l. 290) $V_3$ हरिं (for तेन). —(l. 291) $D_7$ आपृच्छन्. $V_3$ श्वेतद्वीपं स; $D_7$ श्वेतद्वीपस्य. —$V_3$ lacuna for l. 292. —(l. 296) $V_3$ $D_9$ $M_3$ नादयन् (for दारयन्). —(l. 297) $T_4$ रावणे and नारदो (for नारदे and रावणो). —(l. 298) $M_3$ प्राप (for प्राप्य). $V_3$ महद्वीपं. —(l. 299) $D_9$ $T_4$ द्वीपस्य तेजसा राम (for the prior half). —(l. 300) $V_3$ तत्रास्य (for तत्तस्य). $V_3$ -समं महत्; $T_4$ $M_3$ -गतं ($T_4$ °मं) हतं (for -समाहतम्). —(l. 301) $V_3$ om. from the post. half up to the prior half of l. 305. —(l. 302) $M_3$ दुद्रुवुः (for दुर्दृशम्). —(l. 304) $M_3$ विचेतनाः (for °तसः). —(l. 305) $D_9$ om. कर्तुं. $V_3$ किं पुनर्योद्धुमाहवे (for the post. half). —(l. 307) $D_9$ $M_3$ च (for हि). —(l. 308) $D_9$ सहितैः. —(l. 309) $D_{9-11}$ गतं तु पुष्पकं. —(l. 310) $V_3$ -संयुतः; K (ed.) -वर्जितं (for -वर्जितः). —(l. 311) $V_3$ रम्यं (for तस्मिन्). $D_9$ $T_4$ $M_3$ राक्षसः (for रावणः). $V_3$ श्वेतद्वीपं स राक्षसः (for the post. half). —After l. 311, $V_3$ ins.:

4* सर्वत्र कुसुमामोदं सर्वमोषधिसंयुतम्।
पुण्यगन्धावरुद्धं तद्वायुना द्वीपमावृतम्।

—(l. 312) $V_3$ [अ]सौ (for [आ]शु). —After l. 312, $V_3$ wrongly ins.:

5* विश्वमेकाभिर्देवस्य विष्णोः क्षीरोदशायिभिः।

—After l. 312, $D_{11}$ repeats l. 293–l. 298. —(l. 313) $M_3$ सुस्मितं. $D_{10.11}$ दशाननं; K (ed.) स रावणः (for दशाननः). $V_3$ स ताभिः सहसाश्रित्य परिवार्य समंततः. —(l. 314) $V_3$ त्वं समागतः (for इह चागतः). —(l. 315) K (ed.) हि (for first वा). —(l. 316) $D_{11}$ [उ]क्त्वा (for [उ]क्तो). $V_3$ राम (for राजन्). —(l. 317) $V_3$ राक्षसेश्वरः; $D_9$ राक्षसाधिपः (for नाम राक्षसः). —(l. 318) $M_3$ किंचन. —(l. 319) $V_3$ नामगोत्र- (for रावणस्य). —(l. 320) $D_9$ प्रहसंस्तास; $D_{10.11}$ प्रहसंते; $T_4$ प्रहसंत्यस. $D_9$ $T_4$ सर्वाः. $M_3$ सुस्वरं; K (ed.) सस्वनं. $V_3$ युद्धायागमनं सर्वा जहसुः संघशः स्त्रियः. —(l. 321) $M_3$ तासामेव ततः क्रुद्धो; K (ed.) एकया क्रुद्धया तासां (for the prior half). $V_3$ बालगृह्याग्रलीलया; $M_3$ बालया गृह्य चान्यया (for the post. half). —(l. 322) $V_3$ भ्रामयित्वा. $V_3$ सा निक्षिप्य तमब्रवीत्; $M_3$ विक्षिप्तः स दशाननः (for the post. half). —(l. 323) $D_9$ $T_4$ $M_3$ समागृह्य (for °हूय). $M_3$ कीटमागतं. $V_3$ सखे गच्छत पश्यध्वं दशास्यं कीटमागतं. —(l. 324) $V_3$ तमेवं (for दशास्यं). —(l. 325) $D_{7.11}$ च सं($D_{11}$ *)क्षिप्तो. $M_3$ भ्रनलालसः (for भ्रम°). —(l. 327) $D_9$ पाणावेकांगसंदष्टा (for the prior half). —(l. 328) $D_7$ तया * भः; $D_9$ तस्याः शुभः; $T_4$ K (ed.) तया ततः (K [ed.] शुभः) (for तयाशुभः). $D_9$ धुनत्या. —(l. 329) $M_3$ तु लंकेशम्; K (ed.) राक्षसेंद्रम् (for तु रक्षेन्द्रम्). —For lines 325–329, $V_3$ subst.:

6* कौतूहलं मे सुमहद्येन युद्धस्य कार्मुकम्।
एवमुक्त्वा तया क्षिप्तो हस्ताद्धस्तं दशाननः।

ततस्तामपि संक्रुद्धो विददार नखैर्भृशम् ।
तया स ह विनिर्धूतः सहसैव निशाचरः ।
पपात सोऽम्भसो मध्ये सागरस्य भयातुरः ।
पर्वतस्येव शिखरं यथा वज्रविदारितम् ।
प्रापतत्सागरजले तथासौ विनिपातितः ।
एवं स रावणो राम श्वेतद्वीपनिवासिभिः ।
युवतीभिर्विगृह्याशु भ्रामितश्च ततस्ततः ।

आक्षिप्यमाणो ह्यबलः समाकुलितविग्रहः ।
ततस्ताः सोऽद्दशत्पार्श्वे करजै रघुनन्दन ।
मुमोच साशुभं क्रुद्धा दृष्ट्वैनं विकृताननम् ।
विकृतां सुमुखीं दृष्ट्वा ततो मोहसमन्विता ।
महामाया महावेगा देवी योगीश्वरी तथा ।
रावणं गृह्य सहसा गरुडा नित्यविक्रमा ।
करावतूलनं कृत्वा खं जगाम मनोजवा ।

—(l. 330) $D_9$ अभि- ( for अपि ). $V_3$ स तामपि रुषाविष्टो ( for the prior half ). —(l. 331) $D_9$ $T_4$ $M_3$ च; K (ed.) हि ( for ह ). $V_3$ ततस्तया ( for तया स ह ). —(l. 332) $V_3$ सहसा; $M_3$ चांभसो ( for सोऽम्भसो ). —(l. 333) $D_9$ शिखरे. $V_3$ महाशनि-; ( for यथा वज्र- ). —$V_3$ om. l. 334. —(l. 334) $D_9$ प्रापयन्. $D_7$ सागरतले. $D_7$ तयासौ. $M_3$ जले तस्थौ निपातितः ( for the post. half ). —(l. 335) $V_3$ $D_9$ नाम ( for राम ). —(l. 336) $V_3$ निगृह्याशु. $M_3$ स्त्रीजनैर्विनिगृह्याशु ( for the post. half ). —After l. 336, $V_3$ ins.; while $M_3$ K (ed.) ins. after l. 338 :

7* ततः स सागरजलाज्जलक्लिन्नशिरोरुहः ।
दक्षिणं तीरमासाद्य चिन्तयामास विस्मितः ।
ये मया निर्जिता लोका न तेषु भयमीदृशम् ।
स्वभावतोऽल्पवीर्याणां विरुद्धं योषितामिदम् ।
नूनमेतस्य लोकस्य मानवाः प्रभविष्णवः ।
स्त्रीरूपविग्रहधरा यान्ममाचष्ट नारदः ।
बलवद्भिस्तु संधेयमिति संचिन्त्य निश्चितम् ।
भूयस्तासां प्रवृत्त्यर्थं तद्वनं समलोडयत् ।
अथापश्यन्महात्मानं पितामहसुतं प्रभुम् ।
सनत्कुमारमासीनं सर्वयोगभृतां वरम् ।
जाज्वल्यमानं तपसा समिद्भिरिव पावकम् ।
अपश्यद्दक्षिणे पार्श्वे विचरन्तं गुहाश्रयम् ।
स तं दृष्ट्वा तपोवृद्धमभिवाद्य कृताञ्जलिः ।
व्रीडितः परिपप्रच्छ ब्रह्मर्षिं सत्यवादिनम् ।
भगवन्केन लोकोऽयं कल्पितः सुमहात्मना ।
के वा लोके वसन्त्यस्मिन्सर्वज्ञानवतां वर ।
किं च त्वं ध्यायसे ब्रह्मञ्शंस मे सुसमाधिना ।
एतन्मे ब्रूहि तत्सर्वं सर्वज्ञो ह्यसि मे श्रुतः ।
एवमुक्तो महातेजा विदित्वा तस्य हृद्गतम् ।
उवाच वाक्यं प्रहसञ्श्रूयतामिति पुत्रक ।
यो हि वै सर्वमेवेदं बिभर्ति सचराचरम् ।
त्रैलोक्यं संभूतात्मा यस्योत्पत्तिर्न विद्यते ।
यमाहुर्वेदविदुषः पुरुषं तमसः परम् ।
आदित्यरूपमजरं परमात्मानमीश्वरम् ।
यस्य नाभिभवो ब्रह्मा पिता मम पितामहः ।
कैलासनिलयः श्रीमान्भवश्च क्रोधसंभवः ।
यं समाश्रित्य विबुधा विधिना हविरध्वरे ।
पिबन्ति चामृतं हृष्टाः परिभूय दितेः सुतान् ।
यस्य श्वासानिलोद्भूताः स्त्रियस्त्वामपराजितम् ।
गृहीत्वा सुमहावेगाश्चिक्षिपुः सागराम्भसि ।
येन दैत्या महावीर्या दानवाश्च सनैऋताः ।
निहता बहुरूपेण बहवो बाहुशालिनः ।
तेनायं लोकनाथेन कल्पितः सुमहात्मना ।
गोविन्देन निवासार्थं लोको वै सुमहात्मना ।
अर्चयन्ति जगन्नाथं नारायणपरायणाः ।
अद्वेष्टाः सर्वभूतेषु महायोगबलाश्रयाः ।
यजन्ति पञ्चभिर्यज्ञैः सततं मधुसूदनम् ।
एकान्तिनो महासत्त्वा वसन्ति सुसमाहिताः ।
यः पुराणे च वेदे च पाञ्चरात्रे च पठ्यते ।
सांख्ययोगे च मुनिभिर्ध्यायते चेज्यते च यः ।
मुनिभिर्देवसंघैश्च स्थाप्यते भगवान्हरिः ।
मधुकैटभयोर्हन्ता यस्तमन्वेष्टुमर्हसि ।
पितामहोऽपि तं देवं न च जानाति रावण ।
यस्तु नित्यं विजानाति हरिं नारायणं विभुम् ।
जगदाभरणं पुण्यं तस्य मोक्षो न संशयः ।
एतच्छ्रुत्वा मुनेर्वाक्यं प्रसन्नेनान्तरात्मना ।
पुनरेव ततो रक्षः पप्रच्छ मुनिपुंगवम् ।
कथं च दृश्यते देव कथं च श्रूयते भुवि ।
कथं च क्रीडते लोके द्रष्टुं वा शक्यते कथम् ।
कियत्कालेन वा ब्रह्मँल्लोकोऽयं तपसा मया ।
शक्यः प्रवेष्टुं तद्ब्रूहि सर्वं हि विदितं तव ।
आकर्ण्य सस्पृहं तस्य वाक्यं वाक्यविशारदः ।
प्रत्युवाच मुनिर्धीमांस्तत्सर्वमनुपूर्वशः ।
स हि सर्वगतो देवः सूक्ष्मोऽव्यक्तः सनातनः ।
येन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ।
स भूमौ दिवि पाताले पर्वतेषु वनेषु च ।
सागरेषु च सर्वेषु वसतीह सरित्सु च ।
अहश्च रात्रिश्च उभे च संध्ये
दिवाकरश्चैव यमश्च सोमः ।
स एव कालो वरुणः स एव
स ब्रह्मरुद्रेन्द्रमुखः स चाग्निः ।
ओंकारो भूर्भुवः स्वश्च गायत्री संध्य एव च ।
धराधरधरो देवः सोऽनन्त इति विश्रुतः ।
विद्योतति ज्वलति वर्षति वाति पाति
गर्जत्युपैति तपते दहते स चैव ।
लोकान्सृजत्यवति संहरते सदैव
दैत्यान्स एव दहते जगति प्रसह्य ।
स न शक्यः सुरैर्द्रष्टुं नासुरैर्न च पन्नगैः ।
प्रसादं कुरुते यस्य स वै तं द्रष्टुमर्हति ।

तद्गतैस्तद्गतप्राणैः शुचिभिस्तत्परायणैः ।
शक्यः प्रवेष्टुं लोकोऽयं ज्ञाननिर्धूतकिल्बिषैः ।
एवंविधैरयं लोकः प्राप्यते पुरुषोत्तमैः ।
अकामकारिभिर्देवैरक्रोधैर्दग्धतामसैः ।
यश्चैव सुमहाकायः प्रविष्टो लोकमव्ययम् ।
आस्ते तथैव हरिणा कृता तेन महापुरी ।
अष्टाविंशे युगे प्राप्ते मनोरस्य विशेषतः ।
वैष्णवीं मूर्तिमाविश्य लोकमेनं प्रवेक्ष्यसि ।
नातः परतरं श्रोतुं मत्तो वै राक्षसेश्वर ।
उत्तिष्ठ गच्छ भद्रं ते प्राप्स्यसे गतिमीप्सिताम् ।
एवमुक्तस्तथेत्युक्त्वा तं प्रणम्याभिपूज्य च ।
समासाद्य महत्सैन्यं ययौ लङ्कामशङ्कितः ।
नारदोऽपि प्रहृष्टात्मा दृष्ट्वा सर्वमशेषतः ।
द्रुतं मेरुमुपागम्य विशते तां शुभां सभाम् ।
तस्यां ब्रह्माणमासीनमभिवाद्य कृताञ्जलिः ।
देवान्संश्रावयामास समीपे पद्मयोनिनः ।
निशम्य सुमहत्पुण्यमाख्यानं पद्मसंभवः ।
नारदं संपरिष्वज्य प्राह भूतभविष्यवित् ।
हिरण्यकशिपुः पूर्वं बभूवैष निशाचरः ।
अवध्यो बहुभिर्योगैर्वरदानान्महाबलः ।
स कदाचिन्महात्मानं पद्मनाभमधोक्षजम् ।
सभायां गर्वयन्दर्पान्नृसिंहवपुषं हरिम् ।
समुद्धृत्य नखैस्तेन दीर्यमाणस्य संयुगे ।
रक्तसंस्पर्शजं दिव्यं चक्षुर्दैत्यपतेरभूत् ।
स तु तद्राक्षसं जन्म तस्मान्मानुष्यजन्मनः ।
भाविनीं निधनप्राप्तिं पश्यन्दिव्येन चक्षुषा ।
श्रीवत्साङ्कं तदङ्कस्थः प्राह दैत्यः शनैरिदम् ।
नखैर्विभिन्नहृदयः क्षणं दीनः कृताञ्जलिः ।
तप्तहाटककेशान्त ज्वलत्पावकलोचन ।
वज्रायुधनखस्पर्श दिव्यसिंह नमोऽस्तु ते ।
कैटभारे हरे देव विष्णो विपुलविक्रम ।
त्राहि मां भूतभव्येश शरणागतवत्सल ।
त्वद्धते राक्षसे भावे मानुषे च पदे विभो ।
प्राप्नुयां त्वन्मयो लोकं लोकनाथ प्रसीद मे ।
एवमुक्तस्तथेत्युक्त्वा ययौ दैत्यपतिं हरिः ।
हंसयुक्तविमानेन किङ्किणीजालमालिना ।
स एव च पुनस्तत्र राक्षसोऽभून्महासुरः ।
राक्षसेन विधानेन सदा तद्भावभावितः ।
मानुषत्वमुपागम्य लोकान्हन्तुं कृतोद्यमम् ।
तृतीयं च हतं तेन श्वेतद्वीपं प्रवेक्ष्यति ।
वैष्णवं तेज आविश्य यथोक्तं ब्रह्मवादिना ।
मयापि चेहसंस्थेन दृष्टमेवाक्षदर्शनात् ।
मयावलम्बितं सर्वं देवस्य परमात्मनः ।
यस्त्विदं पठते नित्यं पुण्यमाख्यानमादितः ।
नारदोक्तं मनुष्यो वै स याति परमां गतिम् ।
वैष्णवं परमाख्यानं सर्वपापप्रणाशनम् ।
नित्यं च शृणुयाद्यश्च सोऽपि पापात्प्रमुच्यते ।
जातिस्मरत्वं विप्रत्वं कुले महति संभवम् ।
सर्वज्ञतां च लभते नात्र कार्या विचारणा ।
स च संस्तूय च हरिं प्रविष्टः कमलोद्भवः ।
अनुभाष्य सुरान्सर्वान्ययौ स्वं लोकमीश्वरः ।
नारदस्तु ततस्तस्मान्मेरुपृष्ठं परिभ्रमन् ।
स तु मामाजगामाशु दिदृक्षुर्द्वादशात्मकम् ।
स मया शास्त्रतः सम्यगभिवाद्याभिपूजितः ।
आख्यानमिदमाचष्ट ममानुग्रहकाम्यया ।
मयाप्येतत्सदस्येत्य पावनार्थं मनोरमम् ।
भक्त्या तव महाबाहो कथामृतमुदाहृतम् ।

[ Vs var. are as follows K (ed.) Var. are occasionally cited. —(l. 1) om. स (subm.). —(l. 3) बलम् (for भयम्). —(l. 6) याः समाचष्ट. —(l. 7) च (for तु). स * यम् (for संधेयम्). इति म * ह्यधिश्रितः (for the post. half). —(l. 8) तेषां (for तासां). प्रगृह्यर्थं (for प्रवृत्त्यर्थं). तत्र तं प्रविलोभयत् (for the post. half). —(l. 9) पितामहमजं. —(l. 10) सनत्कुमारभावार्थे (for the prior half). —(l. 12) द्वीपस्य (for अपश्यद्). वैजयन्तमहाभयम् (for the post. half). —(l. 15) तु (for सु-). —(l. 16) [अ]स्त्र (for [अ]स्मिन्). —(l. 17) वा (for च) ध्यायसि. परमेण समाधिना (for the post. half). —(l. 18) एतत्सर्वं प्रब्रूहि (subm.) (for the prior half). संमतः; K (ed.) विश्रुतः (for मे श्रुतः). —(l. 19) तद्गतं (for हृद्गतम्). —(l. 20) विप्रः (for वाक्यं). पुत्रक श्रूयतामिति (for the post. half). —(l. 21) [ए]ष (for वै). —(l. 23) प्रकृतेः (for तमसः). —(l. 24) अव्ययं (for ईश्वरम्). —(l. 25) वाक्य- (for नाभि-). —(l. 26) lacuna for कैलासनिलयः. —(l. 27) विविधा (for विधिना). —(l. 29) त्रिदिवस्त्वापराजिताः (for the post. half). —om. l. 30–31. —(l. 32) K (ed.) -शालिना. —(l. 33) तु (for सु-). —om. l. 34. —(l. 35) यैर्यजंति महात्मानं (for the prior half). —(l. 36) अद्वेषाः. —(l. 37) यजंतः. —(l. 39) पंचरात्रोपयाजते (for the post. half). —(l. 40) सांख्ययोगेन. जयते चेष्टते (for ध्यायते चेज्यते). —(l. 42) यस्तरेतुं त्वमर्हसि; K (ed.) कस्तमन्वेष्टुमर्हति (for the post. half). —(l. 43) विजानाति (for च जा°). —(l. 44) प्रभुं (for विभुम्). —(l. 45) यस्य (for तस्य). —(l. 47) राम (for रक्षः). -सत्तमं (for -पुंगवम्). —(l. 48) श्रूयते च कथं भुवि (for the post. half). —(l. 49) Vs om. च (subm.). —(l. 50) कथं (for कियत्). —(l. 53) श्रीमांस् (for धीमांस्). अथ सर्वशः (for अनुपूर्वशः). —For l. 54–66, cf. l. 179–190 of No. 3. —(l. 55) तेन (for येन). —(l. 57) वसते समविश्य च (for the post. half). —(l. 60) च वासवः (for second स एव). —(l. 61) -तनुः (for -मुखः). —(l. 64) उद्योतते (for विद्योतति). om. (hapl.) पाति. —For l. 65–67 subst. :

7(A)* जागर्ति उत्पाति तपति दहतेऽपि चैकः
लोकान्सृजन्स हर्षते सदैव ।
दैत्यार्दनो जगति यो भवति प्रसह्य

